# PREFACE

The Cāndra Vyākaraṇa was the first great revised edition of the Aṣṭādhyāyī of Pāṇini, embodying all the suggestions and corrections of Kātyāyana and Patañjali. It has profoundly influenced later systems of Sanskrit grammar and appears to have been particularly popular in Bengal, Bengali commentators on grammar and lexicon quoting profusely from this system. It marks a revolt against the use of arbitrary monosyllabic technical terms and Candra tries to avoid studiously all such terms (*Candropajñam a-saṁjñakaṁ vyākaraṇam*). How far he has succeeded in this attempt will be considered in the Introduction which will form a part of Volume II of this work.

Though this system of grammar was so popular in Bengal even a few centuries ago, not a single manuscript of the work has been preserved here. LIEBICH did a great service to the cause of Sanskrit learning by bringing out two edditions of the Cāndra Vyākaraṇa, the first containing the text only and the second the text along with the Vṛtti which is attributed to Candra himself. LIEBICH's books have long gone out of print and the need of a new edition was felt strongly by scholars, especially by grammarians and lexicographers. No apology is therefore necessary for the present edition, which though based upon LIEBICH, utilises the quotations in the commentaries of lexicons and of other systems of grammar current in Bengal and suggests better readings in many cases. For facility of comparison, the views of Pāṇini, Kātyāyana and Patañjali are quoted under every rule. Bhoja's *Sarasvatī-kaṇṭhābharaṇa* is the second great revised edition of Pāṇini, and rules from Bhoja also have been given in every case.

The second volume will contain the remaining three chapters of our grammar along with Candra's Dhātupāṭha, alphabetical index of rules, Uṇādi Sūtras with index, introduction, Errata, etc., etc.

प्रत्याहारार्थम्। तस्योच्चारणं भवत्येकेन। ऋकोऽणो रलौ [१।१।१५] इत्यकारेण। जातिनिर्देशश्चायम्*।

ॠ ऌ क्॥ २॥ [शि० २]

ॠ ॡ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवति चतुर्भिः। अकोऽकि दीर्घः [५।१।१०६] इत्यकारेण, इको यणचि [५।१।७४] इतीकारेण, उगितः [५।२।४४] इत्युकारेण, ऋकोऽणो रलौ [१।१।१५] इत्यृकारेण। अकारादयो वर्णा प्रचुरप्रयोगविषयाः, तेषां मुज्ञानमुपदेशप्रयोजनम्। ऌकारस्तु क्लृपिस्थ एव प्रयुज्यते, क्लृपेश्च पूर्वत्रासिद्धम् [६।३।२७] इति लत्वमसिद्धम्, तत ऋकार एवाच्कार्याणि भविष्यन्तीति किमर्थम् ऌकार उपदिश्यते†। लत्वविधानाद् यानि पराण्यच्कार्याणि

*तथाच महाभाष्यम्। अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति, तथे-वर्णाकृतिः, तथोवर्णाकृतिः। अत्र कैयटः। अकारजातिः सर्वप्रदेशेषु निर्दिश्यते। नान्तरीयकस्तु व्यक्तिनिर्देशस्तत्र। [शि० सू० १, वा १३]।

† अस्य हि ऌकारस्याल्पीयांश्चैव प्रयोगविषयः। यश्चापि प्रयोगविषयः सोऽपि क्लृपिस्थस्यैव। क्लृपेश्च लत्वमसिद्धम्। तस्यासिद्धत्वादृकारस्यैवाच्-कार्याणि भविष्यन्ति। नार्थ ऌकारोपदेशेन। अत उत्तरं पठति—ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः। ऌकारोपदेशः क्रियते यदृच्छाशब्दार्थोऽ-शक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च। यदृच्छाशब्दार्थस्तावत्। यदृच्छया कश्चिद् ऌतको नाम, तस्मिन्नच्कार्याणि यथा स्युः। दध्य् ऌतकाय देहि। मध्व्-ऌतकाय देहि। उदङ् ङ् ऌतकोऽगमत्। प्रत्यङ् ङ् ऌतकोऽगमत्। चतुष्टयी शब्दानां प्रवृत्तिः। जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाः। अशक्तिजानुकरणार्थः। अशक्तया कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्य ऌतक इति प्रयुक्तम्। तस्यानुकरणं ब्राह्मण्य् ऌतक इत्याह, कुमार्य् ऌतक इत्याहेति॥ प्लुत्याद्यर्थश्च ऌकारोपदेशः कर्तव्यः। के पुनः प्लुत्यादयः?

प्लुतिर्द्विर्वचनस्वरिताः। क्लृ३प्तशिखः। क्ल्ँप्तः। प्रक्लृप्तः। प्लुत्यादिषु कार्येषु क्लृपेर्लत्वं सिद्धं तस्य सिद्धत्वादच्कार्याणि न सिध्यन्ति। तस्माद् ऌकारोपदेशः क्रियते। [द्वितीयशिवसूत्रगतं भाष्यम्]।

तान्य् ऌकारे यथा स्युरिति। कानि पुनस्तानि? प्लुतः स्वरितो द्विर्वचनञ्च। क्लृ३प्तशिखः प्रक्लृप्तः क्लृप्तवानिति। यच्चाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते, तत्स्थस्याप्य् ऌकारस्याच्कार्यप्रतिपत्त्यर्थमुपदेशः क्रियते। ऋतक इति प्रयोक्तव्ये शक्तिवैकल्यात् कुमार्या ऌतक इति प्रयुक्तः*। तमन्योऽनुकरोति—कुमार्य् ऌतक इतीयमाहेति।

ए ओ ङ् ॥ ३ ॥ [ शि०३]

ए ओ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते† ङकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवत्येकेन—इकोऽदेङ क्रियार्थायाः [६।२।१] इत्येकारेण।

ऐ औ च् ॥ ४ ॥ [ शि०४ ]

ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवति चतुर्भिः। अच आदैज्-क्षेतुररक्तविकारे [ ५।२।३६ ] इत्यकारेण, खितीच एकाचोऽमः [५।२।४] इतीकारेण, एचोऽयवायावः [५।१।७५] इत्येकारेण, अजागृणिश्वीनां सिच्यतङ्यादैच् [ ६।१।३ ] इत्यैकारेण।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न।
ज्ञापकादप्रधानत्वाल्लोपश्च बलवानिति ॥‡

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति†।

---

* The neuter is expected in such cases. Supply शब्दः.

† पूर्वांश्च is not found in Liebich.

‡ प्रत्याहार इति। तथाच पञ्चमशिवसूत्रगतं महाभाष्यम्—

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ॥ य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेषु ग्रहणं कस्मान्न भवति? किं च स्यात्? दधि णकारीयति मधु णकारीयति। इको यणचि [ ६।१।७७ ] इति यणादेशः

तच्छायानुकारिणो हि ते, न पुनस्त एव। पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः। नुग्विधिलादेशणत्वेष्वृकारे प्रतिविधातव्यम्।

हयवरलण् ॥५॥

ह् य व र ल इत्येतान् वर्णानुपदिश्य पूर्वाश्चान्ते णकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवति द्वाभ्याम्। इणः षः [६।४।३४] इतीकारेण, इको यणचि [५।१।७४] इति यकारेण। इण्ग्रहणानि सर्वाण्यनेन णकारेण, अण्ग्रहणानि तु पूर्वेण णकारेण। जातिनिर्देशश्चायम्। अयं रेफो यकारात् पर उपदिश्यते। तस्य यरुपादाने ययुपादाने यमुपादाने चोपादानं सति प्रातर्नयतीत्यत्र यरो ञमि ञम् वा [६।४।१४०] इति ञमादेशः प्राप्नोति, नदीह्रद इत्यत्राचो रहाद् द्वे [६।४।१४१] इति द्विर्वचनं प्राप्नोति, नरं रथेनेत्यत्रानुस्वारस्य ययि यम् [६।४।१५१] इति यमादेशः प्राप्नोति। नैष दोषः। आकृतौ पदार्थे समुदाये सकृल्लक्ष्ये लक्षणं प्रवर्तत इति दर्शने यरो ञमि ञम् वा [६।४।१४०] इति ञम् प्रत्यासन्नतरो भवतीत्येवमेतत् प्रवर्तते। तदनेन गकारादीनां ङकारादयो ये यथास्वं स्थानतो गुणतश्च प्रत्यासन्नतरास्ते विहिताः। ये च न स्थानतो नापि गुणतश्च* स्थानमात्रेण गुणमात्रेण च* ते सर्वे निवर्तिता इति स्थानमात्रेण प्रत्यासन्नो

प्रयत्नेत॥ आचारात्॥ क्विनिदमाचाराद्दिति? आचार्याणामुपचारात्। गतेष्वाचार्या अच्कार्याणि कृतवन्तः॥ अप्रधानत्वात्॥ अप्रधानत्वाच्च। न तच्चस्यैतेषामत्र प्राधान्येनोपदेशः क्रियते। क्व तर्हि? हल्षु। कुत एतत्? एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्षु हलो हल्षु॥ लोपस्य बलवत्तरः। लोपः सत्यपि तावद् भवति।

* इदं धनुराद्ध्यमुद्रितकमेव। काशिकायां तु समीचीनः पाठ उपलभ्यते—ये तु न स्थानतो नापि गुणतः स्थानमात्रेण गुणमात्रेण वान्तरतमास्ते सर्वे निवर्तिता इति स्थानमात्रान्तरतमो रेफस्य ञकारो न भवतीति।

रेफस्य णकारो न भवति। द्विर्वचनेऽपि रेफस्य यरन्तर्भावेऽपि सति यत् कार्यित्वं प्राप्तं तत् साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। अनुस्वारस्य ययि यम् [६।४।१५१] इत्येतदप्यनुस्वारस्य निमि प्रत्यासन्नतरं सकृदेव यमं विदधाति। न च रेफस्य निमित्तस्यानुनासिकः प्रत्यासन्नतरोऽस्तीति न भविष्यति नरं रथेनेत्यत्र। अत्र हकारादिष्वकार उच्चारणार्थः, अन्यत्र प्रयोजनाभावात्, हलामपि जातिनिर्देशात् ॥५॥

It is a thousand pities Candra did not remove the most glaring defect of the S'ivasūtras. अयं णकारो द्विरनुबध्यते पूर्वश्च परश्च। तत्राण्ग्रहणेष्विण्ग्रहणेषु च सन्देहो भवति पूर्वेण वा स्युः परेण वेति। A sūtra should, on all accounts, be free from *ambiguity*. Probably Candra thought that *since* अ *stood* first it would form the pratyāhāra अण् with the first ण and since इ came after अ it would form the pratyāhāra इण् with the second ण, so that there was no chance of any ambiguity arising. Acc. to the Pāṇini school in the rule अणुदित् सवर्णस्य चाप्रत्ययः *i.1.69 alone the pratyāhāra* अण् *is formed* with the second ण, in all other cases it is formed with the first ण. पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः। ऋतेऽणुदित् सवर्णस्येत्येतदेकं परेण तु॥ Patañjali says: किं पुनर्वर्णोत्सत्ताविव णकारो द्विरनुबध्यते? एतज् ज्ञापयत्याचार्यो भवत्येषा परिभाषा—व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति। अणुदित् सवर्ण [१।१।६९] परिहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहणमिति व्याख्यास्यामः।

*It will be noticed that Candra combines the two* S'ivasūtras ह य व र ट् and लण् into one, viz. ह य व र ल ण्. With ट् only one pratyāhāra viz. अट् is used in grammar. This अट् occurs in Pāṇini viii.3.3, 9 and viii.4.2, 63. Of these

viii.3.3 दीर्घादटि समानपादे and viii. 3.9 आतोऽटि नित्यम् treat of phenomena peculiar to the Vedas. अट्कुप्वाङ्नुम्व्यवायेऽपि viii. 4. 2 no doubt excludes ल by the use of the pratyāhāra अट्. Candra puts it the other way and mentions the letters the intervention of which prevents णत्व in his rule चुटुतुलशर्व्यवाये vi.4.132. As regards शश्छोऽटि viii. 4. 63, following in the footsteps of Kāty yana who framed the Vārttika: छत्वममि तच्छ्लोकेन तच्छ्मश्रुणा तच्छ्लोकेनेति प्रयोजनम् Candra says: शश्छोऽमि vi. 4. 157.

. अयं रेफो यकारवकाराभ्यां पूर्वं एवोपदिश्येत ह र य व टिति, पर एव वा यथान्यासमिति? कश्चात्र विशेषः? रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥ २ ॥ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः। अनुनासिकस्य स्वर्नयति प्रातर्नयतीति यरोऽनुनासिकेऽनुनासिको वा [पा० ८।४।४५] इत्यनुनासिकः प्राप्नोति। द्विर्वचनस्य। मद्र ह्रदः भद्र ह्रदः इति यरः [पा० ८।४।४६] इति द्विर्वचनं प्राप्नोति॥ परसवर्णस्य। कुण्डं रथेन। वनं रथेन। अनुस्वारस्य ययि० [८।४।५८] इति परसवर्णः प्राप्नोति॥ अस्तु तर्हि पूर्वोपदेशः॥ पूर्वोपदेशे किंत्वप्रतिषेधो व्यलोपवचनं च॥ ५॥ यदि पूर्वोपदेशः किंत्वं प्रतिषेध्यम्। देवित्वा दिदेविषति। रलो व्युपधात्० [पा० १।२।२६] इति किंत्वं प्राप्नोति। नैष दोषः। नैवं विज्ञायते रलो व्युपधादिति। किं तर्हि? रलः अव्युपधादिति। किमिदं मव्युपधादिति? अवकारान्ताद् व्युपधादव्युपधादिति॥ व्यलोपवचनं च। व्योश्च लोपो वक्तव्यः। गौधेरः। पचेरन्। यजेरन्। जीवेरदानुः। जीरदानुः। ०वलीति [पा० ६।१।६६] लोपो न प्राप्नोति। नैष दोषः। रेफोऽप्यत्र निर्दिश्यते। लोपो व्योर्वलीति रेफे च वलीति चेति। अथवा पुनरस्तु परोपदेशः। ननु चोक्तं—रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेध इति। अनुनासिकपरसवर्णयोस्तावत् प्रतिषेधो न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति। द्विर्वचनेऽपि नेमौ रहौ कार्यिणौ द्विर्वचनस्य। किं तर्हि। निमित्तमिमौ रहौ द्विर्वचनस्य। तद् यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामिति नेदानीं तौ भुञ्जाते।

ञमङणनम् ॥६॥ [शि० ७]

ञ म ङ ण न इत्येतान् वर्णानुपदिश्य पूर्वाश्चान्ते मकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवति पञ्चभिः। शश्छोऽमि [ ६।४।१५७ ] इत्यकारेण, अनुस्वारस्य ययि यम् [ ६।४।१५१ ] इति यकारेण, यरो ञमि ञम् वा [ ६।४।१४० ] इति ञकारेण, विन्मतोर्मम्* इति मकारेण, ङमो ह्रस्वाद् द्वे [ ६।४।१७ ] इति ङकारेण। केचित्तु† सर्वाण्येतानि प्रत्याहारग्रहणानि ञकारेण भवन्त्विति मकारानुबन्धं प्रत्याचक्षते। तथा च सति ञमो ह्रस्वाद् द्वे [ ६।४।१७ ] इति द्वित्वभाजोर्झभोरभावाद् द्वित्वाभावप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्।

झभञ् ॥७॥ [ शि० ८ ]

झ भ इत्येतौ वर्णावुपदिश्य पूर्वाश्चान्ते ञकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवत्येकेन—अत आद् यञि [६।२।३९] इति यकारेण।

---

* *This would appear to be a rule of the Vedic section which has not yet been discovered.*

† तथाच महाभाष्यम्—किमर्थमिमौ मुखनासिकावचनौ वर्णावुभावप्यनुबध्येते, न ञकार एवानुबध्येत। कथं यानि मकारेण ग्रहणानि—हलो यमां यमि लोपः [पा० ८।४।६४] इति? सन्तु ञकारेण, हलो यञां यञि लोप इति। नैवं शक्यम्। झकारभकारपरयोरपि हि झकारभकारयोर्लोपः प्रसज्येत। न झकारभकारौ झकारभकारयोः स्तः। कथं पुमः खय्यम्परे [पा० ८।३।६] इति? एतदप्यस्तु ञकारेण—पुमः खय्यञ्परे इति। नैवं शक्यम्। झकारभकारपरे हि खयि रुः प्रसज्येत। न झकारभकारपरः खयस्ति॥ कथं ङमो ह्रस्वादचि ङमुण् नित्यम् [ ८।३।३२ ] इति। एतदप्यस्तु ञकारेण ङञो ह्रस्वादचि ङञुण्नित्यमिति। नैवं शक्यम्। झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम्। न झकारभकारौ पदान्तौ स्तः। एवमपि पञ्चागमास्त्रय आगमिनः, वैषम्यात् संख्यातानुदेशः [ पा० १।३।१० ] न प्राप्नोति। सन्तु तावद् येषामागमानामागमिनः सन्ति। झकारभकारौ पदान्तौ न स्त इति कृत्वागमावपि न भविष्यतः।

**घढधष्** ॥८॥ [ शि० ९ ]

घ ढ ध इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवति द्वाभ्याम्—झष एकाचः स्ध्वोर्बशो भष् [ ६।३।६९ ] इति झकारभकाराभ्याम् ।

**जबगडदश्** ॥९॥ [ शि० १० ]

ज ब ग ड द इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवति पञ्चभिः—भोभगो-अघोभ्योऽशि लोपः [६।४।२४] इत्यकारेण, हशि चातो रोः [५।१।११९]इति हकारेण, वशि [ ५।४।१२८ ] इति वकारेण, झलो जश् [ ६।३।६७ ] इति जकारेण, झष एकाचः स्ध्वोबशो भष् [ ६।३।६९ ] इति बकारेण ।

**खफछठथचटतव्** ॥१०॥ [ शि० ११ ]

ख फ छ ठ थ च ट त इत्येतान् वर्णानुपदिश्य *पूर्वांश्चान्ते वकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवत्येकेन । नश्छव्यप्रशानः [ ६।४।३ ] इति छकारेण । खफग्रहणमुत्तरार्थम् ।

**कपय्** ॥११॥ [ शि० १२ ]

क प इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवति पञ्चभिः—अनुस्वारस्य ययि यम् [ ६।४।१५१ ] इति यकारेण, मय उञोऽचि वः [ ६।४।१६ ] इति मकारेण, झयो हो भय् [ ६।४।१५६ ] इति झकारेण, पुमः खय्यमि [६।४।२ ] इति खकारेण, चयः शरि द्वितीयः [ ६।४।१५८ ] इति चकारेण ।

**शषसर्** ॥१२॥ [ शि० १३ ]

श ष स इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति

* पूर्वांश्च is not found in Liebich

प्रत्याहारार्थम्। तस्योच्चारणं भवति पञ्चभिः—यरो ऽनुनासिकेऽनुनासिको वा [ ८।४।४५ ] इति यकारेण, झलो झलि [ ८।२।२६ ] इति झकारेण, खरि च [ ८।४।५५ ] इति खकार-चकाराभ्याम्, ङ्णोः कुक्टुक् शरि [ ८।३।२८ ] इति शकारेण।

हल् ॥१४॥ [ शि० १४ ]

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम्। तस्योच्चारणं भवति षड्भिः—अलोऽन्त्यात् पूर्व उपधा [ १।१।६५ ] इत्यकारेण, हलि सर्वेषाम् [ ८।३।२२ ] इति हकारेण, लोपो व्योर्वलि [६।१।६६] इति वकारेण, रलो व्युपधाद्धलादेः संश्च [ १।२।२६ ] इति रेफेण, झलो झलि [ ८।२।२६ ] इति झकारेण, शल इगुपधादनिटः क्सः [ ३।१।४५ ] इति शकारेण। अथ किमर्थ-मुपदिष्टोऽप्ययं हकारः पुनरुपदिश्यते* ? अदेङ्विकल्पक्सविधी-ड्विधयो यथा स्युरिति। तत्र स्निहित्वा स्नेहित्वेत्यत्र रलो व्युपधाद्धलादेः संश्च [ १।२।२६ ] इत्यदेङ्विकल्पो यथा स्यात्, लिहेश्चालिक्ष-दिति शल इगुपधादनिटः क्सः [ ३।१।४५ ] इति क्सो यथा स्यात्। रुदिहि स्वपिहीति वलादिलक्षणादिड् [७।२।७६] यथा स्यात्। अदाग्धामिति झल्ग्रहणेषु च हकारस्य ग्रहणं यथा स्यात्। हयवरट्-णित्यत्र तर्हि किमर्थं हकार उपदिश्यते ? अश्ग्रहणे हश्ग्रहणे च ग्रहणं यथा स्यात्।

णङञावाः स्युरेकस्माच्, चतुर्भ्यश्च कचौ, णशौ।
द्वाभ्यां ज्ञेयौ, पञ्चभ्यो शंम्यः, षड्भ्यो लस्तु विधीयते ॥

एष प्रत्याहारः पूर्वव्याकरणेष्वपि स्थित एव। अयं तु विशेषः, ऐऔच्

---

* हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता।
अर्हणाधुक्षदित्येतद् द्वयं सिद्धं भविष्यति ॥

इति यदासीत् तद् ऐऔजिति कृतम् । तथा हि । लघावन्ते द्वयोश्च बह्वषो गुरुः [ फिट्-सूत्र २।१९ ] तृणधान्यानां च द्व्यषाम् [ फिट्-सूत्र २।४ ] इति पठ्यते ।

**आदिरिता समध्यः ॥१॥**

आदिरन्त्येनासता लक्षितो गृह्यमाणो मध्यैः सह ग्राह्यः । अकोऽकि दीर्घः [ ५।१।१०६ ] । दण्डाग्रम्, दधीन्द्रः, मधूष्ट्रः । सुप् सुपा [ २।२।१ ] । राजपुरुषः, नीलोत्पलम् ।

[ आदिरन्त्येन सहेता । पा० १।१।७१, आदिरितान्त्येन समध्यः । सरस्वतीकण्ठाभरण १।२।१ ]

**उता सवर्गः ॥२॥** [स० क० १।२।२]

उकारेण लक्षित आदिः सह वर्गेण ग्राह्यः । चोः कुः [६।३।५९] । व्यक्तिः ।

[ अणुदित् सवर्णस्य चाप्रत्ययः । पा० १।१।६९ ]

**ता तत्कालः ॥३॥** [ स० क० १।२।३ ]

तकारेण लक्षितस्तत्कालो ग्राह्यः । अतो भिस ऐस् [२।१।२] वृक्षैः, प्लक्षैः । इह न भवति । मालाभिः ।

[ तपरस्तत्कालस्य । पा० १।१।७० ]

**दोऽपः ॥४॥** [ स० क० १।१।५ ]

दाग्रहणेऽपकारकस्यैव ग्रहणं वेदितव्यम् । दो दत् [ ६।२।९६ ] । दत्तम् । इह न भवति । दातं बर्हिः, अवदातं मुखम् ।

[ दाधा घ्वदाप् । पा० १।१।२० ]

**अनंशचिह्नमित् ॥५॥** [ स० क० १।१।६ ]

अनवयवभूतं यच्चिह्नं तदसद् वेदितव्यम् । इट ईटि [६।३।५७] अकोषीत् । अनंशग्रहणं किम् ? एकाचो हलादेः क्रियार्थाद् भृशाभीक्ष्ण्ये

यङ् [ १।१।४० ]। पापच्यते। एरच् [ १।३।४५ ]। चयः, जयः। इणः क्विप्, तुक्; एतीति इत्। गच्छति, न तिष्ठति, लुप्यत इत्यर्थः।

**विधिर्विशेषणान्तस्य ॥६॥**

यद् विशेषणं तदन्तस्य विधिर्वेदितव्यः। अत इञ् [ २।४।१९ ]। दाक्षिः, प्लाक्षिः। यत्तु न विशेषणं न तेन तदन्तविधिः। नडादिभ्यः फक् [ २।४।३५ ]। नाडायनः, चारायणः। इह न भवति। सौत्रनाडिः।

[ येन विधिस्तदन्तस्य। पा० १।१।७२, स० क० १।२।१९ ]।

**सप्तम्यां पूर्वस्य ॥७॥**

सप्तमीनिर्देशे पूर्वस्यैव कार्यं वेदितव्यम्। इको यण् अचि [५।१।७४]। दध्युदकम्। समिदत्रेति कस्मान् न भवति? अचीत्यौपश्लेषिक आधारः। तत्रैतावदुच्यते। पूर्वस्यैव भवति, न परस्येति।

[ तस्मिन्निति निर्दिष्टे पूर्वस्य। पा० १।१।६६, सप्तम्या निर्दिष्टे पूर्वस्य। स० क० १।२।२८ ]।

**पञ्चम्यां परस्य ॥८॥**

पञ्चमीनिर्देशे परस्यैव कार्यं वेदितव्यम्। अतो भिस ऐस् [ २।१।२ ]। वृक्षैः। इह न भवति। मालाभिरत्र। इह कस्मान् न भवति दृषद्भिरिति? अनन्तरे कृतार्थत्वान्न व्यवहितस्य कार्यम्।

[तस्मादित्युत्तरस्य। पा० १।१।६७, पञ्चम्या परस्य। स० क० १।२।२९]।

**आदेः ॥९॥**

परस्य कार्यं शिष्यमाणमादेर्वर्णस्य प्रत्येतव्यम्। द्व्यन्तःप्रादेरनादप ईत् [५।२।११३]। द्वीपः, अन्तरीपः, समीपः, नीपः।

[ आदेः परस्य। पा० १।१।५४, परस्यादेः। स० क० १।२।३३ ]।

**षष्ठ्यान्त्यस्य** ॥१०॥ [स० क० १।२।३०]

षष्ठीनिर्दिष्टस्य स्थाने यत् कार्यं तदन्त्यस्य वेदितव्यम्। अष्टनो वा सुप्यात् [५।४।५२]। अष्टाभिः, अष्टभिः।

[ अलोऽन्त्यस्य। पा० १।१।५२ ]।

**ङित्** ॥११॥ [स० क० १।२।३१]

ङकार इद् यस्य सोऽन्त्यस्य भवति। ०अनङ् सौ [५।४।४५]। सखा। षष्ठ्येत्येव। विश्नः।

[ ङिच्च। पा० १।१।५३]।

**शिदनेकाल् सर्वस्य** ॥१२॥ [स० क० १।२।३४]

शकार इद् यस्य सोऽनेकाल् चादेशः सर्वस्य स्थाने वेदितव्यः। जसः शीः [२।१।८]। सर्वे। भ्रस्जो भर्ज् वा [५।३।६२] भ्रष्टा, भर्ष्टा।

[ अनेकाल्शित् सर्वस्य। पा० १।१।५५। चन्द्रेणाल्पाचूतरस्य पूर्वनिपातविधिरनुसृतः ]।

**टकितावाद्यन्तौ** ॥१३॥ [स० क० १।२।३५]

षष्ठीनिर्दिष्टस्य टित्कितावाद्यन्तौ वेदितव्यौ। ब्रुव ईट् [६।२।३४]। ब्रवीति। त्रपुजतुनोः पुक् [३।३।१०८]। त्रापुषम्, जातुषम्।

[ आद्यन्तौ टकितौ। पा० १।१।४६। चन्द्रेण पदयोः पौर्वापर्यं विपर्ययेण विधेयाविमर्शदोषः परिहृतः। ]

**मिदचोऽन्त्यात् परः** ॥१४॥ [पा० १।१।४७, स० क० १।२।३६]

मकार इद् यस्य सोऽन्त्यादचः परो वेदितव्यः। वच उम् [६।२।६९]। अवोचत्। पराधिकार आ कपः [४।४।१४८]।

Candra is debarred by his vow from using the word "pratyaya", so he uses "para" in its stead. The Pratyaya

section extends up to the end of the fourth Chapter, i e., up to the samāsanta suffix *kap*. Cf. Sarasvatī-Kaṇṭhābharaṇa i. i. 9: ततो विधीयमानः समासान्ता कपः प्रत्ययः।

**ऋकोऽणो रलौ ॥ १५ ॥** [स० क० १।२।३७]

ऋ ऌ इत्येतयोः स्थाने योऽण् तस्मात् परौ रेफलकारौ वेदितव्यौ। कर्ता। कल्प्ता। ऋकारऌकारौ।

[ उरण् रपरः। १।१।५१ ]

**विप्रतिषेधे ॥१६॥**

द्वयोः सावकाशयोरेकत्र प्रसङ्गे यत् परं तद् भवति। यथा आत्वात् [६।२।४०] एत्वम् [६।२।४१]। वृक्षेभ्यः। परशब्दश्चाय-मिष्टवाची*। तेन पूर्वविप्रतिषेधादयो न पठितव्या भवन्ति।

[ विप्रतिषेधे परं कार्यम्। पा० १।४।२, स० क० १।२।११९]

**तिजः क्षान्तौ सन् ॥१७॥**

तिजः क्षमायां वर्तमानात् सन् परो भवति। तितिक्षते। *क्षान्ताविति किम्? तेजनम्, तेजः, तेजयति। नकारः सन्यङोरः* [५।१।१] इति चिह्नार्थः।

[ गुप्तिज्किद्भ्यः सन्। पा० ३।१।५, तिजः क्षमायां सन्। स० क० १।३।१]

The Bhāṣya does not restrict the sense in any way. Under गुप्तिज् किद्भ्यः सन् iii.1.5 the Kāś'ikā says : निन्दाक्षमाव्याधि-प्रतिकारेषु सन्निष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति। *Jinendrabuddhi* adds : संशयेऽपि दृश्यते - विचिकित्सति मे मन इति। Jainendra says : कित्गुप्तिजः सन् भिषज्याविनिन्दाक्षमे ii.1.3 and the examples in the Laghuvṛtti are ज्वरं चिकित्सति and शत्रुं चिकित्सति.

---

* इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद् भवतीति। महा-भाष्यम् १।१।३।

कथ निदानम्, अवदानमिति ? द्यतेर्दधातेश्च ल्युटा सिद्धम्। कथं माननं मानो मानयतीति ? चौरादिकेन सिद्धम्। ततश्च वा णिच्, धुपेरविशब्दने [५।४।१५१] इति लिङ्गात्। शान्दान्साहचर्यादिह भौवादिकस्य मानो ग्रहणम्।

[मानो विचारणायाम्। शान् दानोर्याः। स० क० १।३।६-७]

तुमो लुक् चेच्छायाम्॥२२॥

तुमन्तादिच्छायामर्थे सन् भवति, लुक् च तुमो भवति, श्रुतत्वात्। चिकीर्षति। इह कस्मान् न भवति, कर्तुमिच्छतीति ? पृथक्पदेनाभिधानात्। तुम् इति किम् ? भोजनमिच्छति। इच्छायामिति किम् ? भोक्तुं गच्छति। चिकीर्षितुमिच्छतीति इच्छासनन्तात् सन् न भवति। कथम् ? स्वात्मनि क्रियाविरोधात्। न हीच्छायां सनो विधानकाले इच्छासनन्ता प्रकृतिरस्ति। इह तु भवत्येव। जुगुप्सिषते। कथम् कूलं पिपतिषतीति* ? यथा कूलं पतितुमिच्छतीति वाक्यं भवत्येवं वृत्ति-

---

चिन्त्यम्, भाष्यविरोधश्च। एवं कितेः परस्मैपदित्वेऽपि भाष्यानुग्रहश्चिन्त्यः। वैदिकपरस्मैपदप्रयोगास्तु छान्दसत्वादपि सुसाधाः, लोके त्वात्मनेपदमेवोचितम्। एवं च वधेरपि स्वरितेत्त्वं परस्मैपदमेव योचितमिति वदन्ति।

Nāges'a's reference to the Vṛtti would appear to be due to oversight, for it is not the Kās'ika that makes these statements, but the commentaries on the Kās'ikā.

* आशङ्कायामचेतनेषूपसंख्यानम्॥ ३।१।७।१२॥ आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते। कूलं पिपतिषतीति। किं पुनः कारणं न सिध्यति ? एवं मन्यते चेतनावत एतद् भवति इच्छेति, कूलं चाचेतनम्। अचेतनग्रहणेन नार्थः, आशङ्कायामित्येव। इदमपि सिद्धं भवति श्वा मुमूर्षति॥ न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः। ३।१।७।१३॥ न वा कर्तव्यम्। किं कारणम् ? तुल्यकारणत्वात्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने। किं कारणम् ? इच्छाया हि प्रवृत्तित उपलब्धिः। इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यसौ कटं

रपि भविष्यति। वाक्यमेव तर्हि कथं भवति? लोकस्य तथा विवक्षातः।

[धातोः कर्मणः समानकर्तृकादिच्छायां वा। पा० ३।१।७। तुमुनन्ताद्वा तस्य च लुग्वचनम् ३।१।७।१९, तुमर्हादिच्छायाम्। आशङ्कायां च। नेच्छासनः। स० क० १।३।७–९]

**व्याप्यात् काम्यच् ॥२३॥**

इषेर्व्याप्यादिच्छायामर्थे काम्यच् परो भवति। पुत्रमिच्छति, पुत्रकाम्यति। वस्त्रकाम्यति। व्याप्यादिति किम्? दात्रेणेच्छति। इह कस्मान् न भवति—राज्ञः पुत्रमिच्छतीति? सापेक्षत्वात्। न ह्यन्यमपेक्षमाणोऽन्येन सहैकार्थीभावमनुभवितुं शक्नोति। इहापि तर्हि न स्यात्—आत्मनः पुत्रमिच्छतीति? नवात्र भवितव्यम्। न हि भवत्यात्मनः पुत्रकाम्यतीति। कथं तर्हि पुत्रस्यात्मीयभावो गम्यते? अन्यस्याश्रुतत्वात्, इच्छायाश्च तद्विषयत्वात्। चकारः सतिशिष्टस्वरबाधनार्थः। पुत्रकाम्यिष्यतीति।

[काम्यच्च। पा० ३।१।९, सुपः कर्मणः काम्यच्। स० क० १।३।१० Candra has abjured all technical terms, so he sometimes uses व्याप्य and sometimes आप्य for कर्म् (चन्द्रस्य प्रतिज्ञा संज्ञैव न कर्तव्या।

---

चिकीर्षुं भवति, नासावाधीयते घटं करिष्यामीति। किं तर्हि? समर्थं रज्जुकीलकपूलपाणिं दृष्ट्वा तत इच्छा गम्यते। कूलस्यापि पिपतिषतो लोष्टाः शीर्यन्ते भिदा जायते देशाद्देशान्तरमुपसंक्रामति। श्वानः खल्वपि मुमूर्षव एकान्तशीलाः शूनाक्षाश्च भवन्ति॥ उपमानाद्वा सिद्धम्॥ ३।१।७।१४॥ उपमानाद्वा सिद्धमेतत्। कथम्? लुलुठिषत इव लुलुठिषते। पिपतिषतीव पिपतिषति। न तिङन्तेनोपमानमस्ति। एवं तर्हि, इच्छेवेच्छा। सर्वस्य वा चेतनावत्त्वात्॥ ३।१।७।१५॥ अथवा सर्वं चेतनावत्। एवं ह्याह— कंसकाः सर्पन्ति। शिरीषोऽयः स्वपिति। सुवर्चला आदित्यमनुपर्येति। आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति। अयस्कान्तमयः संक्रामति। ऋषिः पठति। शृणोत ग्रावाणः।

पुष्कविवरणतञ्जिशत ४।३।१०१ ) । For कर्मणि द्वितीया Candra has विव्याप्ये द्वितीया ii. i. 43. Hemacandra defines कर्म as कर्तुर्व्याप्यम् ii, 2. 3.]

**ससंख्यादमः क्यज् वा ॥२४॥**

इष्टेर्व्याप्याद् विद्यमानसंख्यादमकारान्तादिच्छायामर्थे क्यज् वा भवति । पुत्रमिच्छति, पुत्रीयति, पुत्रकाम्यति । वस्त्रमिच्छति, वस्त्रीयति, वस्त्रकाम्यति । ससंख्यादिति किम् ? स्वरिच्छति । पृथगिच्छति । अम इति किम् ? इदमिच्छति । किमिच्छति । ककारः क्यस्य वा [५।३।६६] इति सामान्यग्रहणार्थः, चकारः सामान्यग्रहणाविघातार्थः ।

[ सुप आत्मनः क्यच् । पा० ३।१।८, अनव्ययादमः क्यज् वा । स० क० १।३।११ । Candra uses असंख्य for अव्यय and ससंख्य for अनव्यय. ]

**उपमानादाचारे ॥२५॥** [ पा० ३।१।१० ]

व्याप्यादुपमानादाचारेऽर्थे क्यच् परो भवति । पुत्रमिवाचरति, पुत्रीयति माणवकम् । उपमानादिति किम् ? पुत्रमाचरति ।

**आधारात् ॥२६॥**

आधारादुपमानादाचारेऽर्थे क्यच् परो भवति । कुट्यामिवाचरति कुटीयति प्रासादे । प्रासादीयति कुट्याम् ।

[ अधिकरणाच्च । पा० ३।१।१०।१, अधिकरणाच्चोपमानादाचारे । स० क० १।३।१२ which should have been printed as two rules.]

**कर्तुर्विप् ॥ २७ ॥** [स० क० १।३।१३ म]

कर्तुरुपमानादाचारेऽर्थे विप् परो भवति । अश्व इवाचरति, अश्वति । गर्दभति ।

[ अपर आह—सर्वप्रातिपदिकेभ्य आचारे क्विब् वक्तव्योऽश्वतिगर्दभतीत्येवमर्थम् ।३।१।११ भाष्यम् ]

**गल्भक्लीबहोडेभ्यो ङित् ॥ २८ ॥** [स० क० १।३।१४ म]

गल्भादिभ्य. उपमानभूतेभ्य आचारेऽर्थे विप् परो भवति, स च

यते । पकारो वा क्यपः [ १।४।१४२ ] इति चिह्नार्थः । आकृतिगणश्चायम् ।

[ लोहितादिडाज्भ्यः क्यष् । पा० ३।१।१३, डाज्लोहितजिह्मश्यामधूम्रचर्महर्षगर्वनमसुखदुःखमूर्च्छानिद्राकृपाकरुणादिभ्यः क्यप् । स० क० १।३।१८]

**कष्टकक्षसत्त्रगहनाय पापे क्रमणे ॥ ३२ ॥**

कष्टादिभ्यश्चतुर्थ्यन्तेभ्यः पापे वर्तमानेभ्यः क्रमणेऽर्थे क्यङ् भवति । कष्टाय कर्मणे क्रामति, कष्टायते । कक्षायते । सत्त्रायते । गहनायते । पाप इति किम् ? कष्टाय तपसे क्रामति । चतुर्थीनिर्देशः किम् ? रिपुः कष्टं क्रामति ।

[ कष्टाय क्रमणे । पा० ३।१।१४, सत्त्रकक्षकष्टगहनेभ्यः कण्वचिकीर्षायाम् । ३।१।१४।१, सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् । काशिका । तस्मै क्रामति कष्टकक्षसत्रगहनेभ्यः कल्कचिकीर्षायां क्यङ् । स० क० १।३।१९ ]

**रोमन्थं वर्तयति हनुचाले ॥ ३३ ॥**

रोमन्थशब्दाद् द्वितीयान्ताद्धनुचलनविषयाद् वर्तयतीत्यस्मिन्नर्थे क्यङ् भवति । *रोमन्थायते गौः* । हनुचाल इति किम् ? कीटो रोमन्थं वर्तयति ।

[ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः । पा० ३।१।१५, हनुचलने ३।१।१५।१, तं वर्तयति रोमन्थाद्धनुचलने । स० क० १।३।२०. Candra changes हनुचलने *into the rather unusual* हनुचाले *and saves a syllable.* ]

**बाष्पोष्मफेनमुद्वमति ॥ ३४ ॥**

बाष्पादिभ्यो द्वितीयान्तेभ्य उद्वमतीत्यस्मिन्नर्थे क्यङ् भवति । बाष्पायते, ऊष्मायते, फेनायते ।

[ बाष्पोष्मभ्यामुद्वमने । पा० ३।१।१६, फेनाच्चेति वक्तव्यम् । भाष्यम् । बाष्पोष्मफेनेभ्य उद्वमने । स० क० १।३।२१ ]

**सुखादीनि वेदयते ॥ ३५ ॥**

सुखादिभ्यो द्वितायन्तेभ्यो वेदयत इत्यस्मिन्नर्थे क्यङ् भवति। सुखायते, दुःखायते। इह कस्मान्न भवति—सुखं वेदयते प्रसाधको देवदत्तस्येति ? सापेक्षत्वात्। सुख। दुःख। तृप्र। कृच्छ्र। अस्र*। अलीक। करुण। कृपण। सोढ। प्रतीप।

[ सुखादिभ्यः कर्तृवेदनायाम्। पा० ३।१।१८. The Kaśika includes गहन in the list. सुखदुःखतृप्रकृच्छ्रास्रालीककरुणकृपणसोढप्रतीपेभ्योऽनुभवे। स० क० १।३।२२ ]

## शब्दादीन् करोति ॥ ३६ ॥

शब्दादिभ्यो द्वितीयान्तेभ्यः करोतीत्यस्मिन्नर्थे क्यङ् भवति। शब्दं करोति, शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। अट्टायते। अटायते। अन्ये पुनरटाटेति पठन्ति, तेषामटतेर्यङि स्त्रियामकारे च रूपम्। अटाटायते। शीकायते। सोटायते। कोटायते। पोटायते। प्रुष्टायते। सुदिनायते। दुर्दिनायते। नीहारायते।

[ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। पा० ३।१।१७, अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। भाष्यम्। सुदिनदुर्दिनाभ्यां च। नीहाराच्च ३।१।१७।१-२, शब्दवैरकलहाभ्रकण्वमेघाटाट्टशीकासोटाकोटापोटाप्रुष्टाटाटसुदिनदुर्दिननीहारेभ्यः करणे। स० क० १।३।२३ ]

## नमस्तपोवरिवसः क्यच् ॥ ३७ ॥

नम-आदिभ्यो द्वितीयान्तेभ्यः करोतीत्यस्मिन्नर्थे क्यच् परो भवति। नमस्करोति, नमस्यति देवान्। तपस्यति शत्रून्। वरिवस्यति गुरून्।

[ नमोवरिवश्चित्रङः क्यच्। पा० ३।१।१९, नमसः पूजायाम्, वरिवसः परिचर्यायाम्, चित्रङ आश्चर्ये। पा० ३।१।१९ भाष्यम्, स० क० १।३।२५-२७ ]

Under the Vārttika तपसः परस्मैपदं च III. 1. 15. 1 the Bhāṣyakāra says : तपश्चरति तपस्यति. Candra would appear to be the first to take तपस्यति in the sense of सन्तापयति and is follow-

---

* अस्र became अस्र in Hemacandra and आस्र in Jumara.

ed by Bhoja, Hemacandra and others. But Candra and his followers are undoubtedly in the wrong, for तपः is not a well-established word *in the sense of* सन्ताप *in general.* Candra was evidently influenced by Mahābhāṣya iii. 1. 87.

Bhoja follows Kātyāyana and frames four separate rules : तपसः क्यच्, नमसः पूजायाम्, वरिवसः परिचर्यायाम्, चित्रङ आश्चर्ये I. 3. 24–27. Under the first of these we find : तपः करोति तपस्यति । तपःशब्दो यदा व्रतवचनस्तदान्तर्भूतकर्मकत्वात् क्यजन्तोऽकर्मकः, यदा सन्तापवचनस्तदा तत्सम्बन्धिनार्थेन सकर्मकः । शत्रूणा तपः करोति तपस्यति शत्रूनिति । Hemacandra says in his Bṛhadvṛtti under तपसः क्यन् iii. 4. 36 : *अत्र यदा व्रतपर्यायस्तपःशब्दः, तदा क्यन्-कर्मणो वृत्तावन्तर्भूतत्वादकर्मकत्वम् ; यदा तु सन्तापक्रियावचनः, तदा क्यन्-कर्मणो वृत्तावन्तर्भावेऽपि स्वकर्मणा सकर्मक एव ।* शत्रूणां तपः करोति तपस्यति शत्रूनिति । यथा व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति ।

**चित्रङ आश्चर्ये** ॥ ३८ ॥ [स० क० १।३।२७]

चित्रङ्शब्दाद् द्वितायान्तादाश्चर्ये वर्तमानात् करोतीत्यस्मिन्नर्थे क्यच् परो भवति। चित्रं करोति, चित्रीयते। ङकारस्तङानार्थः। आश्चर्य इति किम् ? चित्र करोति।

**कण्ड्वादिभ्यो यक्** ॥ ३९ ॥ [पा० ३।१।२७]

कण्ड्वादिभ्यो द्वितीयान्तेभ्यः करोतीत्यस्मिन्नर्थे यग् भवति। कण्डू करोति, कण्डूयति कण्डूयते। कण्डूञ्। मन्तुञ्, मन्तूयति, मन्तूयते। वल्गु, वल्गूयति*। असुञ्, असूयति, असूयते।* हृणिङ्, हृणीयते। महिङ्, महीयते। वेङ्, वेयते। लाङ्, लायते। वेड्लाट् इति केचित् पठन्ति, वेट् लाट् इति च, तेषां वेड्लाट्यति वेट्यति लाट्यतीति।

* Goyicandra says : चान्द्रास्तु ञानुबन्धानेतान् पठन्ति evidently referring to असु, मन्तु and वल्गु. In the Mādhavīya Dhātuvṛtti we find under *मन्तु अपराधे—चन्द्रस्तु ञितं पठित्वा मन्तूयते इति चाह।* Rāma Tarkavāgīśa follows G. and says under Mugdhabodha 655 : ञितः कण्ड्वादिचत्वारो ङितो हृण्यादयस्त्रयः.

तिरस्, तिरस्यति। इयस्, इयस्यति। इरस्, इरस्यति। उरस्, उरस्यति। उपस्, उपस्यति। कुसुभ मगध, कुसुभ्यति, मगध्यति। यकि [५।३।६४] इत्यलोपः। गोधा। मेधा। तन्तस्। पम्पस्। भिषज्। अरर। सपर। इषुध। चुरण। तुरण। भुरण। दुवस्। गद्गद। एला। केला। खेला। लेट्। लोट्। मुख। दुःख।

[कण्ड्वादिसुखलगुमन्तुमहीट्हृणीङ्वेङ्लाट्वेड्लाड्लेड्लोड्उपिरस्तिरोगुवस्-इयसुषसिरञ्जिभिषजिभरण्युभ्यो यक्। एलाकेला०। स० क० १।३।२८-२९]

**एकाचो हलादेः क्रियार्थाद् भृशाभीक्ष्ण्ये यङ् ॥४०॥**

एकोऽच् यस्य हलादिः क्रियार्थस्तस्माद् भृशार्थे पौनःपुन्ये च वर्तमानाद् यङ् भवति। भृशं शीघ्रम्*, आभीक्ष्ण्यं पौनःपुन्यम्। अत्यर्थं पुनःपुनर्वा पचति, पापच्यते। एकाच इति किम्? जागर्त्यभीक्ष्णम्। हलादेरिति किम्? अभीक्ष्णमीहते। क्रियार्थादिति किम्? प्राति† गृणम्। प्रादयो हि क्रियाया न वाचकाः। किं तर्हि? विशेषद्योतकाः। भृशाभीक्ष्ण्य इति किम्? पचति। क्रियार्थादित्यधिकारः प्राक् सुब्विधेः [२।१।१]

[धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। पा० ३।१।२२, धातोर्हलादेरेकाचः क्रियासमभिहारे यङ्। स० क० १।३।३०]

**ऋमूत्रिमुत्रिसूच्यटशूर्णुभ्यः ॥४१॥**

एतेभ्यो भृशाभीक्ष्ण्ये यङ् भवति। अरार्यते। सोसूत्र्यते। मोमूत्र्यते। सोसूच्यते। अटाट्यते। अशाश्यते। प्रोर्णोनूयते।

[ऊर्णोतेश्चोपसंख्यानम्।...सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम्। पा० ३।१।२२।३, अट्यर्तिमूत्रिमूत्रिसूच्यशूर्णुभ्यः। स० क० १।३।३२]

---

* Should we read भृशमत्यर्थम्?

† प्राटति—काशिका, हृदयहारिणी। प्राति—हेमचन्द्रः। धातोरिति किम्? सोपसर्गादुत्पत्तिर्मा भूत्। भृशं प्राटति। काशिका।

**गत्यर्थात् कौटिल्य एव ॥४२॥**

गत्यर्थेभ्यः कौटिल्य एव यङ् भवति, न भृशाभीक्ष्ण्यमात्रे। चङ्क्रम्यते। दन्द्रम्यते। जङ्गम्यते। अन्यत्र पुनः पुनः क्रामति।

[ नित्यं कौटिल्ये गतौ। पा० ३।१।२३, कौटिल्य एव गत्यर्थेभ्यः। स० क० १।३।३३ ]

**लुपसदचरजपजभदहदशो गर्ह्यात् ॥४३॥**

लुपादिभ्यो गर्हितार्थेभ्यो यङ् भवति। गर्हितं लुम्पति, लोलुप्यते। सासद्यते। चञ्चूर्यते। निजेगिल्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। गर्ह्यादिति किम्? लुम्पति। एवशब्दानुवृत्तेर्गर्हितार्थेभ्य एवैतेभ्यो यङ् भवति, नान्यार्थेभ्यः। पुनः पुनः लुम्पति। प्रकृतिविशेषणं किम्? जपति वृषलः।

[ लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्। पा० ३।१।२४, स० क० १।३।३४ ]

**न शुभरुचः ॥४४॥**

शुभिरुचिभ्यां यङ् न भवति। अभीक्ष्णं शोभते। भृशं रोचते।

[ क्रियमाणेऽपि ह्येकाज्हलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङार्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः। तद् यथा भृशं शोभते, भृशं रोचते। महाभाष्यम्। ३।१।२२, न शुभरुचगृणातिभ्यः। स० क० १।३।३५]

**चुरादिभ्यो णिच् ॥४५॥** [ स० क० १।३।३६ ]

चुरादिभ्यः स्वार्थे णिच् परो भवति। चोरयति। नाटयति। णकार आदेजर्थः, चकारः सामान्यग्रहणविघातार्थः। चुरादिषु पठ्यते—सुपो धात्वर्थे बहुलमिष्ठवच्च [ धातुपा० १०।१०३ ] इति। तेनेष्ठवत्कार्याणि भवन्ति, न भवन्ति च। पटुं करोति, पटयति। लघयति। इष्ठवद्भावादन्त्याजादिलोप[1] आदभावश्च। तथा स्थूलमाचष्टे स्थवयति

[1] Candra uses अन्त्याजादि for Pāṇini's टि. The rule for the elision of टि is इष्ठेमेय स्वन्त्याजादेः v. 3. 158.

दवयतीत्यादि । *सत्यमाचष्टे, सत्यापयति । अर्थापयति । वेदापयति । एषामापुकं वक्ष्यति [६।१।५५] । पाशं विमोचयति, विपाशयति ! रूपं पश्यति, निरूपयति । वीणया उपगायति, उपवीणयति । तूलै रनुकुष्णाति, अनुतूलयति । श्लोकैरुपस्तौति, उपश्लोकयति । सेनया अभिनिर्याति, अभिषेणयति । लोमान्यनुमार्ष्टि, अनुलोमयति । त्वचं गृह्णाति, त्वचयति । नैकाचः [५।३।१६५] इति लोपाभावः । वर्मणा संनह्यति, संवर्मयति । वर्णं गृह्णाति, वर्णयति । चूर्णैरवध्वंसयति, अवचूर्णयति । सूत्रं करोति, सूत्रयति। एवं मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रतयति । वस्त्रं समाच्छादयति, संवस्त्रयति । हलिं गृह्णाति, हलयति । कलिं गृह्णाति कलयति । इष्ठवद्भावादाद्यैचामभावः [अन्त्याजादिलोपश्च] । तस्मान्ग्लोपि० [६।१।६२] इति सन्वद्भावाभावः† । अजहलत्, अचकलत् । अपीपटदिति बहुलवचनादित्वम् । एवं कृतयति, तूस्तयतीत्यादि । णिङ् अङ्गनिरसन इति तत्रैव पठ्यते [धातुपा० १०।१०४] हस्तं निरस्यति, हस्तयते । पादयते । उत्पुच्छयते । निपुच्छयते । परिपुच्छयते । निरसन इति किम् ? पुच्छमाचष्टे, पुच्छयति । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्चेति तत्रैव पठ्यते [धातुपा० १०।१०५] । श्वेताश्वमाचष्टे तेन वाभिक्रामति, श्वेतयते । अश्वयते । गालोडयते । आह्वरयते । भाण्डानि समाचिनोति, संभाण्डयते । चीवरं समर्जयति परिदधाति वा, सञ्चीवरयते । फलवति [१।४।१२४] इति तङ् । तथा चाह धातुकारोऽपि । पुच्छादिषु धात्वर्थ इत्येव सिद्धम् [पाणिनीयधातुपा० १०।३९५] इति ।

---

* सत्यस्य इत्यापुक् च । पा० ३।१।२५।१, सत्यं करोति सत्यापयति । भाष्यम् ।

† इष्ठवद्भावादाद्यैचामभावः । तस्मान्ग्लोपित्वमिति सन्वद्भावाभावः । MSS.

[ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। पा० ३।१।२५, प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। धातुपा० १०।३६८; तत् करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्। आख्यानात् कृतस्तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्। ३।१।२६।५-६ निष्ठान्निरसने। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च। पाणिनीयधातुपाठः। सुपो धात्वर्थे बहुलमिष्ठवच्च। मुण्डमिश्रश्लक्ष्णलवणलघुपटुप्रभृतीनि करोति। स्थूलादीनाचष्टे च। सत्यार्थवेदानामापुक् च। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च। कृतश्चवर्णान् गृह्णाति। हलिकल्योरच्च। व्रताद् भोजने तन्निवृत्तौ च। रूपान्निष्पाने। पाशाद्विमोचने संयमने च। तूस्ताद्विहनने। लोम्नोऽनुमार्जने। वस्त्रात् समाच्छादने परिधाने च। तेनातिक्रामति। सेनावीणायमंच पंलूलश्लोकत्वातोयासोभ्योऽभियानोपगानसन्नहनावध्वंसनावकोपणोपस्तवनोन्मोचनपरिच्छेदनेषु। अङ्गात् तन्निरस्यति ङित्। पुच्छादुदसने व्यसने पर्यसने च। भाण्डात् समाचयने। चीवरादर्जने परिधाने च। स० क० १।३।२७-५५, ५७-६३]

**प्रयोजकव्यापारे** ॥४६॥

कर्तारं यः प्रयुङ्क्ते तद्व्यापारे क्रियार्थाण् णिच् परो भवति। कारयति। हारयति। ननु च कर्तापि करणादीनां प्रयोजक इति तद्व्यापारेऽपि णिच् प्राप्नोति। प्रयोजकग्रहणसामर्थ्यान्न भविष्यति, चुरादिभ्यश्च पृथग्वचनसामर्थ्यात्। कथं कंस घातयति कथकः, बलिं बन्धयतीति ? अत्रापि तथा परेषा प्रत्यायनात्। तथा हि वक्तारो भवन्ति। गच्छ हन्यते कंसः। कि ते गतेन ? हतः स कस इति। एवमारात्रिविवासमाचष्टे, रात्रिं विवासयति। कौशाम्ब्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति। पुष्ययोगमाचष्टे, पुष्येण चन्द्र योजयतीति।

[ हेतुमति च। पा० ३।१।२६, धातोर्हेतुव्यापारे। स० क० १।३।५६ ]

**गुपूधूपविच्छपणपन आयो वा** ॥ ४७ ॥

गुपादिभ्यः स्वार्थे आयः परो भवति वा। गोपायिता, गोप्ता।

धूपायिता, धूपिता। विच्छायिता, विच्छिता। पणायिता, पणिता। पनायिता, पनिता। पनिसाहचर्यात् स्तुत्यर्थस्य पणेर्ग्रहणम्। इह न भवति। शतस्य पणिता।

[ गुपूधूपविच्छिपणिपनिभ्य आयः। पा० ३।१।२८, गुपूधूपविच्छिपणिपनिभ्य आयो वा। स० क० १।३।६४ ]

ऋत ईयङ् ॥ ४८ ॥

ऋत ईयङ् वा भवति। ऋतीयिता, अर्तिता।

[ ऋतेरीयङ्। पा० ३।१।२९, स० क० १।३।६५ ]

कमो णिङ् ॥ ४९ ॥

कमो णिङ् वा भवति। कामयिता, कमिता।

[ कमेर्णिङ्। पा० ३।१।३०, स० क० १।३।६६ ]

शित्यायादयः ॥ ५० ॥

गुपादिभ्यः शिति परभूते आयादयो नित्यं भवन्ति, पुनर्विधानात्। गोपायति, धूपायति, विच्छायति, पणायति, पनायति, ऋतीयते, कामयते।

[ आयादय आर्धधातुके वा। पा० ३।१।३१, नित्यं शित्यायादयः। स० क० १।३।६७ ]

अनेकाचो लिट आम् कृभ्वस्तिलिट् चानु ॥ ५१ ॥

अनेकाचः क्रियार्थात् परस्य लिट आमादेशो भवति, कृभ्वस्तिभ्यो विहितश्च लिडनुप्रयुज्यते। चुलुम्पाञ्चकार। चिकीर्षाञ्चकार। कारयाम्बभूव। पाचयामास। पृथग्वचनसामर्थ्यादस्तेर्न भूभावः। अनेकाच इति किम्? पपाच।

[कास्प्रत्ययादाममन्त्रे लिटि। पा० ३।१।३५। कास्यनेकाच इति वक्तव्यम्। किं प्रयोजनम्? चुलुम्पाद्यर्थम्। ३।१।३५ भाष्यम्, अनेकाचो लिट आम् कृभ्वस्तीनां च लिडनुप्रयोगः। स० क० १।३।६८]

**इजादेर्गुरुमतोऽनृच्छूर्णोः** ॥ ५२ ॥ [ स० क० १।३।६९ ]

इजादिर्यः क्रियार्थो गुरुमानृच्छत्यूर्णोतिवर्जितस्ततः परस्य लिट आम् भवति, कृभ्वस्तिलिट् चानुप्रयुज्यते। ईहाञ्चक्रे। व्युच्छाञ्चकार। इजादेरिति किम्? ततक्ष। गुरुमत इति किम्? इयेष। नैष लविधानकाले गुरुमान्। उच्छेस्तु लविधानकाल एव गुरुमत्त्वादाम् भवत्येव, ऋच्छिप्रतिषेधाच्च लिङ्गात्। अत एवास्य संयोगपरस्यापि गुरुत्वम्। अनृच्छूर्णोरिति किम्? आनर्छ। प्रोर्णुनाव।

[इजादेश्च गुरुमतोऽनृच्छः। पा० ३।१।३६, ऊर्णोतेश्चोपसंख्यानम्। वा६]

**कासयदयासः** ॥ ५३ ॥

कासः अयः दयः आसश्च परस्य लिट आम् भवति, कृभ्वस्तिलिट् चानुप्रयुज्यते। कासाञ्चक्रे। पलायाञ्चक्रे। उद्दयाञ्चक्रे। आसाञ्चक्रे।

[कास्प्रत्ययादाममन्त्रे लिटि। दयायासश्च। पा० ३।१।३५, ३७ ; दयायास्कास्भ्यश्च। स० क० १।३।७० ]

**जाग्रुषो वा** ॥ ५४ ॥ [ स० क० १।३।७१ ]

जागर्तेरुषश्च परस्य लिट आम् भवति वा, कृभ्वस्तिलिट् चानुप्रयुज्यते। जागराञ्चकार, जजागार। ओषाञ्चकार, उवोष।

[ उषविदजागृभ्योऽन्यतरस्याम्। पा० ३।१।३८]

**भीह्रीहूनां द्वे च** ॥ ५५ ॥

भी ह्री हु इत्येतेषां लिट आम् भवति वा, तत्सन्नियोगेन च द्वित्वम्, कृभ्वस्तिलिट् चानुप्रयुज्यते। बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। जुहवाञ्चकार, जुहाव। लिटि* [५।१।२, पा० ६।१।

* Candra's rule चङ्लिटोः does not contain the word लिटि, but Pāṇini's rule लिटि धातोरनभ्यासस्य does contain it. The commentator is either *referring* to Candra's rule or *quoting* from Pāṇini through inadvertence

८] इति सिद्ध द्विर्वचने द्वे चेति नियमार्थं वचनम्—एतेषामेवामि द्वित्वं भवति नान्येषामिति। तथा चैवोदाहृतम्।

[ भीह्रीभृहुवां श्लुवच्च। पा० ३।१।३९, स० क० १।३।७२ ]

**विभराम्** ॥ ५६ ॥

विभर्तेर्लिट आम् वा निपात्यते, द्वित्वमित्त्वञ्च*, कृभ्वस्तिलिट् चानुप्रयुज्यते। विभराञ्चकार, बभार।

**विदाम्** ॥ ५७ ॥

विदेर्लिट आम् वा निपात्यते, एङभावश्च, कृभ्वस्तिलिट् चानुप्रयुज्यते। विदाञ्चकार, विवेद।

[ उषविदजागृभ्योऽन्यतरस्याम्। पा० ३।१।३८, विदेः किच्च। स० क० १।३।७३ ]

**लोटः कुलोट्** ॥ ५८ ॥

लोडन्तस्य विदेर्विदामिति निपात्यते वा, कृञ्चास्य परो लोडनुप्रयुज्यते। विदाङ्करोतु, विदाङ्कुरुताम्, विदाङ्कुर्वन्तु। वेत्तु, वित्ताम्, विदन्तु।

[ विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। पा० ३।१।४१, लोटः कृञ्चास्य लोडनुप्रयोगः। स० क० १।३।७४ ]

**स्यतासौ ऌलुटोः** ॥ ५९ ॥

ऌटि ऌङि च परभूते क्रियार्थात् स्य. परो भवति. लुटि तास्। करिष्यति। अकरिष्यत्। श्वः कर्ता।

[ स्यतासी ऌलुटोः। पा० ३।१।३३, स० क० १।३।७५ ]

**लुङि सिच्** ॥ ६० ॥ [ स० क० १।३।७६ ]

लुङि परभूते क्रियार्थात् सिच् परो भवति। अकार्षीत्। इकारः

---

* Here, as elsewhere, Liebich has इत्वम् from MSS., but अपृभूमाहाटामित् VI. 2. 128 shows that the correct reading is इत्त्वम्.

सिच्यतङ्यादेच् [ ६।१।३] इति चिह्नार्थः । चकार आगमानुदात्तस्वर-
साधनार्थः ।

[ च्लि लुङि । च्लेः सिच् । पा० ३।१।४३-४४ । Pāṇini prescribes च्लि in the aorist and for च्लि substitutes सिच्, अङ् etc. to make his rules विश्वतोमुख. ]

**स्पृशमृशकृषतृपदृपो वा ॥ ६१ ॥**

स्पृशादिभ्यो लुङि सिज् वा भवति । अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । अत्राप्सीत्, अतार्प्सीत्, अतृपत् । अद्राप्सीत्, अदार्प्सीत्, अदृपत् ।

[स्पृशमृशकृषतृपदृपः सिज् वा । पा० ३।१।४४।७, स्पृशिमृशिकृषितृपिदृपिभ्यो वा । स० क० १।३।७७ ]

**दाधागातिस्थाभूपोऽतङि लुक् ॥६२॥**

एतेभ्य उत्तरस्य सिचोऽतङि लुग् भवति । अदात्, अधात्, अगात्, अस्थात्, अभूत्, अपात् । अतङीति किम् ? अदिपातां ग्रामौ देवदत्तेन । गातिपिबत्योर्निर्देशसाहचर्याभ्यां ग्रहणादिह न भवति । अगासीद् गायनः । अपासीन् नृपः ।

[ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । पा० २।४।७७, दाधागातिपिबति-स्थाभूभ्यः परस्मैपदे लुक् । स० क० १।३।७८ ]

**घ्राधेशाच्छासो वा ॥६३॥**

घ्रादिभ्यः परस्य सिचो लुग् वा भवति । अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् । अतङीत्येव । अघ्रासातां सुमनसौ देवदत्तेन ।

[ विभाषा घ्राधेट्शाच्छासः । पा० २।४।७८, शाच्छासाघ्राधेड्भ्यो वा । स० क० १।३।७९ ]

**तनादिभ्यस्तथासोः ॥६४॥** [पा० २।४।७९, स० १।३।८०]

तनादिभ्यः परस्य सिचस्तथासोः परतो लुग् वा भवति । अतत,

अतथाः। अतनिष्ट,अतनिष्ठाः। असात, असाथाः। असनिष्ट, असनिष्ठाः। तथासोरिति किम्? अतनिषाताम्। थासा सहचरितस्यैव तशब्दस्य ग्रहणादिह न भवति। अतनिष्ट यूयम्। करोतेरलुक्पक्षेऽपि ह्रस्वात् [ ६।३।५६ ] इति सलोपः। अकृत, अकृथाः।

शल इगुपान्तादद्दशोऽनिटः क्सः ॥६५॥

शलन्तादिगुपान्ताद् दृशिवर्जितात्* क्रियार्थादनिटो लुङि क्सो भवति। अलिक्षत् अधुक्षत्। शल इति किम्? अभैत्सीत्। इगुपान्तादिति किम्? अधाक्षीत्। अदृश इति किम्? अदर्शत्, अद्राक्षीत्। अनिट इति किम्? अकोषीत्।

[ शल इगुपधादनिटः क्सः। न दृशः। पा० ३।१।४४-४५, शल इगुपधाद्दृशोऽनिटः क्सः। स० १।३।८१]

श्लिषः ॥६६॥ [ स० क० १।३।८२ ]

श्लिष्यतेर्लुङि क्सो भवति। पुनर्विधानात्† पुष्यत्यादिविहितोऽङ् बाध्यते। उपाश्लिक्षत् कन्यां देवदत्तः। चिणपि तर्हि बाध्येत, उपाश्लेषि कन्या देवदत्तेनेति? पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते न परान्। अनिट इत्येव। अश्लेषीत्। अधाक्षीदित्यर्थः।

[ श्लिष आलिङ्गने। पा० ३।१।४६, नासत्त्वाश्लेषे। स० क० १।३।८३ ]

सत्त्वाश्लेषे ॥६७॥

प्राणिविषय एवाश्लेषे वर्तमानाच्छ्लिष्यतेर्लुङि क्सो भवति, नान्यत्र। उपाश्लिषज्जतु च काष्ठं च। व्यत्यश्लिष्ट जतु च काष्ठं च।

[योगविभागात् सिद्धम्। पा० ३।१।४६।४ योगविभागः करिष्यते। श्लिषः। श्लिषः क्सो भवति। तत आलिङ्गने। आलिङ्गने च श्लिषः क्सो भवति।]

---

* Liebich has अदृशिवर्जितात्.

† Liebich puts a comma after भवति and a full stop after पुनर्विधानात्.

**णिश्रिद्रुस्रुकमः कर्तरि चङ् ॥६८॥**

ण्यन्ताच्छ्रयत्यादिभ्यश्च लुङि कर्तरि चङ् भवति। अचीकरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। अचकमत। कर्तरीति किम्? अकारयिषातां कटौ देवदत्तेन। चकारश्चङि [५।१।२४] इति चिह्नार्थः। ङकारोऽदेङ्प्रतिषेधार्थः।

[ णिश्रिद्रुस्रुभ्यः कर्तरि चङ्। पा० ३।१।४८, णिश्रिद्रुस्रुषु कमेरुपसंख्यानम् ३।१।४८।१, णिश्रिद्रुस्रुकमिभ्यः कर्तरि चङ्। स० क० १।३।८४ ]

**धेश्वेर्वा ॥६९॥**

धेटः श्वयतेश्च लुङि वा चङ् भवति। अदधत्, अधासीत्, अधात्। अशिश्वियत्, अश्वयीत्, अश्वत्। कर्तरीत्येव। अधिषातां गावौ वत्सेन।

[ विभाषा धेट्श्व्योः। पा० ३।१।४९, धेट्श्विभ्यां वा। स० क० १।३।८५। Anxious to avoid विधेयाविमर्श Candra ends his rule with वा which stood at the beginning of Pāṇini's rule.]

**ऋसृशाससुख्यावचोऽङ् ॥७०॥**

एतेभ्यो लुङ्यङ् भवति। आरत्, समारत। असरत्। अशिषत्। आस्थत्, पर्यास्थत। आख्यत्। अवोचत्। शास्साहचर्यादाद्ययोर्लुप्तशपोर्ग्रहणम्। तेनह न भवति। आर्षीत्। असार्षीत्।

[ अस्यतिवक्तिख्यातिभ्योऽङ्। सर्तिशास्त्यर्तिभ्यश्च। पा० ३।१।५२,५६। शास्यसुख्यावचिभ्योऽङ्। ऋसृभ्यां वा। स० क० १।३।८६–८७। Probably our commentary was the first to insist that this अङ् is added only to the roots ṛ and sṛ belonging to the *hu*-class, in the case of the Bhvādigaṇīya roots the forms would be आर्षीत् and असार्षीत्. Thus Goyicandra says: भ्वादेर्न ग्रहणमिति चान्द्राः. This led subsequent grammarians like Bhoja to make *aṅ* optional in the case of the two roots. Hemacandra frames the rule: सर्त्यर्तेर्वा iii. 4. 61 and says in his Bṛhadvṛtti: सृ ऋ आभ्यां धातुभ्यां

कर्तर्ययतन्यामङ् प्रत्ययो वा भवति । सृशदादिर्घ्वादिर्वा । असरत् । असार्षीत् । सर्तेः कर्तरि आत्मनेपदं न दृश्यत इति नोदाहृयते । ऋ । आरत् । आर्षीत् । समारत । समार्ष्ट । आत्मनेपदे न भवति परस्मैपदे नित्यमित्येके । परस्मैपदे नित्यमात्मनेपदे अर्तेर्वा, सर्तेर्न इत्यन्ये । उभयत्र नित्यमित्यपरे । See Kātantra iii. 2.28, S'ākaṭāyana iv. 3. 11, Mugdhabodha 619 (विकल्प ).

**ह्वालिप्सिचः ॥७१॥**

ह्वयतेर्लिपः सिचश्च लुङ्यङ् भवति । अह्वत् । अलिपत् । असिचत्।

[ लिपिसिचिह्वश्च । पा० ३।१।५३, लिपिसिचिह्वयतिभ्यः । स० क० १।३।८८]

**तङि वा ॥७२॥**

ह्वादिभ्यस्तङ्यङ् वा भवति । आह्वत, आह्वास्त । अलिपत, अलिप्त । असिचत, असिक्त ।

[आत्मनेपदेष्वन्यतरस्याम् । पा० ३।१।५४, आत्मनेपदे वा । स० क० १।३।८९]

**लृदिद्द्युतादिपुष्यत्यादिभ्योऽतङि ॥७३॥**

लृदितो द्युतादिभ्यः पुष्यत्यादिभ्यश्च लुङ्यतङ्यङ् भवति । अगमत्, असृपत् । व्यद्युतत्, अश्वितत् । अपुषत् । अशुषत् । अतङीति किम् ? व्यद्योतिष्ट, व्यलोटिष्ट । श्यना निर्देशात् पुष्णातेर्न भवति । अपोषीत् ।

[पुषादिद्युताद्यॢदितः परस्मैपदेषु । पा० ३।१।५५, लृदिद्द्युतादिपुष्यत्यादिभ्यः परस्मैपदे । स० क० १।३।९० ]

**इरितो वा ॥७४॥** [ पा० ३।१।५७ ]

इरितः क्रियार्थाल्लुङ्यतङ्यङ् वा भवति । अरुधत् , अरौत्सीत् । अतङीत्येव । अरुद्ध ।

**जॄस्तम्भुम्रुचुम्लुचुग्लुचः ॥७५॥**

एतेभ्यो लुङ्यतङ्यङ् वा भवति । अजरत् , अजारीत् । अस्वत् ,

अदवयीत्, अशिश्वियत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। न्यग्लुचत, न्यग्लोचीत्। न्यग्लुञ्चीदिति ग्लुञ्चेरेतद्रूपम्। ननु च न्यग्लुचदिति ग्लुञ्चेरपि रूपमिष्यत एव, तथा च गत्यर्थता गम्यते। अनेकार्था हि धातव* इति ग्लुचिरपि गत्यर्थो भविष्यति।

[ जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च। पा० ३।१।५८, इरिज्-जृशियस्तन्भुम्रुच्म्लुच्ग्रुच्ग्लुच्ग्लुञ्च्भ्यो वा। स० क० १।३।९१]

**चिण् ते पदः ॥७६॥** [पा० ३।१।६०]

लुङि तभूते पदश्चिण् भवति। उदपादि। त इति किम्? उदपत्साताम्। चकारश्चिणः [ १।१।८५ ] इति चिह्नार्थः। णकार आदेजर्थः।

[पदस्ते चिण् तलुक् च। स० क० १।३।९२]

**दीपजनबुधपूरितायिप्यायो वा ॥ ७७ ॥**

दीपादिभ्यस्तभूते लुङि परतश्चिण् वा भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट।

[ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्। पा० ३।१।६१, ०प्यायिभ्यो वा। स० क० १।३।९४ ]

**भावाप्ययोः ॥ ७८ ॥**

क्रियायां क्रियाव्याप्ये चार्थे लुङि ते परतः क्रियार्थाच्चिण् भवति। आसि भवता। अकारि कटो भवता। अकारि कटः स्वयमेवेति स्वयं-

---

* The full stanza is found at the end of the Dhātupāṭha :

क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।
प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः॥

Goyicandra says under शाच्छोर्वा of the tiṅanta section of the Saṁkṣiptasāra : धातूनामनेकार्थत्वेनेष्टार्थसिद्धिमभ्युपगन्तुं चन्द्र एव परं परमपण्डितः।

शब्दादत्र कर्ता प्रतीयते, चिण् पुनर्व्याप्य एव। यदा तु कर्तरि लकारस्तदा, अकृत कटः स्वयमेव। तथा, अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेवेति। रुधेरपि व्याप्यविवक्षायामिष्यत एव चिण्। अरोधि गौर्देवदत्तेनेति। यदा तु गोरात्मन एव कर्तृत्वं तदा, अरोधि गौरात्मनेति भवत्येव। य एव चार्थ आत्मनेति स एव चार्थ स्वयमेवेति। अरोधीति चोक्ते नाथुते कर्तृवाचिनि पदान्तरे कर्तृ गम्यते। तस्मादिहापि व्याप्यविवक्षाया चिणा भवितव्यम्। यदा कर्तरि लकारस्तदा, अरुद्ध गौः स्वयमेवेति। तदाप्यात्मानर्मि पदान्तराद् व्याप्यता गम्यते, स्वयमेवेति वा वचनात्। अतः तपस्तापस इति कर्तर्येव लकारः, तपआप्याद् [ १।४।७५ ] इति तङ् तपिश्चात्र करोत्यर्थे वर्तते। अकृत तपस्तापस इत्यर्थः।

[ चिण् भावकर्मणोः। पा० ३।१।६६, भावकर्मणोः। स० क० १।३।१०० Candra uses आप्य for व्याप्य here, though the Vṛtti has व्याप्य. ]

**नानोस्तपः॥ ७९॥** [ स० क० १।३।१०१ ]

अनोर्विशेष्यात् तपश्चिण् न भवति। अन्ववातप्त पापेन कर्मण अनोरिति किम्? अतापि पृथिवी राज्ञा।

[ तपोऽनुतापे च। पा० ३।१।६५ ]

**तिङ्शिति यगलिडाशीर्लिङि॥ ८०॥**

तिङि शिति च भावाप्ययोर्यग् भवति, लिटमाशीर्लिङं च व यित्वा। आस्यते देवदत्तन। आस्यमानम्। गम्यते ग्रामः। ग मानः। अलिडाशीर्लिङीति किम्? बभूवे देवदत्तेन। बिभिदे कुसू भविषीष्ट। पक्षीष्ट ओदनः। भिद्यते कुसूलः स्वयमेवेति भिद्यत श्रवणाद् व्याप्यता गम्यते, स्वयमेवेति श्रवणात् कर्तृत्वम्; कर्तृ विवक्षायां तु भिनत्ति कुसूल आत्मानमिति। दुग्धे गौः। पयो मु सीति गम्यते। तथा, अदुग्ध गौः स्वयमेवेति। प्रस्नुते गौः स्वयमे

नमते दण्डः स्वयमेवेति स्नुनमः स्वयम् [ १।४।१०२ ] इति तङ्। अवकिरते हस्ती स्वयमेव, श्रथ्नीते माला स्वयमेव, ग्रथ्नीते माला स्वयमेव, चिकीर्षते कटः स्वयमेवेति किरादिश्रन्थग्रन्थसनामाप्ये [ १।४।१०० ] इति तङ्। तस्मादुदुम्बरः सलोहितफलं पच्यत* इति व्याप्यतैवात्र सक्रियाविशेषणा विवक्षिता। कर्तृत्वविवक्षायां तु पचत्यात्मानमिति। परिवारयन्ते कण्टका वृक्षमिति पदसंस्कारकाले फलवति [ १।४।१२४ ] इति तङ्। पदान्तरसम्बन्धे तु कर्तुः फलासम्भवो गम्यते। तथा कारयते कटः स्वयमेव, चोरयते गौः स्वयमेव, भूषयते कन्या स्वयमेव, मण्डयते कन्या स्वयमेव, श्रयते दण्डः स्वयमेव, ब्रूते कथा स्वयमेव, आहृते गौः स्वयमेवेति कर्तृतैव गम्यते। आङो यमहनः० [ १।४।७३ ] इति तङ्।

[सार्वधातुके यक्। पा० ३।१।६७, स० क० १।३।१०२. P's rules for Sārvadhātuka and Ārdhadhātuka are : तिङ्शित् सार्वधातुकम्। आर्धधातुकं शेषः। लिट् च। लिङाशिषि। Since Candra is debarred from using Sārvadhātuka, he has to use this periphrasis. यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्। ३।१।८९।१ यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानमिति। भाष्यम्। भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम् ३।१।६७।२, कर्मकर्तरि च। न दुहः। णिश्रिब्रूञात्मनेपदाकर्मकभूषाकर्मकिरादिश्रन्थग्रन्थसन्स्नुनमिभ्यश्चिण् च। स० क० १।३।१०३-१०५]

तपस्तपआप्यात् ॥ ८१ ॥

तप आप्यं यस्य तस्मात्तपतेर्यग् भवति। तप्यते तपस्तापसः। तपआप्यात् [ १।४।७५ ] इति तङ्। तपआप्यादिति किम्? उत्तपति सुवर्णं सुवर्णकारः। कर्त्रर्थ आरम्भः।

[तपस्तपःकर्मकस्यैव। पा० ३।१।८८, तपस्तपःकर्मकात्। स० क० १।३।१०६]

---

* Liebich has तस्मादुदुम्बरः, स लोहितफलं पच्यते.

**कर्तरि शप्** ॥ ८२ ॥ [पा० ३।१।६८, स० क० १।३।१०७ ]

क्रियार्थातिङि शिति च परभूते कर्तरि शब् भवति। तरति। नयति। धारयः। पारयः। अलिडाशीर्लिङीत्येव। बभूव। भूयात्। शकार एचोऽशित्यात् [५।१।४९] इति चिह्नार्थः। पकारः शप्श्यनः [५।४।३५] इति चिह्नार्थः।

**अदादिभ्यो लुक्** ॥ ८३ ॥ [स० क० १।३।१०८]

अदादिभ्यः परस्य शपो लुग् भवति। अत्ति। हन्ति।

[ अदिप्रभृतिभ्यः शपः। पा० २।४।७२ ]

**हूनां द्वे च** ॥ ८४ ॥

जुहोत्यादीनां शपो लुग् भवति द्वित्वं च। जुहोति बिभेति।

[ जुहोत्यादिभ्यः श्लुः। पा० २।४।७५, स० क० १।३।१०९ ; श्लौ। पा० ६।१।१०, श्लुचङि (read श्लुचङोः)। स० क० ६।१।२ ]

**चिणः** ॥ ८५ ॥

चिणः परस्य तशब्दस्य लुग् भवति। उदपादि। तिङ्शितीत्येव। अकारितराम्।

[ चिणो लुक्। पा० ६।४।१०४, पदस्ते चिण् तलुक् च। स० १।३।९२]

**यङो बहुलम्** ॥ ८६ ॥

यङो बहुलं लुग् भवति। रोरवीति, रोरूयते। क्वचित्तु नित्यमेव भवति। लोलुवः, पोपुवः। क्वचिन्न भवति। लोलूया।

[यङोऽचि च। पा० २।४।७४, लुग्बहुलम्। स० १।३।९१]

**दिवादिभ्यः श्यन्** ॥ ८७ ॥ [पा० ३।१।६९, स० १।३।११०]

दिवादिभ्यः परस्य शपो विषये श्यन् भवति। दीव्यति, सीव्यति।

**भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषो वा** ॥ ८८ ॥

भ्राशादिभ्यः श्यन् वा भवति। भ्राश्यते, भ्राशते। भ्लाश्यते

भ्लाशते। भ्रम्यति, भ्रमति। भूवादित्वान्न* दीर्घत्वम्। क्राम्यति, क्रामति। क्लाम्यति, क्लामति। त्रस्यति, त्रसति। त्रुट्यति, त्रुटति। लष्यति, लषति।

[वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। पा० ३।१।७०, ०लषिभ्यो, वा। स० १।३।११२]

Bhoja (i. 3. 112) follows Candra, but changes लषः into लषिभ्यः, As regards भ्रम् Kās'ikā says भ्रमु अनवस्थाने, भ्रमु चलने, द्वयोरपि ग्रहणम् and gives the examples भ्राम्यति, भ्रमति as against Candra's भ्रम्यति, भ्रमति. Hemacandra says in his Bṛhadvṛtti on iii. 4.73: भ्राम्यति। भ्रमति। भौवादिकस्य भ्रम्यति। Jinendrabuddhi says: द्वयोरपि ग्रहणमिति। विशेषानुपादानात्। अर्थभेदाच्च। अन्यो हि चलनार्थः, अन्यश्चानवस्थानार्थः, तथाहि चलन्नपि कार्येषु स्थिरारम्भी स्थिर इत्युच्यते। अचलन्नपि कार्येष्वस्थिरारम्भ्यस्थिर इत्युच्यते। तत्रार्थद्वयेऽपि प्रत्ययद्वयं यथा स्यादिति द्वयोरपि ग्रहणम्। रूपभेदोऽप्यस्त्येव। चलनार्थस्य श्यनि विहिते दीर्घत्वं न भवति, अशमादित्वात्। शपि तु द्वयोरपि तुल्यम्। तेन त्रीणि रूपाणि भवन्ति— भ्रम्यति, भ्रमति, भ्राम्यतीति। In the printed Hṛdayahāriṇī on Sarasvatī-Kaṇṭhābharaṇa i. 3. 112 we read भ्राम्यति भ्रामति where भ्रामति is evidently an error for भ्रमति. Similarly भ्राश्यति भ्राशति भ्लाश्यति भ्लाशति would appear to be erroneous forms of भ्राश्यते भ्राशते भ्लाश्यते भ्लाशते]

यसः ॥८९॥

यसः श्यन् वा भवति। यस्यति, यसति।

[यसोऽनुपसर्गात्। पा० ३।१।७१, स० क० १।३।११३]

समः ॥९०॥

सम एव पराद् यसः श्यन् वा भवति। संयस्यति, संयसति। सम इति किम्? आयस्यति।

---

* This is a curious form based on Pāṇini's rule भूवादयो धातवः 1.3.1.

[ संयसश्च । पा० ३।१।७२, स० क० १।३।११४ ]

**कुषिरज आप्ये ॥९१॥**

कुषे रजश्च यदाप्यं तस्मिन्नेव कर्तरि श्यन भवति । कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। आप्य इति, किम् ? कुष्णाति, रजति ।

[ कुषिरजोः प्राचां श्यन् परस्मैपदं च । पा० ३।१।९०, कुषिरजोः कर्मकर्तरि परस्मैपदं च । स० क० १।३।११५ ]

**तुदादिभ्यः शः ॥९२॥** [ पा० ३।१।७७, स० क० १।३।११६ ]

तुदादिभ्यः शः परो भवति । तुदति । नुदति ।

**रुधादीनां श्नम् ॥९३॥** [ स० क० १।३।११७ ]

रुधादीनामन्त्यादचः परः श्नम् (श्नः ?) भवति । रुणद्धि । भिनत्ति ।

[ रुधादिभ्यः श्नम् । पा० ३।१।७८. Candra and Bhoja change the Ablative into the Genitive because *n* is inserted after the final vowel.]

**तनादिभ्य उः ॥९४॥** [ स० क० १।३।११८ ]

तनादिभ्य उः परो भवति । तनोति । सनोति । करोति ।

[तनादिकृञ्भ्य उः । पा० ३।१।७९ ]

**स्वादिभ्यः श्नुः ॥९५॥** [ पा० ३।१।७३, स० क० १।३।११९ ]

स्वादिभ्यः श्नु. परो भवति । सुनोति । सिनोति ।

**श्रुकृण्विधिवां शृकृधि च ॥९६॥** [ स० क० १।३।१२० ]

श्रु कृवि धिवीत्येतेषां श्नुर्भवति शृ कृ धि इत्येते चादेशा भवन्ति । शृणोति । कृणोति । धिनोति ।

[ श्रुवः शृ च । धिन्विकृण्व्योर च । पा० ३।१।७४, ८० ]

**अक्षो वा ॥९७॥** [ स० क० १।३।१२१ ]

अक्षः श्नुः परो भवति वा । निरक्ष्णोति, निरक्षति ।

[ अक्षोऽन्यतरस्याम् । पा० ३।१।७५ ]

तनूकृतौ तक्षः ॥९८॥

तनूकरणे तक्षः श्नुर्वा भवति । निस्तक्ष्णोति, निस्तक्षति । तनूकृताविति किम् ? सन्तक्षति वाग्भिः ।

[ तनूकरणे तक्षः । पा० ३।१।७६, स० क० १।३।१२२. Candra saves a syllable by changing करणे to कृतौ. ]

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुभ्यः ॥९९॥

एतेभ्यः श्नुः परो भवति । स्तभ्नोति । स्तुभ्नोति । स्कभ्नोति । स्कुभ्नोति । स्कुनोति ।

[ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च । पा० ३।१।८२, स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्यः । स० क० १।३।१२३ ]

श्ना ॥१००॥

एतेभ्य एव श्नाः परो भवति । स्तभ्नाति । स्तुभ्नाति । स्कभ्नाति । स्कुभ्नाति । स्कुनाति ।

क्र्यादिभ्यः ॥१०१॥

क्र्यादिभ्यः श्नाः परो भवति । क्रीणाति । प्रीणाति ।

[क्र्यादिभ्यः श्ना । पा० ३।१।८१, श्ना क्र्यादिभ्यश्च । स० क० १।३।१२४]

हलो ह्रौ शानच् ॥१०२॥ [स० क० १।३।१२५]

हलन्ताद्धौ परतः श्नाविषये शानच् परो भवति । पुषाण, गृहाण । हल इति किम् ? क्रीणीहि । हाविति किम् ? अश्नाति ।

[ हलः श्नः शानज्झौ । पा० ३।१।८३ ]

बहुलम् ॥१०३॥ स० क० १।३।१२६ ]

बहुलमित्येतदधिकृतं वेदितव्यम् ।

[ कृत्यल्युटो बहुलम् । पा० ३।३।११३ ]

भावाप्ययोः ॥१०४॥

क्रियायां क्रियाव्याप्ये चार्थे इत्येतदधिकृतं वेदितव्यम् ।

[ तयोरेव कृत्यक्तखलर्थाः । पा० ३।४।७०, भावकर्मणोरा ण्यतः । स० क० १।३।१२७ ]

**तव्यानीयर्केलिमरः ॥१०५॥**

तव्यादयः क्रियार्थात् परे भावाप्ययोर्बहुलं भवन्ति । कर्तव्यम । करणीयम । कर्तव्यः कटः । करणीयः कटः । भिदेलिमा मापाः । बहुलाधिकारात् करणादिष्वपि भवन्ति । स्नानीयं चूर्णम् । दानीयो ब्राह्मणः । समावर्तनीयो गुरुः । प्रवचनीय उपाध्यायः । उपस्थानीयः शिष्यः । तव्यस्य वा स्वरितत्वं वक्ष्यामः ।

[ तव्यत्तव्यानीयरः । पा० ३।१।९६, स० क० १।३।१२८, केलिमर उपसंख्यानम् । पा० ३।१।९६।१, केलिमर् कर्मकर्तरि । स० क० १।३।१३५ ]

**वास्तव्यः ॥१०६॥**

वसेस्तव्य कर्तरि दीर्घत्वं च निपात्यते । वसतीति वास्तव्यः ।

[ वसेस्तव्यत् कर्तरि णिच्च । पा० ३।१।९६।२. The next Varttika तद्धितो वा derives वास्तव्य from वास्तु with यत् . वास्तव्यः कर्तरि । प्रवचनीयोपस्थानीयरमणीयादयो वा । स्नानीयादयः करणे । . दानीयादयः सम्प्रदाने । समावर्तनीयादयोऽपादाने । स्थानीयादयोऽधिकरणे । स० क० १।३।१२९-१३४ ]

**यत् ॥१०७॥**

क्रियार्थाद् बहुलं भावाप्ययोर्यत् परो भवति । चेयम्, जेयम्, भव्यम् । भव्यः पुरुषः । गेयानि ब्राह्मणेन सामानि । गेयो ब्राह्मणः साम्नाम् । ऋहलो ण्यत वक्ष्यति [१।१।१३०] ।

[ अचो यत् । पा० ३।१।९७, स० क० १।३।१३६ ]

**पुशकितकिचतियतिशसिसहियजः ॥१०८॥**

पवर्गान्ताच्छकादिभ्यश्च भावाप्ययोर्बहुलं यद भवति । जप्यम् ; लभ्यम् । शक्यम् । तक्यम् । चत्यम् । यत्यम् । शस्यम् । सह्यम् । यज्यम् । जनिवधोरिगुपान्ताना च स्वरं वक्ष्यामः ।

[पोरदुपधात् । पा० ३।१।९८, स० क० १।३।१३९, शकिसहोश्च । पा० ३।१।९७, यति जनेरुपसंख्यानम् ३।१।९७।१, अत्यल्पमिदमुच्यते, तकिशसिचतियति-जनीनामुपसंख्यानमिति वक्तव्यम् । भाष्यम् । शकितकिचतियतिशसिसहि-बधियजिभजिम्यः । स० क० १।३।१४० Candra follows Jainendra and includes यद्. Jumara (Sam. iii. 200) has यज्यमित्येके and Goyi-candra says : एक इत्युक्तम् चान्द्रशास्त्रे दृष्टत्वात् ।]

गदमदयमोऽप्रादेः ॥१०९॥

गदादिभ्यः प्रादिरहितेभ्यो यद् भवति । गद्यम् । मद्यम् । यम्यम् । अप्रादेरिति किम् ? प्रगाद्यम् । प्रमाद्यम् । आयाम्यम् । प्र । परा । अप । सम् । अनु । अव । निर् । दुर् । वि । आङ् । अधि । अपि । नि । अति । सु । उद् । अभि । प्रति । परि । उप । यमो नियमार्थं वचनम् ।

[ गदमदचरयमश्चानुपसर्गे । पा० ३।१।१००, गदमदयमिभ्योऽनुपसर्गे । स० क० १।३।१४१ ]

चरः ॥११०॥

चरतेर्भावाप्ययोर्यद् भवति । चर्यम् । अप्रादेरित्येव । अभिचार्यम् ।

अगुरावाङः ॥१११॥

चरतेराङः परादगुरौ यद् भवति । आचर्यो देशः । अगुराविति किम् ? आचार्यः ।

[अनुपसर्गाच्चरतेराङि चागुरौ । ३।१।१००।१, चरेराङि चागुरौ । काशिका ३।१।१००, स० क० १।३।१४२]

अवद्यपण्यवर्या गर्ह्यविक्रेयानिरोधेषु ॥११२॥ [स० १।३।१४३]

अवद्यमिति निपात्यते गर्ह्येऽर्थे । अनुद्यमन्यत् । पण्यमिति निपात्यते विक्रेयेऽर्थे । पाण्यमन्यत् । वर्येत्यनिरोधे गम्यमाने । वृत्यान्या । स्त्रीलिङ्गनिर्देशादिह न भवति । वार्या ऋत्विजः ।

[अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु । पा० ३।१।१०१ । विक्रेय is shorter and easier to understand than पणितव्य.]

वह्यं करणम् ॥११३॥ [पा० ३।१।१०२, स० क० १।३।१४४]

वह्यमिति निपात्यते करणं चेत्। वहन्त्यनेनेति वह्यं शकटम्। वाह्यमन्यत्।

अर्यः स्वामिवैश्ययोः ॥११४॥ [पा० ३।१।१०३, स० १।३।१४५]

अर्य इति निपात्यते स्वामिनि वैश्ये च। आर्योऽन्यः।

ऋतुमत्युपसर्या ॥११५॥

उपसर्येति निपात्यते ऋतुमती चेत्। उपसार्यान्या।

[उपसर्या काल्या प्रजने। पा० ३।१।१०४, स० क० १।३।१४६]

अजर्यं सङ्गतम् ॥११६॥

अजर्यमिति कर्तरि निपात्यते सङ्गतं चेत्। अजर्यमार्यसङ्गतम् [जातकमाला]। सङ्गतमिति किम्? अजरिता कम्बलः।

[अजर्यं सङ्गतम्। पा० ३।१।१०५, कर्तर्यजर्यं सङ्गतम्। स० क० १।३।१४७]

The correct reading would appear to be कर्तर्यजर्यं सङ्गतम् which is found in the Sarasvatı-kaṇṭhābharaṇa. Candra and Bhoja generally emend the rules of Pāṇini in the light of the observations of Kātyāyana aud Patañjali, and Kātyayana has the Vārttika अजर्यं कर्तरि iii. 1. 105. 1 and Patañjali says: कर्तृविशेषणं सङ्गतग्रहणम्। सङ्गतं चेत् कर्तृ भवतीति। तद् यथा। हृषेर्लोमसु [पा० ७।२।२९] इति, लोमानि चेत् कर्तृणि भवन्ति। So कर्तरि in in the Vṛtti is from the sūtra. Kramadīśvara has जिरश्च सङ्गमे कर्तरि (कृदन्त २१३).]

वदः सुपः क्यप् च ॥११७॥

वदतेः सुपः परात् क्यप् भवति, यत् च। ब्रह्मोद्यम्, ब्रह्मवद्यम्। सुप इति किम्? वाद्यम्। अप्रादेरित्येव। अभिवाद्यम्।

[वदः सुपि क्यप् च। पा० ३।१।१०६, स० क० १।३।१४८. Since in the system of Pāṇini an उपपद is denoted by the Locative, P. and B. have सुपि]

**भुवः ॥११८॥** [ स० क० १।३।१५० ]

भवतेः सुपः परात् क्यव् भवति। ब्रह्मभूयं गतः। सुप इत्येव। भव्यम्। अप्रादेरित्येव। प्रभव्यम्।

[भुवो भावे। पा० ३।१।१०७, भुवोऽनुपसर्गस्याकर्मकत्वाद् भाव एवोदाह्रियते। हृदयहारिणी।]

**भावे हनस्त च ॥११९॥** [स० क० १।३।१५१]

हन्तेः सुपः पराद् भावे क्यव् भवति, तकारश्चान्तादेशः। ब्रह्महत्या। भाव इति किम्? श्वघात्यः। सुप इत्येव। घातो वर्तते। अप्रादेरित्येव। उपघातः। ण्यदपि न भवति बहुलाधिकारात्।

[हनस्त च। पा० ३।१।१०८]

**इण्स्तुशासुवृञ्दृजुषः ॥१२०॥**

इणादिभ्यः क्यव् भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। वृङस्तु वार्या ऋत्विजः। आदृत्यः। जुष्यः। कथम् उपेयः, अवश्यस्तुत्यः, आशास्यमन्यत् पुनरुक्तभूतम् [रघु० ५।३४], अनिवार्यो गजरन्यैः स्वभाव इव देहिनामिति [महाभारते]? बहुलाधिकारात्।

[एतिस्तुशास्वृदृजुषः क्यप्। पा० ३।१।१०९, क्यब्विधौ वृञ्ग्रहणम्। वा १ इण्स्तुशासुवृञ्दृजुषिभ्यः। स० क० १।३।१५२]

**ऋदुपान्तादक्लृपिचृतः ॥१२१॥**

ऋकारोपान्तात् क्रियार्थात् क्लृपिचृतिवर्जितात् क्यव् भवति। वृत्यम्। अक्लृपिचृत इति किम्? सङ्कल्प्यम्। विचर्त्यम्।

[ऋदुपधाच्चाक्लृपिचृतेः। पा० ३।१।११०, ऋदुपधाच्चानुचिक्लृपिचृतेः। स० क० १।३।१५३]

**खेयम् ॥१२२॥**

खनतेः क्यपि खेयमिति निपात्यते।

[ई च खनः। पा० ३।१।१११, खनेरी च। स० क० १।३।१५४]

**भृञोऽसंज्ञायाम् ॥१२३॥** [पा० ३।१।११२, स० क० १।३।१५५]

भृञोऽसंज्ञायां क्यप् भवति । भृत्यः । असंज्ञायामिति किम् ? भार्या । ननु च संज्ञायामपि स्त्रियां क्यबस्ति ? न, तस्य भावे विधानात् ।

**समो वा ॥१२४॥**

संपूर्वाद् भृञः क्यप् भवति वा । संभृत्यः, संभार्यः ।

[समश्च बहुलम् । पा० ३।१।११२।४, समि वा । स० क० १।३।१५६]

**कृवृषिमृजिशंसिदुहिगुहः ॥१२५॥**

कृञादिभ्यः क्यप् भवति वा । कृत्यम्, कार्यम् । वृष्यम्, वर्ष्यम् । मृज्यम्, मार्ग्यम् । शस्यम्, शंस्यम् । दुह्यम्, दोह्यम् । गुह्यम्, गोह्यम् ।

[ विभाषा कृवृषोः । मृजेर्विभाषा । पा० ३।१।१२०, ११३ । शंसिदुहिगुहिभ्यो वेति वक्तव्यम् । काशिका ३।१।१०९ । भाष्य एतदुपसंख्यानं न दृष्टम् । पदमञ्जरी । कृवृषिमृजिशंसिदुहिगुहिभ्यः । स० क० १।३।१५७ ]

**राजसूयरुच्यकृष्टपच्याव्यथ्याः ॥१२६॥**

एते शब्दा निपात्यन्ते । राज्ञा सोतव्यो राजसूयः । कथं सूर्यः ? सूरशब्दात् स्वार्थिको यत्*, अथवा सूर्यागस्त्ययोः [५।३।१५३] इति निपातनात् । मृषापूर्वाद् वदतेः क्यप् सिद्ध एव । मृषोद्यम् । पक्षे न भविष्यति बहुलाधिकारात् । रोचत इति रुच्यः । कृष्टे पच्यन्त इति कृष्टपच्याः शालयः । न व्यथते, अव्यथ्यः ।

[ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । पा० ३।१।११४ सूर्यरुच्याव्यथ्याः कर्तरि । सुसर्तिभ्यां सर्तेररुत्वं सुवतेर्वा रुडागमः । कुप्यं संज्ञायाम् । कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च । ३।१।११४।१-३ ; कृष्टपच्याः कर्मकर्तरि । दव्याव्यथ्यौ कर्तरि । राजसूयसूर्यौ यज्ञदेवतयोः । स० क० १।३।१५८-१६० ] ।

---

* सूरशब्दात् स्वार्थिको ष्यञ्—MSS., but when ष्यञ् is added to सूर, the form will be सौर्य. Besides a तद्धित suffix ष्यञ् has yet to be discovered. सूर एव सूर्य इति चन्द्रगोमी । सु० म० ।

**कुप्याज्यभिद्योद्ध्यसिध्यगुग्यानि नाम्नि ॥१२७॥**

एतानि शब्दरूपाणि संज्ञायां निपात्यन्ते। कुप्यम्, धनम्। आज्यम्, घृतम्। भिद्यो नाम नदः। एवमुद्ध्यः। सिध्यः। कथं पुष्यः? तिष्यपुष्ययोः [५।३।१५४] इति निपातनात्। युग्यम्, यानम्। अन्यत्र। गोप्यम्, अङ्ग्यम्*, भेद्यम्, उज्झ्यम्, सेधन† सेध्यम्, योग्यम्।

[पा० ३।१।११४, भिद्योद्ध्यौ नदे। पुष्यसिद्धौ नक्षत्रे। युग्यं च पत्त्रे। पा० ३।१।११५, ११६, १२१; अञ्जेश्चोपसंख्यानं संज्ञायाम् ३।१।१०९।२ भिद्योद्ध्यौ नदे। तिष्यपुष्यसिद्धा नक्षत्रे। युग्य पत्रे। आज्यं घृते। कुप्यं धने। स० क० १।३।१६१-१६५]

**जित्याविपूयविनीय हलिमुञ्जकल्केषु ॥ १२८ ॥**

जित्यादयो हल्यादिष्वर्थेषु निपात्यन्ते। जित्या हलिः; जेयमन्यत्। विपूयो मुञ्जः; विपाव्यमन्यत्। विनीयः कल्कः; विनेयमन्यत्।

[विपूयविनीयजित्या मुञ्जकल्कहलिषु। पा० ३।१।११७, जयतेर्हलौ। वौ नीपूङ्भ्यां कल्कमुञ्जयोः। स० क० १।३।१६६-१६७]

**पदास्वैरिपक्ष्यबाह्यासु ग्रहः ॥ १२९ ॥** [स० क० १।३।१६८]

पदादिष्वर्थेषु ग्रहः क्यब् भवति। प्रगृह्यं पदम्, यदचि न सन्धीयते। अवगृह्यं पदम्, यस्यावग्रहः क्रियते। अस्वैरिषु। गृह्यका इमे। अवरुद्धका इत्यर्थः। पक्ष्येषु। अर्जुनगृह्याः‡। बाह्यायाम्। ग्रामगृह्या स्त्री। ग्राह्यमन्यत्।

---

* Liebich has अग्यम् from MSS., but there is no reason why the nasal should be dropped. Cf. व्यङ्ग्य.

† सेधनम् in the Vṛtti would appear to be an interpolation, since the commentator does not mention the non-gerundive forms in the other cases.

‡ अर्जुनगृह्यः MSS., but पक्ष्येषु is plural and अर्जुनगृह्याः is found in the Hṛdaya-hāriṇī.

[पदास्वैरिबाह्यापक्ष्येषु च । पा० ३।१।११९, पदास्वैरिपक्ष्यबाह्यासु ग्रह. ।
स० क० १।३।१६८]

**ऋहलो ण्यत् ॥ १३० ॥**

ऋवर्णान्ताद्धलन्ताच्च क्रियार्थाण् ण्यद् भवति । कार्यम्, हार्यम् ।
पाक्यम्, वाक्यम् ।

[ऋहलोर्ण्यत् । पा० ३।१।१२४, स० क० १।३।१६९]

**पाणिसमवाभ्यां सृजः ॥ १३१ ॥**

पाणिपूर्वात् समवपूर्वाच्च सृजतेर्ण्यद् भवति । पाणिसर्ग्या रज्जुः ।
समवसर्ग्या । पाणिसमवाभ्यामिति किम् ? सृज्यम् ।

[पाणौ सृजेर्ण्यद्विधिः । समवपूर्वाच्च । ३।१।१२४।१-२ । पाणौ सृजः ।
समवपूर्वाच्च । स० क० १।३।१७०-१७१] ।

**ओरावश्यके ॥ १३२ ॥** [पा० ३।१।१२५, स० क० १।३।१७२]

उवर्णान्तादवश्यम्भावे गम्यमाने ण्यद् भवति । लाव्यम् । अवश्य-
लाव्यम्* । लव्यमन्यत् ।

**आसुयुवपिरपिलपित्रपिचमिदभः ॥ १३३ ॥**

आङ्पूर्वात् सुनोतेर्यो त्यादिभ्यश्च ण्यद् भवति । आसाव्यम्,
याव्यम्, वाप्यम्, राप्यम्, अभिलाप्यम्, अपत्राप्यम्, आचाम्यम्,
अवदाभ्यम् ।

[आसुयुवपिरपिलपित्रपिचमश्च । पा० ३।१।१२६, लपिदभिभ्यां च । ३।१।
१२४।३, आसुयुवपिरपिलपित्रपिचम्यानमिदभिभ्यः । स० क० १।३।१७३]

**अमावसो वा ॥ १३४ ॥**

अमापूर्वाद् वसतेर्ण्यद् भवति वा । सह वसतोऽस्यां चन्द्रार्कावित्य-

---

* Liebich has अवश्य लाव्यम् but all grammars have the compound अवश्यलाव्यम्. द्योतितस्यापि क्वचित् प्रयोगो दृश्यते, लाघवं प्रत्यनादरात् ।

मावास्या, अमावस्या। ण्यता मुक्ते यद् भवति। *अनौवस इति प्रतिषेधान् नाद्युदात्तत्वं भवति।

[अमावस्यदन्यतरस्याम्। पा० ३।१।१२२, अमावसोऽधिकरणे णिद्वा। स० क० १।३।१७४]।

**प्रणाय्योऽसम्मते ॥ १३५ ॥**

प्रणाय्य इति निपात्यते ऽसम्मतश्चेत्। प्रणाय्यश्चौरः। असम्मत इति किम्? प्रणेयः साधुः। कथं तदेतज्ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिने इति†? बहुलाधिकारात्।

[प्रणाय्योऽसम्मतौ। पा० ३।१।१२८, प्रणाय्योऽसम्मतनिष्कामयोः। स० क० १।३।१७६]।

**धाय्यपाय्यानाय्यसान्नाय्यनिकाय्या नाम्नि ॥ १३६ ॥**

धाय्यादयः शब्दाः संज्ञायां निपात्यन्ते। धाय्या सामिधेनी। ततोऽन्यत्रापि रूढ्या वर्तते। धाय्याः शंसति‡। धेयमन्यत्। पाय्यं

---

* This is evidently the latter part of a rule from the Vedic section. The full rule was probably यतो ह्रचोऽनौयसः Liebich has अनौ वसः which does not appear to be correct.

† One MS. has प्रणाय्यायान्तेवासिने चेति. The commentator has evidently taken this from the Kās'ikā where we find: यद्येवं कथम् एतज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेवासिने नान्यस्मै कस्मैचनेति। सम्मतिरभिलाषोऽप्युच्यते, तदभावेन निष्कामतयाऽसम्मतिरन्तेवासी भवति। तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते। The quotation is found in the same form in the S'abdakaustubha. Durga has ज्यष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिने (Kātantra, Kṛdvṛtti 123)

‡ शंसन्ति MSS., but Kās'ika, Hṛdayahāriṇi and S'abdakaustubha have शंसति which is found in Aitareya Brāhmaṇa xiii. 7.

मानम्। पेयमन्यत्। आनाय्यो दक्षिणाग्निः। यो हि गार्हपत्यादानीय प्रणीयते। आनेयोऽन्यः। सान्नाय्यम् हविर्विशिष्टमेव। सन्नेयमन्यत्। निकाय्यो निवासः। निचेयोऽन्यः।

[ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु। पा० ३।१।१२९, पाय्यधाय्ये मानसामिधेन्योः। याज्या दानर्चि। सान्नाय्यनिकाय्यौ हविर्निवासयोः। अनायानाय्यपरिचाय्योपचाय्यसमूह्याः। स० क० १।३।१७७-१७९, १८१ ]

क्रतौ कुण्डपाय्यसञ्चाय्यौ ॥ १३७ ॥ [पा० ३।१।१३०, स० क० १।३।१८०]

क्रतावभिधेय एतौ शब्दौ निपात्येते। कुण्डैः पीयते सोमोऽस्मिन् कुण्डपाय्यः क्रतुः। निपातनादाद्युदात्तत्वम्। सञ्चीयते सोमोऽस्मिन्निति सञ्चाय्यः क्रतुः।

अग्नौ चित्योपचाय्यपरिचाय्याः ॥ १३८ ॥

चित्यादयोऽग्निविषये निपात्यन्ते। चित्योऽग्निः। चयनं चित्या। चिनोतेः क्यप्, अन्तोदात्तत्वं च। अग्नेश्चित्या, अग्निचित्या। उपचीयते, उपचाय्योऽग्निः। परिचीयते, परिचाय्यः। समूह्य इत्यूहिना सिद्धम्, तस्यापि वह्यर्थे क्वचित् प्रयोगात् [पा० ३।१।१३१।१-३]। संवाह्य इति चाग्नौ भवत्येव।

[ अग्नौ परिचाय्योपचाय्यसमूह्याः। चित्याग्निचित्ये च। पा० ३।१।१३१-१३२, अनायानाय्यपरिचाय्योपचाय्यसमूह्याः। चित्याग्निचित्ये च। स० क० ३।१।१८१-१८२ ]।

कर्तरि ण्वुल्तृजचः ॥ १३९ ॥ [स० क० ३।१।१८६]

कर्तरि कारके क्रियार्थान् परे ण्वुल्तृजचो भवन्ति। पाचकः, पक्ता, पचः। बहुलमित्येव। पादाभ्यां ह्रियते, पादहारकः। गले चुप्यते,*

* चुप् is read in the Paniniya Dhātupāṭha as चुप् मन्दायां गतौ and is evidently intransitive. This is why Patañjali and

गलेचोपकः। श्वपचो जारभर इत्यण्विपयेऽप्यज् भवति बहुलाधिकारात्। कथं नदी चरी भषी प्लवी चोरी गाही सूदी देवीति ? गौरादिषु पठितव्याः। कर्तरीत्यधिकारः प्राक् मुव्विधेः [२।१।१]।

[कर्तरि कृत्। पा० ३।४।६७, ण्वल्तृचौ। ३।१।१३३, कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम्। पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गलेचोपकः। ३।३।११३ भाष्यम्।' गलेचोपकपादहारकादयः कर्मणि। अर्हतो तृच्। पचपतवदवशवणरणक्षमभूवृञ्गुपिसृपिनृतिदृशिभिषिसिधिमिहिदिहिरुहिवहादिभ्योऽच्। नदभषप्लुगृतृदृसूदिदिविसिविचरिचोरिचिलिगाहिभ्यष्टित्। ध्रुवः शित्। स० क० १।३।१८७-१९१]

## नन्दिग्रहादिभ्यो ल्युणिनी ॥ १४० ॥

नन्द्यादिभ्यो ग्रहादिभ्यश्च कर्तरि ल्युणिनी परौ भवतः। नन्दिवासिमदिदूषिसाधिशोभिवर्धिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्। नन्दयतीति नन्दनः। एवं वासनः। मदनः। दूषणः। साधनः। शोभनः। वर्धनः। रोचनः। सहितपिदमः संज्ञायामण्यन्तात्। सहनः। तपनः। दमनः। दुर्धर्पणः (?)*। जल्पनः। दर्पणः। रमणः। संक्रन्दनः। संहर्पणः। संकर्पणः। जनार्दनः। मधुसूदनः। पवनः। लवणः। निपातनाण् णत्वम्। विभीपणः। चित्तविनाशनः। कुलदमनः। व्याप्यपूर्वाणामण्विपयेऽपि

---

others use the causal form चोप्यते. It is usual, however, for Bengali commentators to use the non-causal form चुप्यते. Thus Durga says in his Vṛtti : कथं गले चुप्यते इति गलेचोपक इति ? कृद्वृत्तिः १३।

* दुर्धर्पणः is not found in the Gaṇapātha of any well-known grammar in this connexion for the simple reason that there is a separate rule prescribing युच् for the root धृष्. I am inclined to think the word is दुश्च्यवन which though not found in the nandyādi-gaṇa in other systems of grammar might have been suggested by the word संक्रन्दनः. Cf. संक्रन्दनो दुश्चवनः Amara.

भवति। गृह्णातीति ग्राही। स्थायी। निरक्षी। निश्रावी। याचिव्रजवद-वसां नञ्पूर्वाणाम्। अयाची। अव्राजी। अवादी। अवासी। अचाम-चित्तकर्तृकाणाम्। अकारी घर्मस्य बालातपः। विपायी*, विपयीति देशे। अभिभवी, अभिभावीति भूते। परिभवी, परिभावीति पक्षे ह्रस्वत्वं निपातनात्। कथम् उत्साही, उद्भासी, उद्भासी, संमर्दी निवेशीति? ०अत इनिना [४।२।११९] सिद्धम्। एवमव्याहारी, अपराधी, उपरोधी।

[नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः। पा० ३।१।१३४, नन्दिवाशिमदिनर्दि-साधिशोभिवर्धिभीषिभूषिदूषिसहिदृपिजल्पिभ्यो ल्युः। रमिरचिकृतितपितृविदहि-पुपृभ्यः संज्ञायाम्। लुवो नो णश्च। समि कन्दिक्रुषिहृषिभ्यः। कर्मणि दम्यर्दि-नाशिसूदिभ्यः। ग्रहिस्थापराधिमन्थिसम्मर्दिभ्यो णिनिः। उपावयो रुधः। उदि भासिदसिसहिभ्यः। श्रुशाविशियसिधपिरक्षिभ्यो नौ। याचिव्रजिवदिवसिव्याहृ-संव्यवहृभ्यो नञि। अचोऽचित्तवत्कर्तृकात्। अभौ भुवो भूते। परिभ्वोर्गुणश्च वा। विशयी विषयी च देशे। स० क० १।३।१९२-२०५]।

ज्ञाकृप्रीगुपान्तात् कः॥ १४१॥

जानातेः किरतेः प्रीणातेरिगुपान्ताच्च कर्तरि कः परो भवति। जानातीति ज्ञः। उत्किरः। प्रियः। विक्षिपः। बहुलमित्येव। विक्षेप्ता, विक्षेपकः। देवः। प्रसेवः। मेषः।

[इगुपधज्ञाप्रीकिरः कः। पा० ३।१।१३५, इगुपधज्ञाप्रीकृभ्यः कः। स० क० १।३।२०६]

आतः प्रादिभ्यः॥ १४२॥

आकारान्तात् क्रियार्थात् प्रादिभ्यः परात् को भवति। प्रस्थः। ग्लै॒ पालने [धातुपा० १।८८४] इत्यस्य सुग्लः। सुग्लः।

[आतश्चोपसर्गे। पा० ३।१।१३६, स० क० १।३।२०८]

पाघ्राध्माधेट्दृशः शः॥ १४३॥ [पा० ३।१।१३७]

* S. K. reads विशयी.

पादिभ्यः परः शो भवति। उत्पिबः। घ्रादिसाहचर्यात् पिबतेर्ग्रहणम्। उज्जिघ्रः। बहुलाधिकाराद् व्याघ्र इति को भवति*। विधमः। उद्धयः। पश्यः, विपश्यः, उत्पश्यः।

[ पाघ्राध्माधेट्दृशिभ्यः शः। स० क० १।३।२११ ]

**धारिपारिवेद्युदेजिचेतिसातिसाहिविन्दोऽप्रादेः॥ १४४॥**

धार्यादिभ्यो विन्दतेश्च प्रादिरहितेभ्यः शो भवति। धारयः, पारयः, वेदयः, उदेजयः, चेतयः, सातयः, साहयः, विन्दः, गोविन्दः, अरविन्दः। अप्रादेरिति किम्? प्रवदकः।

[ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च। पा० ३।१।१३८, गवि च विन्देः संज्ञायाम्। ३।१।१४०।२, गवादिष्विति वक्तव्यम्। भाष्यम्। धारिपारिवेद्युदेजिचेतिसातिसाहिविन्दिभ्योऽनुपसर्गेभ्यः। गवादिषु विन्देः। स० १।३।२१२, २१५ ]

**लिपो नेश्च॥ १४५॥**

लिम्पतेः प्रादिरहितान् नेश्च परात् शो भवति। लिम्पः। निलिम्पा नाम देवाः। कथं ददो दध इति? ददधोरचा सिद्धम्†। स्वरविशेषमष्टमे वक्ष्यामः।

[ अनुपसर्गान्नौ लिम्पेः। ३।१।१३८।१, लिपश्च। नौ संज्ञायाम्। स० क० १।३।२१३-२१४ ]

**ज्वलादिभ्यो णो वा॥ १४६॥**

ज्वल दीप्तौ [ धातुपा० १।५६१ ] इत्येवमादिभ्यो णः परो वा भवति। ज्वालः, ज्वलः। चालः चलः। [ धातुपा० १।५८७ ] कसपर्यन्ता ज्वलादयो वृत्करणात्।

[ ज्वलितिकसन्तेभ्यो णः। पा० ३।१।१४०, ज्वलादिदुनीभूभ्यो णः। स० क० १।३।२१७ ]

---

* को भवति appears to be a later addition.

† This looks like a line of verse.

**श्यादिण व्यधश्वसतनः ॥ १४७ ॥**

श्यायतेराकारान्तेभ्य इणादिभ्यश्च णो भवति। अवश्यायः। कवाधनार्थं श्याग्रहणम्। दायः, धायः। प्रत्यायः, व्याधः, श्वासः; अवतानः। लेहः, श्लेष इत्यचा सिद्धम्।

[ श्याद्व्यधास्रुसंस्त्रतीणवसावहृलिहश्लिषश्वसश्च। पा० ३।१।१४१, लिहिश्लिष्याद्व्यधिश्वसितनीणुभ्यः। स० क० १।३।२१८ ]

**आसमः स्रोः ॥ १४८ ॥**

आङः समश्च परात् स्रवतेर्णो भवति। आस्रावः, संस्रावः। कथमास्रवः? बहुलाधिकारात्। आसम इति किम्? परिस्रवः।

[ पा० ३।१।१४१, समाङोः स्रुवो वा। स० क० १।३।२२२. Goyīcandra says under Sam, iii. 295 : आस्रव इत्यपि भवतीति चन्द्रमतम्, नान्यस्य।]

**हस्रोऽवात् ॥ १४९ ॥**

हृ स्रा इत्येताभ्यामवात् पराभ्यां णो भवति। अवहारः, अवस्रायः। अवादिति किम्? हरः।

[ पा० ३।१।१४१, अवे हृस्राभ्याम्। स० क० १।३।२२१ ]

**दुन्योऽप्रादेः ॥ १५० ॥**

दुनोतेर्नयतेश्च प्रादिरहिताण् णो भवति। दावः, नायः। अप्रादेरिति किम्? प्रदवः, प्रणयः। बहुलाधिकारात् वनदवः।

[दुन्योरनुपसर्गे। पा० ३।१।१४२, ज्वलादिदुनीभूभ्यो णः। स० १।३।२१७]

**भुवो वा ॥ १५१ ॥**

भवतेर्णो वा भवति। भावः, भवः।

[ भवतेश्चेति वक्तव्यम्। काशिका ३।१।१४३, ज्वलादिदुनीभूभ्यो णः। स० क० १।३।२१७ ]

**ग्रहः ॥ १५२ ॥** [ स० क० १।३।२२३ ]

अस्माण्णो वा भवति। ग्राहो जलचरः। ग्रहः सूर्यादिः।

[ विभाषा ग्रहः । पा० ३।१।१४३ ]

**गेहे कः ॥ १५३ ॥** [पा० ३।१।१४४, स० क० १।३।२२४]

गेहेऽभिधेये ग्रहः को भवति । गृहम्, गृहाः ।

**गस्थकन् ॥ १५४ ॥** [ पा० ३।१।१४६, स० क० १।३।२२५ ]

गायतेस्थकन् भवति । गाथकः ।

**ण्युट् ॥ १५५ ॥**

गायतेः परो ण्युड् भवति । गायनः, गायनी ।

[ ण्युट् च । पा० ३।१।१४७, स० क० १।३।२२६ ]

**हो व्रीहिकालयोः ॥ १५६ ॥**

जहातेर्व्रीहौ काले च ण्युड् भवति । हायना नाम व्रीहयः । हायनः संवत्सरः । व्रीहिकालयोरिति किम् ? हाता ।

[ हश्च व्रीहिकालयोः । पा० ३।१।१४८, हाक्हाङ्भ्यां व्रीहिकालयोः । स० क० १।३।२२७ ]

**नृतिखनिरजः शिल्पिनि ष्वुन् ॥ १५७ ॥**

नृत्यादिभ्यः शिल्पिनि कर्तरि ष्वुन् भवति । नर्तकः, खनकः, रजकः । उच्चारणादनुनासिकलोपः । षकारो ङीषर्थः । नर्तकी, खनकी, रजकी ।

[ शिल्पिनि ष्वुन् । पा० ३।१।१४५, नृतिखनिरञ्जिभ्य इति वक्तव्यम् । भाष्यम् । रञ्जिनृतिखनिभ्यः शिल्पिनि ष्वुन् । स० क० १।३।२२८]

**प्रुसृल्वो वुन् ॥ १५८ ॥**

प्रु सृ लू इत्येतेभ्यः शिल्पिनि वुन् भवति । प्रवकः, सरकः, लवकः । यस्य तु न *तच्छिल्पम्, प्रोता स भवति ।

[ प्रुसृल्वः समभिहारे वुन् । पा० ३।१।१४९, प्रुलूञ्सृभ्यः साधुकारिणि वुन् । स० क० १।३।२२९ ]

---

* Either drop तत् or say : अत्र तच्छब्देन बुद्धिस्थं प्रवणं परामृश्यते, सर्वनाम्नामुत्सर्गतो बोद्धपरामर्शकत्वात् ।

आशिषि ॥ १५९ ॥

आशंसायां गम्यमानायां क्रियार्थाद् वुन् भवति। जीवतात्, जीवकः। नन्दतात्, नन्दकः।

[आशिषि च। पा० ३।१।१५०, स० क० १।३।२३०]

इति चान्द्रे व्याकरणे प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः।

---

व्याप्यादण् ॥ १ ॥

क्रियाया यद् व्याप्यं ततः परात् क्रियार्थादण् भवति। कुम्भं करोति, कुम्भकारः। काण्डलावः। वेदाध्यायः। बहुलाधिकारादिह न भवति। आदित्यं पश्यति। हिमवन्तं शृणोति। ग्रामं गच्छति। कथं मांसशीला, मांसकामा, मांसभक्षा, कल्याणाचारा, कल्याणप्रतीक्षा, दुःखक्षमेति? मासे शीलमस्याः, मांसशीला। एवं सर्वत्र योज्यम्। यद्येवमम्भोऽभिगमोऽस्या अम्भोऽभिगमेति प्राप्नोति, अम्भोऽभिगामीति चेष्यते। न भविष्यति, समासप्रकरणेऽपि बहुलाधिकारात्।

कर्मण्यण् पा० ३।२।१, स० क० १।४।१, शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च, ईक्षिक्षमिभ्यां च। ३।२।१।७-८। शीलिकामिभक्ष्याचरीक्षिक्षमिभ्यो णः। स० क० १।४।३. Candra shows good sense in not recognising the suffix ण in the case of मांसशील etc. The fact that the first member retains its independent accent and that the feminine is formed with आ and not ई is enough to show that these are Bahuvrīhi compounds. Kram. makes शीलिकामिभक्ष्यर्हिभ्यो या (Kṛd, 89) optional. Jinendrabuddhi says: ननु च शील्यादिभ्यः कर्मणि घञं कृत्वा सदन्तेन बहुव्रीहौ कृते सिध्यत्येव मांसशीलादि।

तत् किं ण-विधानेन ? नैतदस्ति । बहुव्रीहौ बहुभक्षा इत्यत्र बहोर्नञ्वदुत्तरपदभूम्नि [६।२।१७५] इत्युत्तरपदान्तोदात्तत्वं स्यात् । अवश्यञ्चाण्बाधनार्थो णो वक्तव्यः* । अन्यथा हि यदा मांसं कामयते इतीदं वाक्यं भवति, तदाणपि स्यात् । Haradatta says : इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति, तत्र भक्षयतेः कर्मण्येरजन्तस्य बहुव्रीहिणा सिद्धम् । एवमन्यत्रापि । यः पुनरण्यन्तस्तस्य घञन्तस्य बहुव्रीहिः । नार्थ एतेन । ननु बहुभक्ष इत्यत्र बहोर्नञ्वदित्युत्तरपदान्तोदात्तत्वं प्राप्नोति । एवं तर्हि भावेऽजन्तेन व्यधिकरणपदो बहुव्रीहिर्भविष्यति—बहुषु भक्षोऽस्य बहुभक्ष इति, तत्रोत्तरपदार्थस्य बहुत्वाभावाद् बहुस्वरो न भविष्यति । सत्यम् । अण्बाधनार्थं तु वचनम्* । Hemacandra says in his Bṛhadvṛtti under शीलिकामिभक्ष्याचरीक्षिक्षमो णः v.1.73 : अल्घञन्तैः शीलादिभिर्बहुव्रीहौ सति धर्मशीलादयः सिध्यन्ति । अण्बाधनार्थं तु वचनम् । अणि हि स्त्रियां ङी स्यात्, तथाच धर्मशीलीत्याद्यनिष्टं रूपं स्यात् । एवंप्रायेषु च बहुव्रीह्याश्रयणे अम्भोऽतिगमेति स्यात्, अम्भोऽतिगामी चेष्यते । कामीति ण्यन्तस्योपादानादण्यन्तादणेव पयस्कामीति । ण्यन्तस्य तु णे सति पयःकामेति भवति । अत एव च ण्यन्तनिर्देशादण्यन्तनिर्देशे कृत्कर्मिकंसेत्यादौ केवलस्यैव कमेर्ग्रहणम्, तेन णे सति सकारादेशो न भवति । The Laghunyāsa explains : अल्घञन्तैरिति । ण्यन्तेभ्योऽलि, अण्यन्तेभ्यस्तु घञि । अम्भोऽतिगमेति स्यादिति । अतिगम्यते सुवर्णेत्यलि बहुव्रीहौ न चैतदिष्यते । स्थिते तु अम्भः धनं अतिगच्छति । कर्मण्यण् [५।१।७२] ।

आतोऽप्रादेः कः ॥ २ ॥

आकारान्तात् प्रादिरहितात् को भवति । गोदः, कम्बलदः । अप्रादेरिति किम् ? वडवासन्दायः । बहुलमित्येव । स्वर्गह्वायः, तन्त्रवायः, धान्यमायः, गोदायो व्रजतीति । सप्रादेरपि क्वचिद् भवति । प्रपाप्रदः, पथिप्रज्ञः, गोसंस्थः । पूर्वक एवायं कः । अण् तु न सर्वत्रेत्युक्तम् ।

[आतोऽनुपसर्गे कः । प्रे दाज्ञः । समि ख्यः । पा० ३।२।३,६,७ । आतोऽनुपसर्गात् कः । समः ख्यः । आङो दश्च । प्रात् ज्ञश्च । स०क० १।४।४-७]

---

* Candra would say : अणुनिवृत्तिस्तु बहुलाधिकारात् ·

**सुपः ॥ ३ ॥**

सुबन्तात् परादाकारान्तात् क्रियार्थात् को भवति। कच्छेन पिबति, कच्छपः। द्वाभ्यां पिबति, द्विपः। पादपः। समे तिष्ठति, समस्थः। विषमस्थः। तुन्दं परिमार्ष्टि, तुन्दपरिमृजः। पूर्वक एव चायं कः। अलस एवोच्यते। एवं शोकमपनुदतीति शोकापनुदः पुत्रो जातः, आनन्दकर एवोच्यते। अन्यत्र तुन्दपरिमार्जः, शोकापनोदः। एवं मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंषि। काकगुहास्तिलाः। अंशं हरतीति श्वपचादिवदच्। अंशहरः। पूर्ववदणभावः। उद्यमने तु दृश्यते भारहारः। एवं कवचहरः क्षत्रियकुमारः। एवं ताच्छील्ये पुष्पाहर इति। तथा पूजार्हा ब्राह्मणी। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः। सप्तम्या बहुलम् [५।२।११] इत्यलुक्। शक्तिग्रहः, लाङ्गलग्रहः, अङ्कुशग्रहः, यष्टिग्रहः, तोमरग्रहः, घटग्रहः, घटीग्रहः, धनुर्ग्रह इति सर्वमचा सिद्धम्। एवं सूत्रग्रह इति धारणे, अन्यत्र सूत्रग्राहः। संज्ञायामपि। शं करोति, शङ्करा। खे शेते, खशयः। पार्श्वेन शेते, पार्श्वशयः। उत्तानः शेते, उत्तानशयः। दिग्धसहशय इति समासद्वयम्। किङ्करा, यत्करा, तत्करा, बहुकरेति पूर्ववदेवाच्।

[सुपि स्थः। पा० ३।२।४, योगविभागात् सिद्धम्। ३।२।४।२ तुन्दशोकयोः परिमृजापनुदोः। ३।२।५, तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः। कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्। ३।२।५।१-२, हरतेरनुद्यमनेऽच्। वयसि च। आङि ताच्छील्ये। अर्हः। स्तम्बकर्णयो रमिजपोः। शमि धातोः संज्ञायाम्। अधिकरणे शेतेः। पा० ३।२।९-१५, स्तम्बकर्णयोर्हस्तिसूचकयोः। ३।२।१३।१, अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम्। दिग्धसहपूर्वाच्च। उत्तानादिषु कर्तृषु।३।२।१५।१-३, अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्। सूत्रे च धार्यर्थे। ३।२।९।१-२, किंयत्तद्बहुषु कृञोऽज्विधानम्। ३।२।२१।१, सुपि स्थापास्नात्राभ्यः। मूलविभुजोर्वीरुहकुमुदमहीध्रोपर्युधादयः। नखमुचकाकगुहौ हेतुकर्मणोः। शोकापनुदतुन्दपरिमृजावानन्दकरालसयोः। हृञोऽज् वयोऽनुद्यमनयोः। आङस्ताच्छील्ये। अर्हः।

स्तम्बकर्णयो रमिजपिभ्यां हस्तिसूचकयोः। घटघटीधनुर्दण्डर्षित्सरलाङ्गलाङ्कुशशक्तितोमरेषु ग्रहः। सूत्रे च धार्यर्थे। प्रहरणादिष्वदण्डादिषु धृञः। शमि धातोः संज्ञायाम्। किंयत्तद्बहुषु कृञः। शीङः पार्श्वादौ करणे। उत्तानादौ कर्तरि। दिग्धसहे च। अधिकरणे। गिरौ डित्। स० १।४।८-२५]

**चरेष्टः** ॥ ४ ॥ [ पा० ३।२।१६, स० क० १।४।२६ ]

सुपः पराच्चरतेष्टो भवति। कुरुषु चरति, कुरुचरः। कुरुचरी। भिक्षां चरति, भिक्षाचरः। सेनाया चरति, सेनाचरः। आदायचरः। बहुलाधिकारादिह न भवति—कुरूंश्चरतीति।

**पुरोऽग्रतोऽग्रेभ्यः सर्तेः** ॥ ५ ॥

पुरस् अग्रतस् अग्र इत्येतेभ्यः परात् सर्तेष्टो भवति। पुरःसरः, पुरःसरी। अग्रतःसरः, अग्रतःसरी। अग्रेसरः, अग्रसरी। निपातनादलुक्, असंख्यमेकारान्तं वा।

[ पुरोऽग्रतोऽग्रेषु सर्तेः। पा० ३।२।१८, स० क० १।४।२८ ]

**पूर्वात् कर्तुः** ॥६॥

पूर्वशब्दात् कर्तृवाचिनः परात् सर्तेष्टो भवति। पूर्वः सर्ता, पूर्वसरः। पूर्वसरी। कर्तुरिति किम्? पूर्वं सरति, पूर्वसारः।

[ पूर्वे कर्तरि। पा० ३।२।१९, स० क० १।४।२९ ]

**कृञो हेतुशीलानुलोमेषु** ॥७॥

सुपः परात् करोतेर्हेतौ कर्तरि शीले वा गम्यमानेऽनुलोमे वा कर्तरि टो भवति। प्रतीतशक्तिकं कारणं हेतुः। विद्या यशस्करी। कन्या शोककरी। धनं कुलकरम्। शीलं प्रकृतिः। श्राद्धकरः। अनुलोमोऽनुकूलः। वचनकरः। एवम्, दिवाकरः, दिवसकरः, दिनकरः, निशाकरः, रजनीकरः, क्षपाकरः, विभाकरः, प्रभाकरः; भास्करः कस्कादित्वात् सकारः; कारकरः, अन्तकरः, अनन्तकरः, आदिकरः, बहुकरः, नान्दीकरः, किङ्करः, लिपिकरः, लिबिकरः, बलिकरः, भक्तिकरः,

कर्तृकरः, चित्रकरः, क्षेत्रकरः, एककरः, जङ्घाकरः, बाहुकरः, अहस्करः, यत्करः, तत्करः, धनुष्करः, अरुष्करः, कर्मकरः, घटीकर इत्यादि। हेत्वादिष्विति किम् ? कुम्भकारः, कर्मकारः, शब्दकारः, श्लोककारः, कलहकारः, गाथाकारः, वैरकारः, चाटुकारः, सूत्रकारः, मन्त्रकारः, पदकारः, क्रमकारः । कुम्भादिकरणशीलेषु तु बहुलाधिकारान् न भविष्यति ।

[कृञो हेतुताच्छील्यानुलोम्येषु । दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । कर्मणि भृतौ । न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । पा० ३।२।२०-२३, कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । आद्यन्तानन्तकारबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुस्सङ्ख्यादिवसदिनरजनिदोषाक्षपाक्षणदासु च । भृतौ कर्मशब्दे । स० क० १।४।३०-३१ । शब्दादिगणे कुम्भकर्मपदक्रमाणां पाठश्चन्द्राविमतमाश्रित्य कृतः । गोयीचन्द्रः । ३।११६] ।

स्तम्बशकृद्भ्यां व्रीहिवत्सयोरिन् ॥८॥

स्तम्बशकृद्भ्यां परात् करोतेर्व्रीहिवत्सयोरर्थयोरिन् भवति । नकार आद्युदात्तार्थः । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोरिति किम् ? स्तम्बकारः, शकृत्कारः ।

[स्तम्बशकृतोरिन् । पा० ३।२।२४, स्तम्बशकृतोर्व्रीहिवत्सयोः । ३।२।२४।१, व्रीहिवत्सयोरिति वक्तव्यम् । भाष्यम् । स्तम्बशकृतोरिन् व्रीहिवत्सयोः । स० क० १।४।३३] ।

हृञो दृतिनाथात् पशौ ॥९।

हरतेर्दृतिनाथाभ्यां परात् पशौ कर्तरि इन् भवति । दृतिहरिः पशुः । नाथहरिः । पशाविति किम् ? दृतिहारः, नाथहारः ।

[हरतेर्दृतिनाथयोः पशौ । पा० ३।२।२५, स० क० १।४।३४]

फलेग्रहिरात्मम्भरिः कुक्षिम्भरिः ॥१०॥

एते शब्दा निपात्यन्ते। फलानि गृह्णाति, फलेग्रहिः। आत्मानमेव बिभर्ति, आत्मम्भरिः। कुक्षिमेव बिभर्ति, कुक्षिम्भरिः।

[ फलेग्रहिरात्मम्भरिश्च। पा० ३।२।२६, अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः। काशिका। फलेमलरजःसु ग्रहेः। देवयातयोरापेः। आत्मोदरकुक्षिषु भृञः खिन्। स० क० १।४।३५-३७ ]

**एजेः खश् ॥११॥** [ पा० ३।२।२८, स० क० १।४।३८ ]

एजयतेः सुपः परात् खश् भवति। खकारः खिति ससंख्यस्य [ ५।२।७५ ] इति विशेषणार्थः। अङ्गमेजयः, जनमेजयः।

**शुनीस्तनाद्ध धेटः ॥१२॥**

शुनीस्तनाभ्यां पराद् धेटः खश् भवति। शुनिन्धयः, शुनिन्धयी। स्तनन्धयः, स्तनन्धयी। प्रकृतावानर्थक्याद् टकारो ङीवर्थो विज्ञायते।

**नासिकानाडीमुष्टिघटीखरीभ्यः ॥१३॥**

एतेभ्यः पराद् धेटः खश् भवति। नासिकन्धयः, नाड़िन्धयः, मुष्टिन्धयः, घटिन्धयः, खरिन्धयः।

[ शुनीस्तनमुञ्जकुलास्यपुष्पेषु धेटः। नासिकानाडीघटीखरीमुष्टिषु च। स० क० १।४।३९-४० ; नासिकास्तनयोर्ध्माधेटोः। पा० ३।२।२९, स्तने धेटः। मुष्टौ ध्मश्च। ३।२।२९।१-२ अत्यल्पमिदमुच्यते। नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्। भाष्यम्। ]

**ध्मः पाण्यादिभ्यश्च ॥१४॥**

धमतेर्नासिकादिभ्यः पाण्यादिभ्यश्च परात् खश् भवति। नासिकन्धमः, नाड़िन्धमः, मुष्टिन्धमः, घटिन्धमः, खरिन्धमः। पाणिन्धमः, करन्धमः, वातन्धम इत्यादि।

[ See under the previous rule. ध्मः पाणिकरवातेषु च। स० क० १।४।४१ ]

**कूलादुदो रुजिवहः ॥१५॥**

कूलपूर्वाद् उदः पराभ्यां रुजिवहिभ्यां खश् भवति। कूलमुद्रुजः, कूलमुद्वहः।

[ उदि कूले रुजिवहोः। पा० ३।२।३१, उदि रुजिवहिभ्यां कूले। स० क० १।४।४२ ]

**वहाभ्राल्लिहः ॥१६॥**

वहाभ्राभ्यां परात्लिहः खश् भवति। वहंलिहो गौः। अभ्रंलिहो वायुः।

[ वहाभ्रे लिहः। पा० ३।२।३२, वहाभ्रयोर्लिहः। स० क० १।४।४३ ]

**परिमाणात् पचः ॥१७॥**

परिमाणार्थात् परात् पचतेः खश् भवति। द्रोणम्पचा स्थाली। खारिम्पचः कटाहः।

[ परिमाणे पचः। पा० ३।२।३३]

**मितनखात् ॥१८॥**

मितनखाभ्या परात् पचते- खश् भवति। मितम्पचा ब्राह्मणी। नखम्पचा यवागूः।

[ मितनखे च। पा० ३।२।३४, परिमाणार्थमितनखेषु पचः। स० क० १।४।४४ ]

**विध्वरुस्तिलात्तुदः ॥१९॥**

विध्वादिपूर्वात् तुदतेः खश् भवति। विधुन्तुदः, अरुन्तुदः, तिलन्तुदः।

[ विध्वरुषोस्तुदः। पा० ३।२।३५, खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्-तुदजहातिभ्यः। ३।२।२८।१, बहुविध्वरुस्तिलेषु तुदः। स० क० १।४।४५ ]

**वातमजशर्धंजहेरम्मदपरन्तपद्विपन्तपभगन्दरपुरन्दराः ॥२०॥**

एते शब्दा निपात्यन्ते। वातमजन्तीति वातमजा मृगाः। शर्धं जहति, शर्धंजहा माषाः। इरया माद्यति, इरम्मदः। परं तापयति, परन्तपः। द्विपन्तं तापयति, द्विपन्तपः। भगं दारयति, भगन्दरः। पुरं दारयति, पुरन्दरः।

[खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः ।३।२।२८।१, उग्रम्पश्ये-रम्मदपाणिन्धमाश्च । द्विषत्परयोस्तापेः । पूःसर्वयोर्दारिसहोः ।३।२।३७,३९,४१ वातशर्धयोरजिजहातिभ्याम् । तापेर्द्विषत्परयोर्णिलुक् च । पुरन्दरभगन्दरौ संज्ञायाम् । इरम्मदश्च । स० क० १।४।४६, ५०-५२]

**उग्रासूर्याद् दृशः ॥२१॥**

उग्रासूर्याभ्यां परात् दृशः खश् भवति । उग्रं पश्यति, उग्रम्पश्यः । सूर्यं न पश्यन्ति, असूर्यम्पश्यानि मुखानि । दृशिना सम्बद्धस्य नञः सूर्येण सहैकार्थ्यं गमकत्वात् ।

[असूर्यललाटयोर्दृशितपोः, उग्रम्पश्येरम्मदपाणिन्धमाश्च । पा० ३।२।३६-३७, असूर्योग्रयोर्दृशः । स० क० १।४।४७]

**ललाटात् तपः ॥२२॥**

ललाटात् परात् तपतः खश् भवति । ललाटन्तपः । सूर्यादिः ।

[असूर्यललाटयोर्दृशितपोः । पा० ३।२।३६, ललाटे तपः । स० १।४।४९]

**प्रियवशाद्वदः ॥२३॥**

प्रियवशाभ्यां परात् वदः खश् भवति । प्रियंवदः, वशंवदः ।

[प्रियवशे वदः खश् । पा० ३।२।३८, प्रियवशयोर्वदः । स० १।४।४८]

**वाचंयमो व्रते ॥२४॥** [स० क० १।४।५३]

वाचंयम इति निपात्यते व्रते गम्यमाने । वाग्यामोऽन्यत्र ।

[वाचि यमो व्रते । पा० ३।२।४०]

**सर्वात् सहः ॥२५॥**

सर्वशब्दात् परात् सहतेः खश् भवति । सर्वंसहः ।

[पूःसर्वयोर्दारिसहोः । पा० ३।२।४१, सर्वे सहः । स० क० १।४।५४]

**कूलाभ्रकरीषाच्च कषः ॥२६॥**

कूलादिभ्यः सर्वाच्च परात् कषतेः खश् भवति । कूलङ्कषा नदी । अभ्रङ्कषो गिरिः । करीषङ्कषा वात्या । सर्वङ्कषः खलः ।

[सर्वकूलाभ्रकरीषेषु कषः। पा० ३।२।४२, सर्वकूलाभ्रकरीषेषु च कषः। स० क० १।४।५५]

**मेघर्तिभयात् कृञः खः ॥२७॥**

मेघादिभ्यः परात् करोतेः खो भवति। मेघङ्करः, ऋतिङ्करः, भयङ्करः। कथमभयङ्करः? भयेन सुबन्तस्य तदन्तविधिः।

[मेघर्तिभयेषु कृञः। पा० ३।२।४३, उपपदविधौ भयाढ्यादिग्रहणम्। पा० १।१।७२।९, मेघर्तिभयेषु कृञः खः। स० क० १।४।५६]

**क्षेमप्रियमद्रादण् च ॥२८॥**

क्षेमादिभ्यः परात् करोतेः खो भवति, अण् च। क्षेमङ्करः, क्षेमकारः। प्रियङ्करः, प्रियकारः। मद्रङ्करः, मद्रकारः। अण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्।

[क्षेमप्रियमद्रेऽण् च। पा० ३।२।४४, क्षेमप्रियभद्रमद्रेष्वण् च। स० क० १।४।५७]

**आशिताद्भुवो भावकरणयोः ॥२९॥**

आशितशब्दात् पराद्भवतेर्भावे करणे च खो भवति। दुःखमाशितम्भवम्। अलमाशितम्भव ओदनः।

[आशिते भुवः करणभावयोः। पा० ३।२।४५, आशिते भुवो भावकरणयोः। स० क० १।४।५८]

**भृवृतृजिसहितपिदमो नाम्नि ॥३०॥**

एभ्यः संज्ञायां खो भवति। विश्वम्भरा वसुधा। पतिंवरा कन्या। रथन्तरं साम। शत्रुञ्जयः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः।

[संज्ञायां भृतॄवृजिधारिसहितपिदमः। पा० ३।२।४६, भृवृजितॄतपिदमिसहिभ्यः संज्ञायाम्। स० क० १।४।५९]

**धारेर्धर् च ॥३१॥** [स० क० १।४।६०]

धारयतेः सुपः परात् खो भवति, धरादेशश्च। वसुन्धरा।

गमः ॥३२॥

सुपः पराद् गमः खो भवति। सुतङ्गमः, भुजङ्गमः, मितङ्गमा हस्तिनी, पूर्वङ्गमाः पन्थानः, हृदयङ्गमा वाचः।

[गमश्च। पा० ३।२।४७, सुतमितजनपूर्वहृदयतुरभुजप्रवप्लवेषु गमः। स० क० १।४।६१]

**विहायसो विह च** ॥३३॥ [पा० ३।२।३८।२, स० १।४।६२]

विहायसः पराद् गमः खो भवति, विह इत्ययं चादेशः। विहङ्गमः।

खड् ॥३४॥

सुपः पराद् गमः खड् भवति। तुरङ्गः, भुजङ्गः, प्रवङ्गः, प्लवङ्गः। विहायसो विह चत्येव। विहङ्गः।

[खश्प्रकरणे गमेः सुप्युपसंख्यानम्। खच्च डिद्वा ३।२।३८।१,३। तुरादिषु खड् च। स० क० १।४।६३]

डः ॥३५॥

सुपः पराद् गमेर्डो भवति। भुजगः, तुरगः, प्रवगः, प्लवगः, पतगः, अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, अनन्तगः, सर्वत्रगः, पन्नगः, ग्रामगः, गुरुतल्पगः, सुगः, दुर्गः, निर्गो देशः। विहायसो विह चेत्येव। विहगः।

[अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। पा० ३।२।४८, डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम्। सुदुरोरधिकरणे। निसो देशे। ३।२।४८।१,३,४, डप्रकरणेऽन्येष्वपि दृश्यते। भाष्यम्। डश्च। सर्वसर्वत्रात्यन्तानन्तपुरःप्रतीपग्रामगुरुतल्पादिषु च। अग्रादिमध्यान्ताध्वदूरपारागारादिषु तदन्तेषु च। खगगोरगपतगपन्नगनगापगाशुगादयः संज्ञायाम्। स० क० १।४।६४-६७]

उरगः ॥३६॥

अयं शब्दो निपात्यते। उरसा गच्छति, उरगः।

[उरसो लोपश्च। पा० ३।२।४८।२, खगगोरगपतगपन्नगनगापगाशुगादयः संज्ञायाम्। स० क० १।४।६७]

हनः ॥३७॥

सुपः पराद्धन्तेर्डो भवति। क्लेशमपहन्तीति क्लेशापहः। तिमिं वध्यात्, तिमिहः। तमोऽपहः। दुःखापहः। पटहः। कथं दार्वाघाटः? घटतेर्भविष्यति। एवं चार्वाघाटः, वर्णसंघाटः। चर्वाहन्तीति चार्वाघातः। एवं वर्णसंघातः। दार्वाघातोऽपि तर्हि प्राप्नोति? असंज्ञायामिष्यत एव।

[आशिषि हनः। अपे (अपात्—स० क०) क्लेशतमसो डः। पा० ३।२।४९-५०, स० क० १।४।७०-७१, दारावाहनोऽणन्त्यस्य च टः संज्ञायाम्। चारौ वा। कर्मणि समि च। ३।२।४९।१-३, दर्पज्वरदोषदुःखादिषु च। दारावाडोऽणन्त्यस्य च टः संज्ञायाम्। चारौ वा। समश्च। स० क० १।४।७३—७५, Goyicandra says under क्लेशादेरपात् Sam. iii. 138 : क्लेशापहस्तमोऽपह इति सिद्धयर्थमेव पाणिनिसर्वकर्मादिसूत्रमस्ति। भयापहः दुष्खापह इति सिद्धिस्तु शिष्टप्रयोगदर्शनाद् वृत्तिकारेणाभ्युपगता। विषपाहो मन्त्रः, तिमिरापहमञ्जनम्, वातपित्तकफापहं ज्वरापहमौषधम् इत्यादि प्रमादजं वा शिष्टाभ्युपगतं चेति न निश्चिन्मः।]

शीर्षकुमाराण् णिनिः ॥३८॥

शीर्षकुमाराभ्यां पराद्धन्तेर्णिनिर्भवति। शीर्षघाती, कुमारघाती।

[कुमारशीर्षयोर्णिनिः। पा० ३।२।५१, स० क० १।४।७६]

टक् ॥३९॥

सुपः पराद्धन्तेर्बहुलं टग् भवति। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिलेखा। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली। श्लेष्मघ्नं त्रिकटुकम्। पित्तघ्नं घृतम्। वातघ्नं तैलम्। कृतघ्नः खलः। शत्रुघ्नः शूरः। गोघ्नोऽतिथिरिति बहुलाधिकारात् सम्प्रदानेऽपि।

[लक्षणे जायापत्योष्टक्। अमनुष्यकर्तृके च। पा० ३।२।५२-५३, दाशगोघ्नौ सम्प्रदाने। पा० ३।४।७३, टग् लक्षणे जायापत्योः। लक्षणवति च। अचितशति। वृत्रकृतशत्रुघ्नादिषु च। हस्तघ्नसुघ्नशतघ्नीसमघ्न्यादयः संज्ञायाम्। गोघ्नः सम्प्रदाने च। स० क० १।४।७७-८२। Cf. ब्रह्मादिभ्यः Hc. v. i.

85, गोवृह्मशत्रुकृताङ्घनघ्नः Kramadīśvara iii. 126 and हनचरगप्टक् Mugdhabodha 1011]

**शक्तौ हस्तिकपाटात्** ॥४०॥

शक्तौ गम्यमानायां हस्तिकपाटाभ्यां पराद्धन्तेष्टग् भवति। हस्तिघ्नः। कपाटघ्नः। शक्ताविति किम्? हस्तिघातः, कपाटघातः। हस्तिकपाटादिति किम्? चौरघातः।

[शक्तौ हस्तिकपाटयोः। पा० ३।२।५४, हस्तिबाहुकपाटेषु शक्तौ। स० १।४।८३]

**नगरादहस्तिनि*** ॥४१॥

नगरात् पराद्धन्तेरहस्तिनि कर्तरि टग् भवति। नगरघ्नोऽग्निः। अहस्तिनीति किम्? नगरघातो हस्ती।

[नगरे चाहस्तिनि। स० क० १।४।८४]

**पाणिघताडघौ शिल्पिनि** ॥४२॥ [पा० ३।२।५५, स० क० १।४।८५]

एतौ शब्दौ शिल्पिनि कर्तरि निपात्येते। पाणिभ्यां हन्ति पाणिं वा हन्ति, पाणिघः। ताडं हन्ति, ताडघः। शिल्पिनीति किम्? पाणिघातः, ताडघातः।

**राजघः** ॥४३॥ [स० क० १।४।८६]

अयं शब्दो निपात्यते। राजानं हन्ति, राजघः।

[राजघ उपसंख्यानम्। पा० ३।२।५५।१]

**गः** ॥४४॥

---

* अमनुष्यकर्तृके च। पा० ३।२।५३। अप्राणिकर्तृक इति वक्तव्यम्। इह मा भूत्। नगरघातो हस्ती। यद्यप्राणिकर्तृक इत्युच्यते शशघ्नी शकुनिरिति न सिध्यति। अस्तु तर्ह्यमनुष्यकर्तृक इत्येव। कथं नगरघातो हस्ती? कृत्यल्युटो बहुलम् [३।३।११३] इत्येवमत्राप भविष्यति। महाभाष्यम्।

सुपः पराद् गायतेष्टग् भवति। वक्त्रगः, वक्त्रगी। सामगः, सामगी। बहुलमित्येव। सामसंगायः।

[गापोष्टक्। पा० ३।२।८, कर्मण्यनुपसर्गे इति वर्तते। काशिका। गायोऽनुपसर्गात्। स० क० १।४।८७]

**शीधुसुरात् पिवः ॥४५॥**

शीधुसुरापूर्वात् पिबादेशसम्बन्धिनः पा पाने [धातुपा० १।२७४] इत्येतस्माट्टग् भवति। शीधुपः, शीधुपी। सुरापः, सुरापी। शीधुसुरादिति किम्? क्षीरपा। पिब इति किम्? सुरां पाति, सुरापा। कथं संज्ञायां सुरापा सुरापीति? तत्र व्युत्पत्त्यर्थत्वात् क्रियाया द्वयमपि भविष्यति।

[सुराशीध्वोः पिबतेः। बहुलं तणि। ३।२।८।१-२, सुराशीध्वोः पिबः। स० क० १।४।८८। कथं संज्ञायां सुरापा सुरापीति? सातिपिबत्योर्भविष्यति। न च धात्वर्थभेदः, संज्ञासु धात्वर्थस्य व्युत्पत्तिमात्रार्थत्वात्। हेमचन्द्र-बृहद्वृत्तिः। ५।१।७५]

**सुभगाढ्यस्थूलपलितनग्नान्धप्रियाद्च्वेर्भुवः खिष्णुच्खुकञौ ॥४६॥**

सुभगादिभ्योऽच्व्यन्तेभ्यश्च्विसादृश्याच्च्व्यर्थे वर्तमानेभ्यः पराद्भुवतेः कर्तरि खिष्णुच्खुकञौ भवतः। सुभगम्भविष्णुः, सुभगम्भावुकः। आढ्यम्भविष्णुः, आढ्यम्भावुकः। स्थूलम्भविष्णुः, स्थूलम्भावुकः। पलितम्भविष्णुः, पलितम्भावुकः। नग्नम्भविष्णुः, नग्नम्भावुकः। अन्धम्भविष्णुः, अन्धम्भावुकः। प्रियम्भविष्णुः, प्रियम्भावुकः। अच्वेरिति किम्? आढ्यीभविता। स्वाढ्यम्भविष्णुरित्यादि तदन्तविधिना सिद्धम्।

[आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। पा० ३।२।५६, आढ्यसुभगस्थूलपलितनग्नान्धप्रियतदन्तेष्वच्विष्वभूततद्भावे भुवः खिष्णुच्खुकञौ। स० क० १।४।८९]

**कृञः करणे ख्युन्** ॥४७॥ [ पा० ३।२।५७, स० १।४।९० ]

सुभगादिभ्योऽच्व्यन्तेभ्यश्च्विसादृश्याच्च्व्यर्थे वर्तमानेभ्यः परात् करोतेः करणे कारके ख्युन् भवति। सुभगङ्करणम्। आढ्यङ्करणम्। स्वाढ्यङ्करणम्। स्थूलङ्करणम्। पलितङ्करणम्। नग्नङ्करणम्। अन्धङ्करणम्। प्रियङ्करणम्।

**स्पृशोऽनुदकात् क्विन्** ॥४८॥

स्पृशोऽनुदकात् परात् क्विन् भवति। घृतं स्पृशतीति घृतस्पृक्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्। अनुदकादिति किम्? उदकस्पर्शः। ककारोऽदेङ्भावार्थः। नकारः क्विनः [६।३।६०] इति चिह्नार्थः, इकारो वेरनचः [५।१।६४] इति [चिह्नार्थः]।

[स्पृशोऽनुदके क्विन्। पा० ३।२।५८, स० क० १।४।९१]

**दधृगुष्णिक्क्रुञ्चः** ॥४९॥

एते शब्दाः क्विनन्ता निपात्यन्ते। धृषेर्द्वित्वमन्तोदात्तत्वं च। दधृक्। उत्पूर्वस्य स्निहेस्तकारलोपः षत्वं च। उष्णिक्। क्रुञ्चेरनुनासिकलोपाभावः। क्रुङ्। ऋत्विक् स्रग् दिगिति निपातनात् सिद्धम्। ऋत्विग्भ्यः० [४।१।१५१], स्रजो विनिः [४।२।१३७], दिगादिभ्यः० [३।३।१७] इति निपातनात्*।

[ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। पा० ३।२।५९, ऋत्विग्दधृगुष्णिक्क्रुञ्चः। दिक्स्रजौ कर्मणि। स० क० १।४।९४-९५]

**अञ्चुयुजः** ॥५०॥

अञ्चुयुजिभ्यां क्विन् भवति। प्रत्यङ्, युङ्।

[अञ्चेरुपसर्गे च। युजेः केवलात्। स० क० १।४।९२-९३]

---

* This last sentence looks like a later addition.

**समानान्यत्यदादेरुपमानाद् व्याप्ये दृशः क्सकञौ च ॥५१॥**

समानान्याभ्यां त्यदादिभ्यश्चोपमानेभ्यः पराद् दृशेर्व्याप्ये क्सकञौ भवतः, क्विंश्च। समान इव दृश्यते सदृक्षः, सदृशः, सदृक्। अन्यादृक्षः, अन्यादृशः, अन्यादृक्। त्यादृक्षः, त्यादृशः, त्यादृक्। तादृक्षः, तादृशः, तादृक्। समानान्यत्यदादेरिति किम्? वृक्ष इव दृश्यते। उपमानादिति किम्? स दृश्यते। व्याप्य इति किम्? स इव पश्यति। नकारः ०कञ्‌क्वरप्ख्युनः [२।३।१७] इति विशेषणार्थः।

[त्यदादिषु दृशोऽनालोचने कञ् च। पा० ३।२।६०, दृशेः समानान्ययोश्चोपसंख्यानम्। ३।२।६०।१, दृशे क्सश्च वक्तव्यः। काशिका। समानान्यत्यदादिषूपमानेषु दृशः क्सकञौ च। स० क० १।४।९६]

**भजो ण्विः ॥५२॥** [पा० ३।२।६२, स० क० १।४।९७]

भजः सुपः पराण् ण्विः परो भवति। अर्धभाक्, पादभाक्।

**क्विप्विज्मनिन्क्वनिप्वनिपः ॥५३॥**

क्विप् विच् मनिन् क्वनिप् वनिप् इत्येते क्रियार्थात् परे बहुलं भवन्ति। उखास्रत्, पर्णध्वत्, वेदिपत्, अण्डसूः, द्विट्, प्रद्विट्, मित्रद्विट्, मित्रध्रुक्, गोधुक्, अश्वयुक्, वेदवित्, काष्ठभित्, रज्जुच्छित्, गोजित्, ग्रामणीः, अग्रणीः, सेनानीः, सम्राट्, विराट्, विभ्राट्, सस्यात्, क्रव्यात्। बहुलाधिकारादन्नादः, क्रव्यादः। विच्। रेट्। मनिन्। सुदामा। क्वनिप्। सुधीवा। वनिप्। भूरिदावा। इकारो वेरन च [५।१।६४] इति चिह्नार्थः।

[आतो मनिन्क्वनिब्वनिपश्च। अन्येभ्योऽपि दृश्यन्ते। पा० ३।२।७४-७५। आतो विज्मनिन्क्वनिब्वनिपः। अन्येभ्योऽपि दृश्यन्ते। क्विप् च। स० क० १।४।९८-१००, सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजाम् (स०-राजभ्यः) उपसर्गेऽपि क्विप्। अदोऽनन्ने। क्रव्ये च। पा० ३।२।६१, ६८-६९, स० क० १।४।१०१-१०३]

**दुहो डुघ** ॥५४॥* [ स० क० १।४।१०४ ]

दुहः सुपः पराद् डुघः परो भवति। कामदुघा धेनुः। बहुलाधिकारात् कामधुक्।

[ दुहः कब् घश्च। पा० ३।२।७० ]

**आवश्यके णिनिः** ॥५५॥

अवश्यम्भावे गम्यमाने क्रियार्थाण् णिनिर्भवति। अवश्यन्दायी। शतं दायी।

[ आवश्यकाधमर्ण्ययोर्णिनिः। पा० ३।३।१७०, स० क० १।४।१०५ ]

**अजातेः शीलाभीक्ष्ण्ययोः** ॥५६॥

अजातिवाचिनः सुपः परात् क्रियार्थाच्छीलाभीक्ष्ण्ययोर्गम्यमानयोर्णिनिर्भवति। उष्णभोजी। क्षीरपायिन† उशीनराः। उदासारी। प्रत्यासारी। अजातेरिति किम्? ब्राह्मणानामन्त्रयिता।

[ सुप्यजातौ णिनिस्ताच्छील्ये। बहुलमाभीक्ष्ण्ये। पा० ३।२।७८, ८१, सुप्यजातौ ताच्छील्ये। उत्प्रतिभ्यामाङि सर्तेः। व्रताभीक्ष्ण्ययोः। स० क० १।४।१०६, १०७, १११ ]

**साधोः** ॥५७॥

साधुशब्दात् परात् क्रियार्थाण् णिनिर्भवति। साधुकारी साधुदायी। कथं ब्रह्मवादी? ब्रह्मणो वादः ब्रह्मवादः, सोऽस्यास्तीति ब्रह्मवादी।

[ णिन्विधौ साधुकारिण्युपसंख्यानम्। ब्रह्मणि वदः। पा० ३।२।७८।१-२; साधौ। ब्रह्मणि वदः। स० क० १।४।१०८-९ ]

**कर्तुरुपमानात्** ॥५८॥

कर्तृवाचिन उपमानार्थात् परात् क्रियार्थाण् णिनिर्भवति। उष्ट्र इव

---

* डुघः MSS. डुघः परः is not a "lapsus" for डुघ आदेशः as Liebich thought

† Durga and others have क्षीरपायिणः.

क्रोशति, उष्ट्रक्रोशी। कर्तुरिति किम्? शालीनिव कोद्रवान् भुङ्क्ते। उपमानादिति किम्? उष्ट्रः क्रोशति।

[कर्तर्युपमाने। पा० ३।२।७९, स० क० १।४।११०]

**व्रते** ॥५९॥ [पा० ३।२।८०]

सुपः परात् क्रियार्थाद् व्रते गम्यमाने णिनिर्भवति। अश्राद्धभोजी। अर्थित्वात् प्रवृत्तौ नियमः। सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति।

[व्रताभीक्ष्ण्ययोः। स० क० १।४।१११]

**मनः** ॥६०॥ [पा० ३।२।८२, स० क० १।४।११२]

मन्यतेः सुपः पराण् णिनिर्भवति। पटुमानी।

**आत्मनि खश्च** ॥६१॥

आत्मविषयान्मन्यतेः सुपः परात् खश् भवति, णिनिश्च। पण्डितमात्मानं मन्यते, पण्डितम्मन्यः, पण्डितमानी।

[आत्ममाने खश्च। पा० ३।२।८३, खश्चात्ममाने। स० क० १।४।११३]

**भूते** ॥६२॥ [पा० ३।२।८४, स० क० १।४।११४

अयमधिकारः।

**यजः** ॥६३॥

यजतेः सुपः पराद् भूतेऽर्थे वर्तमानाण् णिनिर्भवति। अग्निष्टोमेनेष्टवान्, अग्निष्टोमयाजी। भूत इत्येव। अग्निष्टोमेन यजते।

[करणे यजः। पा० ३।२।८५, स० क० १।४।११५]

**हनः कुत्सायाम्** ॥६४॥

हन्तेः सुपः परात् कुत्सायां गम्यमानायां णिनिर्भवति। पितृव्यघाती, मातुलघाती। कुत्सायामिति किम्? चौरं हतवान्। ब्रह्महा भ्रूणहा वृत्रहेति पूर्वक एव क्विप्। अन्यपूर्वादपि दृश्यते। मधुहा। अन्योऽपि च दृश्यते। ब्रह्मघ्नः। वृत्रस्य हन्तुः [कुमारसम्भवः २।२०]। अन्यतोऽपि च दृश्यते। ब्रह्मवित्। भूत एव भविष्यति, तत्र प्रसिद्धत्वाद् बहुला-

धिकाराद्वा। एवं सुकृत्, कर्मकृत्, पापकृत्, मन्त्रकृत्, पुण्यकृदिति पूर्वेणैव सिद्धम्। अन्यपूर्वादपि च दृश्यते। सूत्रकृत्, शास्त्रकृत्, भाष्यकृत्। अन्यपूर्वोऽपि च दृश्यते। मन्त्रवित्। अन्योऽपि च दृश्यते। कर्मकारः, मन्त्रकारः। सोमसुदिति पूर्वेणैव सिद्धम्। अन्यपूर्वादपि च दृश्यते। सुरासुत्। अन्योऽपि च दृश्यते। सोमं सुतवान्। अग्निचित्, श्यनचित्, कङ्कचिदिति पूर्वेणैव सिद्धम्। सोमविक्रयी, घृतविक्रयी, तैलविक्रयी, क्षीरविक्रयी। विक्रयशब्दादिनिर्भविष्यति। देवदृश्वा, राजयुध्वा, राजकृत्वा, सहयुध्वा, सहकृत्वेति पूर्वेणैव क्वनिपा सिद्धम्, अनिष्टनिवृत्तिस्तु बहुलाधिकारात्।

[कर्मणि हनः। कुत्सितग्रहणं कर्तव्यम्। काशिका। ब्रह्मभ्रूणवृत्रेषु क्विप्। सुकर्मपापमन्त्रपुण्येषु कृञः। सोमे सुञः। अग्नौ चेः। कर्मण्यग्न्याख्यायाम्। कर्मणीनि विक्रियः। दृशेः क्वनिप्। राजनि युधिकृञः। सहे च। पा० ३।२।८६-८७, ८९-९६। कर्मणि हनः कुत्सायाम्। क्विब्ब्रह्मभ्रूणवृत्रेषु। कृञः सुपुण्यपापकर्ममन्त्रपदेषु। सोमे सुञः। चेरग्नौ। कर्मण्यग्न्याख्यायाम्। अन्यत्रान्यतोऽपि चान्योऽपि च दृश्यते। विक्रियः कुत्सायामिनिः। दृशेः क्वनिप्। राज्ञि युधो हेतौ। सहे च। तयोः कृञः। स० क० १।४।११६–१२७]

डः ॥६५॥

सुपः परात् क्रियार्थाद्भूते वर्तमानाद्बहुलं डो भवति। उपसरे जातः, उपसरजः। ब्राह्मणेभ्यो जातः, ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम्, बुद्धिजः संस्कारः। न जातोऽजः। द्विर्जातो द्विजः। प्रजाता प्रजा। अभिजाः, परिजाः। पुमनुजा। अनुजाः। प्रह्वः। ब्रह्मज्यः। परिखाता परिखा। वरमाहृतवान् वराहः।

[सप्तम्यां जनेर्डः। पञ्चम्यामजातौ। उपसर्गे च संज्ञायाम्। अनौ कर्मणि।–अन्येष्वपि दृश्यते। पा० ३।२।९७-१०१, सप्तम्यां जनेर्डः। पञ्चम्यामजातौ। जातावपि दृश्यते। उपसर्गे च संज्ञायाम्। असंज्ञायां च। अनोः कर्मणि। ब्रह्मज्यपुण्यवार्षवराहपटहपरिखाः। स० क० १।४।१२८–१३४]

**क्तवतुः** ॥६६॥ [ स० क० १।४।१३५ ]

क्रियार्थात् परो भूते काले कर्तरि क्तवतुर्भवति। गतवान्, शयितवान्।

[ निष्ठा। पा० ३।२।१०२ ]

**भावाप्ययोः क्तः** ॥६७॥

भावे तद्व्याप्ये चार्थे भूते वर्तमानात् क्रियार्थात् क्तो भवति। आसितं भवता। कृतः कटो भवता।

[ तयोरेव कृत्यक्तखलर्थाः। पा० ३।४।७०, भावकर्मणोः क्तः। स० क० १।४।१३६ ]

**कर्तरि चारम्भे** ॥६८॥

क्रियारम्भे कर्तरि क्तो भवति, यथाप्राप्तं च। प्रकृतो भवान् कटम्, प्रकृतः कटो भवता। प्रसुप्तो भवान्; प्रसुप्तं भवता।

[ आदिकर्मणि क्तः कर्तरि च। पा० ३।४।७१, कर्तरि चारम्भे क्रियायाः। स० क० १।४।१३७ ]

**श्लिषशीङ्स्थासवसजनरुहजॄभ्यः** ॥६९॥

श्लिषादिभ्यः कर्तरि क्तो भवति, यथाप्राप्तं च। आश्लिष्टो गुरुं भवान्; आश्लिष्टो गुरुर्भवता। अधिशयितः खट्वां भवान्; अधिशयिता खट्वा भवता। उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता। उपासितो गुरुं भवान्, उपासितो गुरुर्भवता; अनूषितो गुरुं भवान्; अनूषितो गुरुर्भवता। अनुजातो माणवको माणविकाम्, अनुजाता माणविका माणवकेन। आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता। अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन।

[ See under next rule, श्लिष्शीङ्स्थासवसजनरुहजॄभजिभ्यः। स० १।४।१३८ ]

**गत्यर्थानाप्यादाधारे च** ॥७०॥

गत्यर्थादव्याप्याच्च क्रियार्थादाधारे क्तो भवति, कर्तरि च, यथाप्राप्तं च। इदमेषां* यातम्, इह ते याताः, इह तैर्यातम्, अयं तैर्यातः पन्थाः। इदमेषामासितम्, इह त आसिताः, इह तैरासितम्। देवश्चेद्दृष्टः सम्पन्नाः शालय इति कारणसामग्रीसम्पत्तिरत्राभिमता।

[गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च। क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः। पा० ३।४।७२, ७६, गत्यर्थाकर्मकपिबतिभुजिभ्यो-ऽधिकरणे च। स० क० १।४।१३९। अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्। ३।३।१३३।२ अनिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः। किं कारणम्? अनिष्पन्नत्वात। देवश्चेद् वृष्टो निष्पन्नाः शालयः? तत्र भवितव्यं सम्पत्स्यन्ते शालय इति॥ सिद्धं तु भविष्यत्प्रतिषेधात्। ३।३।१३३।३॥ सिद्धमेतत्। कथम्? भविष्यत्प्रतिषेधात्। यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति। कश्चिदाह—देवश्चेद्वृष्टः सम्पत्स्यन्ते शालय इति। स उच्यते—मैवं वोचः। सम्पन्नाः शालय इति। महाभाष्यम्। देवश्चेद्वृष्टः सम्पन्नाः शालय इति शालिहेतवः सम्पन्ना इत्यतीतता। दुर्गवृत्तिः कृत् ४८३]

आहारार्थात् ॥७१॥

अभ्यवहारार्थादाधारे क्तो भवति, यथाप्राप्तं च। इदमेषां भुक्तम्, इदमेषां पीतम्। इह तैर्भुक्तम्, इह तैः पीतम्। ओदनस्तैर्भुक्तः, पीतमुदकम्। अकर्त्रर्थो योगविभागः। कथं पीता गाव इति? पीतमासां विद्यत इति पीताः, बाहुलकाद्वा।

सुत्वा सुत्वानौ सुत्वान इति क्वनिपा सिद्धम्। यज्वा यज्वानौ यज्वान इति वनिपा सिद्धम्।

[सुयजोर्ङ्वनिप्। पा० ३।२।१०३, सुयजिभ्यां ङ्वनिप्। स० १।४।१४१, आहारार्थेभ्योऽकर्तरि। स० क० १।४।१४०। अकारो मत्वर्थीयः। विभक्तमेषामस्ति विभक्ताः। पीतमेषामस्ति पीता इति। अथवा, उत्तरपद-लोपोऽत्र द्रष्टव्यः। विभक्तधना विभक्ताः। पीतोदकाः पीता इति। महाभाष्यम् ३।४।६७]

* The correct reading would appear to be तेषाम्.

**जपोऽतृन्** ॥७२॥

जीर्यतेरतृन् भवति। जरन् ( Greek *ge'rōn* ), जरती।

[जीर्यतेरतृन्। पा० ३।२।१०४, स० क० १।४।१४२]

**श्रुसद्वसो लिड् वा** ॥७३॥

शृणोत्यादिभ्यो भूते लिड् वा भवति। उपशुश्राव, उपाश्रौषीत्, उपाशृणोत्। उपससाद, उपासदत्, उपासीदत्। अनूवास, अन्ववात्सीत्, अन्ववसत्।

[भाषायां सदवसश्रुवः। पा० ३।२।१०८, श्रुसदवसिभ्यो लिड् वा। स० क० १।४।१४३]

**लिटः क्वसुः** ॥७४॥ [स० क० १।४।१४४]

लिटः क्वसुरादेशो वा भवति। उपशुश्रुवान्, उपशुश्राव। जग्मिवान्, जगाम।

[(लिटः कानज् वा) क्वसुश्च। पा० ३।२।१०७]

**ईयिवाननाश्वाननूचानः** ॥७५॥ [स० क० १।४।१४५]

लिडन्ता* एते शब्दा वा निपात्यन्ते। ईयिवान्, इयाय; उपेयिवान्, उपेयाय; समीयिवान्, समियाय। अनाश्वान्, नाश। अनूचानः, अनूवाच।

[उपेयिवाननाश्वाननूचानश्च। पा० ३।२।१०९। उपेयुषः। उपेयुषा। न चात्रोपसर्गस्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव। काशिका।]

**लुङ्** ॥७६॥ [पा० ३।२।११०, स० क० १।४।१४६]

भूते वर्तमानात् क्रियार्थाल्लुङ् भवति। अकार्षीत्। कथं रात्रिशेषेऽमुत्रायात्ममिति? सकलां रात्रिं जागरितो रात्रेरप्रभातत्वादद्यतनमिव कालं मन्यते। यस्तु मुहूर्तमपि सुप्तः सोऽनद्यतनमेव जानन्नाह।

* Should we read क्वस्वन्ता ?

अमुत्रावसमिति। सर्वत्र च भूतकालसामान्यविवक्षायां लुङ् भवत्येव। यथा। अगमाम घोषान्, अपाम पयः, अशयिष्महि पूतितृणष्विति*।

[अविवक्षितविशेषे। व्यामिश्रे च। वसेर्जागरणसन्ततौ रात्रिशेषे। स० क० १।४।१४७-१४९ वसेर्लुङ् रात्रिशेषे। जागरणसन्ततौ। पा० ३।२।११०।३-४]

**अनद्यतने लङ्** ॥७७॥ [पा० ३।२।१११, स० क० १।४।१५०]

अविद्यमानाद्यतन भूतेऽर्थे वर्तमानात् क्रियार्थाल्लङ् भवति। अपचत्। अनद्यतन इति किम्? अपाक्षीत्। अन्यार्थः† किम्? अद्य ह्यो वाभुक्ष्महि।

**स्मृत्युक्तौ लृट्** ॥७८॥

स्मृतिवचने सति भूतानद्यतनेऽर्थे लृट् भवति। स्मरसि देवदत्त कश्मीरेषु वत्स्यामः? अभिजानासि देवदत्त कलिङ्गेषु वत्स्यामः?

[अभिज्ञावचने लृट्। पा० ३।२।११२, स० क० १।४।१५२]

**न यदि** ॥७९॥ [पा० ३।२।११३]

यच्छब्दे प्रयुज्यमाने स्मृतिवचने सति भूतानद्यतनेऽर्थे वर्तमानात् क्रियार्थाल्लृड् भवति न‡। स्मरसि देवदत्त यत् कश्मीरेष्ववसाम?

[हशश्वतोर्लङ् च। पा० ३।२।११६, न हशश्वद्यत्सु। स० क० १।४।१५३]

**वाकाङ्क्षायाम्** ॥८०॥ [स० क० १।४।१५४]

क्रियान्तराकाङ्क्षायां सत्यां स्मृतिवचने प्रयुज्यमाने भूतानद्यतनेऽर्थे वर्तमानात् क्रियार्थाल्लृड् वा भवति, यदि चायदि च। स्मरसि देवदत्त

---

* पूतीकतृणेषु ३।२।११० महाभाष्यम्।

† अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः। अविद्यमानाद्यतनोऽनद्यतन इति। किं प्रयोजनम्? अद्य ह्योऽभुक्ष्महीति। अद्य च ह्यश्वाभुक्ष्महीति व्यामिश्रे लङेव यथा स्यात्। यद्येवमद्यतनेऽपि लङ् प्राप्नोति, न ह्यद्यतनेऽनद्यतनो विद्यते। अद्यतनेऽप्यद्यतनो विद्यते। कथम्? अवयवेऽपि यद्भावेन। महाभाष्यम् ३।२।१११

‡ लृट् न भवति is the usual form.

यत् कश्मीरेषु वत्स्यामो यत् तत्रौदनं भोक्ष्यामहे ? स्मरसि देवदत्त यत् कश्मीरेष्ववसाम यत् तत्रौदनमभुञ्ज्महि* ? स्मरसि देवदत्त कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे ? स्मरसि देवदत्त कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि* ? इह कस्मान् न भवति—स्मरसि देवदत्त, इति ह कश्मीरेष्ववसाम, कश्मीरेषु शश्वदवसामेति ? व्यवस्थितविभाषया बहुलाधिकाराद्वा ।

[See under 79. विभाषा साकाङ्क्षे । पा० ३।२।११४]

**परोक्षे लिट् ॥८१॥** [पा० ३।२।११५, स० क० १।४।१५५]

परोक्ष साधनविषये भूतानद्यतनेऽर्थे वर्तमानात् क्रियार्थाल्लिड् भवति । जगाम । सुप्तोऽहं किल विललाप । मत्तोऽहं किल विललाप । अत्यन्तापह्नवे प्रत्यक्षस्याप्यपह्नुतत्वात्† । कः कलिङ्गं‡ जगाम ? कः कामरूपं विवेश ? परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये [पा० ३।२।१११।१] दर्शनयोग्यत्वात् परोक्षत्वस्याविवक्षायां लङ् भवत्येव । अजयज्जर्तो हूणानिति । सतोऽपि चाविवक्षा भवति, यथानुदरा कन्येति§ । एवम्, इति हाकरोत्, इति ह चकार । शश्वदकरोत्, शश्वच्चकार । किमगच्छत् पाटलिपुत्रम् ? किं जगाम ? कथं भूतानद्यतने परोक्षे चापरोक्षे च—करोति स्म, वसन्तीह पुरा छात्रा इति ? स्मपुराशब्दाभ्यां भूते काले ज्ञापिते तस्मिन् काले वर्तमानत्वात् । यथा

* अभुङ्क्ष्महि (अभुञ्ज्महि + अभुक्ष्महि) — Liebich from MSS.

† ०पह्नुतत्वात्—MSS.

‡ Durgavṛtti on Kātantra iii. 1. 16 also has कलिङ्गं instead of कलिङ्गान्. In view of कलिङ्गेषु in C. 1. 2. 78 Vṛtti, कलिङ्गं here would appear to be a scribal error.

§ सतोऽप्यविवक्षा भवति। तद्यथा। अनुदरा कन्या। अलोमिकैडका। महाभाष्यम् १।४।२४

भाषते राघवस्तदेति। ऊषुरिह पुरा छात्रा इति परोक्षे लिडस्त्येव। परोक्षत्वस्याविवक्षायाम् अवसन्निह पुरा छात्रा इति लङ्। अनद्यतनस्याप्यविवक्षायाम् अवात्सुरिह पुरा छात्रा इति लुङ्। पृष्टप्रतिवचने ननु करोमीति वर्तमाने क्रियाफलस्यानुवृत्तेः। एवम्, अहं नु करोमीति। न करोमीति वर्तमानेऽपि प्रतिषेधः।

[ परोक्षे लिडत्यन्तापह्नवे च। पा० ३।२।११५।१, हशश्वतोर्लङ् च। प्रश्ने (प्रष्टव्ये–स०) चासन्नकाले। लट् स्म। अपरोक्षे च। ननौ पृष्टप्रतिवचने। नन्वोर्विभाषा (०र्वा–स०)। पुरि लुङ् चास्मे। पा० ३।२।११६-१२२, स० १।४।१५८-१६४, तदादौ च। परोक्षे च प्रयोक्तुर्दर्शनार्हे प्रसिद्धे। स० १।४।१६५, १५१ ]

**वर्तमाने लट्**॥८२॥ [पा० ३।२।१२३, स० क० १।४।१६६]

वर्तमानेऽर्थे वर्तमानात् क्रियार्थाल्लड् भवति। पचति, पठति।

**विदेः श्वसुः**॥८३॥

विदेः परस्य लटः श्वसुर्बहुलं भवति। विद्वान्, वेत्ति, विदन्।

[विदेः शतुर्वसुः। पा० ७।१।३६, वेत्तेः श्वसुश्च। स० क० १।४।१८१]

**शतृ**॥८४॥

लटः शत्रादेशो भवति बहुलम्। सन् ब्राह्मणः, अस्ति ब्राह्मणः। जुह्वत्, जुहोति। हे पचन्। पचन्तं पश्य। पचता कृतम्। जल्पन्तो जायन्ते पण्डिताः। पठन्नास्ते। मा पचन्। धारयन्नुपनिपदम्। चौरस्य द्विषन्। चौरं द्विषन्। सुन्वन्तः। अर्हन्।

[ लटः शतृशानचावप्रथमासमानाधिकरणे। सम्बोधने च। लक्षणहेत्वोः क्रियायाः। पा० ३।२।१२४-१२६, स० क० १।४।१७१-१७३; सदादयश्च बहुलम्। इङ्जुहोत्योर्वाविवचनम्। माङ्याक्रोशे। ३।२।१२६।४-३, द्विषोऽमित्रे सुञो यज्ञसंयोगे। अर्हः प्रशंसायाम्। पा० ३।२।१३१-१३३, माङ्याक्रोशे। अस्तिविद्यतीङ्जुहोतियेत्तिजानातिभ्यो वा। द्विषः शत्रौ। सुञो यजमाने। अर्हः प्रशंसायाम। स० क० १।४।१७७-१७८, १८३-१८५ ]

इङः शक्तौ ॥८५॥

इङः शक्तौ गम्यमानायां लटः शत्रादेशो भवति। अधीयन् पारायणम्। शक्ताविति किम्? अधीते पारायणम्, न च शक्नोति।

[इङ्धार्योः शत्रकृच्छ्रिणि। पा० ३।२।१३०, इङ्धारिभ्यां शतृ शक्तौ। स० क० १।४।१८२]

शानच् ॥८६॥

लटः शानजादेशो भवति बहुलम्। पचमानः, पचते। हे पचमान। पचमानं पश्य। पचमानेन कृतम्। शयाना भुञ्जते यवनाः। अधीयान आस्ते। मा पचमानः। पूङ्यजोश्च शानच्याद्युदात्तत्वं वक्ष्यामः।

[See under 84. पूङ्यजोः (०यजिभ्यां–सं०) शानन्। पा० ३।२।१२८, स० १।४।१८६]

शक्तिवयःशीलेषु ॥८७॥

शक्त्यादिषु गम्यमानेषु लटः शानज् भवति। पुनर्विधानादतद्धानन्योऽपि। कतीह कण्वे* निघ्नानाः? कतीह जल्पमानाः? कतीह कवचं पर्यस्यमानाः? कतीह नृत्यमानाः?

[ताच्छील्यवयोवचनशक्तिषु चानश्। पा० ३।२।१२९, शक्तिवयस्ताच्छील्येषु चानश्। स० क० १।४।१८७]

तौ लृटः ॥८८॥

तौ शतृशानचौ लृटोऽपि बहुलं भवतः। करिष्यन्, करिष्यमाणः। करिष्यति, करिष्यते।

[तौ सत्। ३।२।१२७, लृटः सद्वा। ३।३।१४, लृट्। शतृशानचौ चास्य सद्वत्। स० क० २।४।१५-१६]

---

* Several writers have कण्डू which is supported by one MS. करिणं also will be a very good reading.

**शीलसाधुधर्मेषु तृन् ॥८९॥**

शीलादिष्वर्थेषु क्रियार्थाद्बहुलं तृन् भवति । उपादाता कुमारकान् । गन्ता खेटम्* । मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम् । शीलादिष्वित्यधिकारः पादपरिसमाप्तिं यावत । कथं होता पोता नेष्टा त्वष्टा क्षत्तेति ? औणादिका एवैते [उ० १।५०] ।

[आ यवेस्तच्छीलतद्धर्मतत्साधिकारिषु । पा० ३।२।१३४, तच्छीलतद्धर्मतत्साधुकारिषु यवेः । स० क० १।४।१८८]

**निरालम्भ्यां कुरिष्णुच् ॥९०॥**

निरा अलमित्येताभ्यां परात् कृञः शीलादिषु गम्यमानेष्विष्णुज् भवति । निराकरिष्णुः, अलङ्करिष्णुः ।

---

* गन्त । खलः ।MSS. कर्ता कटम् । गन्ता खेटम् । काशिका । गन्ता खेटम् । भाषावृत्तिः ॥ साधु गच्छति गन्ता खेलम् । साधुः कुशलार्थ एवात्र । दुर्गवृत्तिः, कातन्त्रकृत् २६० । खेलं सलीलम् । टीका । खेलं सलीलमित्यर्थः । पञ्जी । साधु यथा स्यात् तथा गच्छतीत्यर्थः । गन्ता खेलमिति । कविराजः । 'सलीलम्' इति पञ्जी । तथाच रुद्रः— सलीलं खेलनमित्यपीति । व्याख्यासारः । (Read सलीलं खेलमित्यपि.) कर्ता विटः । गन्ता खेला । साधु करोति, साधु गच्छतीत्यर्थः । शाकटायनवृत्तिः ४।३।२२२ । (The correct reading would appear to be कर्ता कटम् । गन्ता खेटम् or खलम्) कर्ता कटम् । गन्ता खेलम् । हृदयहारिणी १।४।१८९ । गन्ता खेलः । कर्ता विकटः । साधु गच्छति, साधु करोतीत्यर्थः । हैमबृहद्वृत्तिः ५।२।२७ (Here also the correct reading would appear to be गन्ता खेटम् । कर्ता कटम्.) गच्छतीति गन्ता खेलः (correct reading खेलम्) सलीलं गच्छतीत्यर्थः । शब्दार्णवचन्द्रिका on जैनेन्द्र ii.2.125. साधौ । गन्ता खेलः । निर्णेता वेदार्थं मनुः । सुपद्म ४।१।११६ । गन्ता खेलमिति सलीलं गन्ता । प्रथमान्तपाठे कर्तृविशेषणम् । मकरन्दः. Because the sense is that of साधुकारिन् and सखेलम् means 'with ease', खेटम् which is not a word of frequent occurrence appears to have been changed into खेलम्. Cf. सा सखेलमितोऽगमत् *Bhaṭṭi* vi.12. †· एव ते MSS.

[अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्। पा० ३।२।१३६, अलंकृञ्निराकृञ्भ्यामिष्णुच्। स० क० १।४।१९०]

**उदः पचपतमदः ॥९१॥**

उदः परेभ्यः पचादिभ्यः शीलादिषु गम्यमानेष्विष्णुज् भवति। उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः।

[उदि पचिपतिमदिभ्यः। स० क० १।४।१९१]

**प्रजनरुच्यपत्रपवृतुवृधुसहचरभ्राजः ॥९२॥**

एभ्यः शीलादिष्विष्णुज् भवति। प्रजनिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः, भ्राजिष्णुः।

[प्रापयोर्जनित्रपिभ्याम्। वृतिवृधिसहिचरिरुचिभ्राजिभ्यः। स० क० १।४।१९२-१९३]

**भुवः ॥९३॥** [स० क० १।४।१९४]

भवतेरिष्णुज् भवति। भविष्णुः।

[भुवश्च। पा० ३।२।१३८]

**जिग्लश्च क्स्नुः ॥९४॥**

जयतेर्ग्लायतेर्भवतेश्च शीलादिषु क्स्नुर्भवति। जिष्णुः, ग्लास्नुः, भूष्णुः।

[ग्लाजिस्थश्च ग्स्नुः। पा० ३।२।१३९, ग्लाम्लास्थाक्षिपचिपरिमृजिभ्यः स्नुः। स० क० १।४।१९६]

**स्थास्नुः ॥९५॥**

स्थास्नुरितीत्वाभावो निपात्यते।

**त्रसिगृधिधृषिक्षिपेः क्नुः ॥९६॥** [पा० ३।२।१४०, स० क० (क्षिपिभ्यः०) १।४।१९७]

त्रसादिभ्यः शीलादिषु क्नुर्भवति। त्रस्नुः, गृध्नुः, धृष्णुः, क्षिप्नुः। शमादिभ्यो घिनुण् न वक्तव्यः। शमोऽस्यास्तीति शमी। एवं दमी,

तमी, श्रमी, भ्रमी, क्षमी, क्लमी, उन्मादी। तथा सम्पर्की, अनुरोधी, आयामी, आयासी, परिसारी, संसर्गी, परिदेवी, संज्वरी, संज्वारी, परिक्षेपी, परिराटी, परिवादी, परिदाही, परिमोही, दोषी, द्वेषी, द्रोही, दोही, योगी, आक्रीडी, विवेकी, त्यागी, रागी, भागी, अतिचारी, अपचारी, आमोषी, अभ्याघाती, विकाषी, विलासी, विकत्थी, विस्रम्भी, अपलापी, विलापी, प्रलापी, प्रसारी, प्रद्रावी, प्रमाथी, प्रवादी, प्रवासी। अन्यपूर्वेभ्योऽपि दृश्यते। विरोधी, प्रयामी, प्रयासी, विसारी, विसर्गी, संवादी, विवादी, अनुवादी, विदाही, सञ्चारी, व्यभिचारी, विघाती, विद्रावी, संवासी। अन्येभ्योऽपि च दृश्यते। रोगी, भोगीत्यादि। तृनपि शमादिभ्यो यथादर्शनं बहुलाधिकाराद् भविष्यति। प्रवदिता, प्रवसिता। निन्दादिभ्यो वुञ् च न वक्तव्यः। निन्दक इति ण्वुला सिद्धम्, एवं हिंसकः, क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः, परिदेवकः, आक्रोशकः। अन्येभ्योऽपि च दृश्यते। घातकः, मारकः।

[शमित्यष्टाभ्यो घिनुण्। संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च। वौ कषलसकत्थस्रम्भः। अपे च लषः। प्रे लपसृद्रुमथवदवसः। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्। पा० ३।२।१४१-१४६। अष्टाभ्यः शमादिभ्यो घिनुण्। युजभुजभजद्विषद्रुहदुहदुषत्यजरञ्जिभ्यः। क्रीडिमुषिभ्यामाङि। यसियमिभ्यां प्रे च। मथिलपिभ्यां च। समि ज्वरिपृचिसृभ्याम्। वौ विचकत्थस्रम्भुकषकसलसहनिभ्यः। अपे च लषः। अभावाहनश्च। संव्यनुप्रेषु वदः। समत्यपाभिव्यभिषु चरः। समनुव्यवेषु रुधः। विपरिप्रेषु सर्तेः। संवयोः सृजः। संप्रयोर्वसः। प्रव्योर्द्रुवः। परिव्योर्दहः। परौ देवमुहिभ्याम्। क्षिपरटवदवादिदेविभ्यो ण्वुल् च। निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकाज्भ्यो वुञ्। स० क० १।४।१९८-२१७, देविक्रुशोश्चोपसर्गे। पा० ३।२।१४७, स० क० १।४।२१८]

[अलंकृञ्‌निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्। पा० ३।२।१३६, अलंकृञ्‌निराकृञ्‌भ्यामिष्णुच्। स० क० १।४।१९०]

**उदः पचपतमदः ॥९१॥**

उदः परेभ्यः पचादिभ्यः शीलादिषु गम्यमानेष्विष्णुज् भवति। उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः।

[उदि पचिपतिमदिभ्यः। स० क० १।४।१९१]

**प्रजनरुच्यपत्रपवृतुवृधुसहचरभ्राजः ॥९२॥**

एभ्यः शीलादिष्विष्णुज् भवति। प्रजनिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः, भ्राजिष्णुः।

[प्रापयोर्जनित्रपिभ्याम्। वृतिवृधिसहिचरिरुचिभ्राजिभ्यः। स० क० १।४।१९२-१९३]

**भुवः ॥९३॥** [स० क० १।४।१९४]

भवतेरिष्णुज् भवति। भविष्णुः।

[भुवश्च। पा० ३।२।१३८]

**जिग्लश्च क्स्नुः ॥९४॥**

जयतेर्ग्लायतेर्भवतेश्च शीलादिषु क्स्नुर्भवति। जिष्णुः, ग्लास्नुः, भूष्णुः।

[ग्लाजिस्थश्च ग्स्नुः। पा० ३।२।१३९, ग्लाम्लास्थाक्षिपचिपरिमृजिभ्यः स्नुः। स० क० १।४।१९६]

**स्थास्नुः ॥९५॥**

स्थास्नुरितीत्वाभावो निपात्यते।

**त्रसिगृधिधृषिक्षिपेः क्नुः ॥९६॥** [पा० ३।२।१४०, स० क० (क्षिपिभ्यः०) १।४।१९७]

त्रसादिभ्यः शीलादिषु क्नुर्भवति। त्रस्नुः, गृध्नुः, धृष्णुः, क्षिप्नुः। शमादिभ्यो घिनुण् न वक्तव्यः। शमोऽस्यास्तीति शमी। एवं दमी,

तमी, श्रमी, भ्रमी, क्षमी, क्लमी, उन्मादी। तथा सम्पर्की, अनुरोधी, आयामी, आयासी, परिसारी, संसर्गी, परिदेवी, संज्वरी, संज्वारी, परिक्षेपी, परिराटी, परिवादी, परिदाही, परिमोही, दोषी, द्वेषी, द्रोही, दोही, योगी, आक्रीडी, विवेकी, त्यागी, रागी, भागी, अतिचारी, अपचारी, आमोषी, अभ्याघाती, विकाषी, विलासी, विकत्थी, विस्रम्भी, अपलापी, विलापी, प्रलापी, प्रसारी, प्रद्रावी, प्रमाथी, प्रवादी, प्रवासी। अन्यपूर्वेभ्योऽपि दृश्यते। विरोधी, प्रयामी, प्रयासी, विसारी, विसर्गी, संवादी, विवादी, अनुवादी, विदाही, सञ्चारी, व्यभिचारी, विघाती, विद्रावी, संवासी। अन्येभ्योऽपि च दृश्यते। रोगी, भोगीत्यादि। तृनपि शमादिभ्यो यथादर्शनं बहुलाधिकाराद् भविष्यति। प्रवदिता, प्रवसिता। निन्दादिभ्यो वुञ् च न वक्तव्यः। निन्दक इति ण्वुला सिद्धम्, एवं हिंसकः, क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः, परिदेवकः, आक्रोशकः। अन्येभ्योऽपि च दृश्यते। घातकः, मारकः।

[शमित्यष्टाभ्यो घिनुण्। संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च। वौ कषलसकत्थस्रम्भः। अपे च लषः। प्रे लपसृद्रुमथवदवसः। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्। पा० ३।२।१४१-१४६। अष्टाभ्यः शमादिभ्यो घिनुण्। युजभुजभजद्विषद्रुहदुहदुषत्यजरञ्जिभ्यः। क्रीडिमुषिभ्यामाङि। यसियमिभ्यां प्रे च। मथिलपिभ्यां च। ससि ज्वरिपृणविसभ्याम्। वौ विचकत्थस्रम्भुकषकसलसहनिभ्यः। अपे च लषः। अभावाहनश्च। संव्यनुप्रेषु वदः। समत्यपाभिव्यभिषु चरः। समनुव्यवेषु रुधः। विपरिप्रेषु सर्तेः। संव्योः सृजः। संप्रयोर्वसः। प्रव्योर्द्रुवः। परिव्योर्दहः। परौ देवमुहिभ्याम्। क्षिपरटवदवादिदेविभ्यो ण्वुल् च। निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकाज्भ्यो वुञ्। स० क० १।४।१९८-२१७, देविक्रुशोश्चोपसर्गे। पा० ३।२।१४७, स० क० १।४।२१८]

**चालशब्दार्थादनाप्याद्युच् ॥९७॥**

चालार्थाच्छब्दार्थाच्च व्याप्यरहिताच्छीलादिषु युज् भवति। चालनः, चोपनः। रवणः, शब्दनः। अनाप्यादिति किम्? पठिता विद्याम्।

[चलनशब्दार्थादकर्मकाद् युच्। पा० ३।२।१४८, स० क० १।४।२१९। By changing चलन into the rather unusual चाल Candra saves a syllable.]

**तङ्वतो हलादेरङः ॥९८॥**

तङ्वान् यो हलादिरङ्कारकस्तस्माच्छीलादिष्वथेषु युज् भवति। वर्तनः, वर्धनः, देवनः। परिदेवक इति [पा० ३।२।१४७, स० क० १।४।२१८] न भवति बहुलाधिकारात्। तङ्वत इति किम्? भविता। हलादेरिति किम्? एधिता। आदिग्रहणं किम्? जुगुप्सनः, तितिक्षण इत्यत्रापि यथा स्यात्। अङ इति किम्? शयिता। अनाप्यादित्येव। वसिता वस्त्रम्।

[अनुदात्तेतश्च हलादेः। पा० ३।२।१४९, अङितो हलादेरात्मनेपदिनः। स० क० १।४।२२०]

**जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥९९॥** [पा० ३।२।१५०, स० क० १।४।२२१—०पदिभ्यः]

एभ्यः शीलादिषु युज् भवति। जवनः, चङ्क्रमणः, दन्द्रमणः, सरणः, गर्धनः, ज्वलनः, शोचनः, अभिलषणः, प्रपतनः, प्रपदनः। चलनार्थानां पदेश्च ग्रहण व्याप्यवदर्थम्। पदिग्रहणमुकञा बाधितस्य युचः पुनर्विधानार्थमित्येके। तदनर्थकं बहुलाधिकारात्। ताच्छीलिकेषूत्सर्गस्यापवादसमावेशाभावज्ञापनार्थमित्यपरे। तथाप्यनर्थकं समावेशस्यापि दर्शनात्। तथा हि। गामुको गन्तेति समावेशोऽपि दृश्यते। एवं विकत्थी विकत्थन इति, भासुरं भास्वरं भासनमिति, जागरिता

जागरूक इति, वर्धिष्णुर्वर्धन इति, अपलापुकोऽपलपण इति। तस्माद् वहुलाधिकारादेवात्र सिद्धम्।

[पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात्। असरूपनिवृत्त्यर्थं तु। पा० ३।२।१५०।१-२ ; चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थम्। इह ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति। ताच्छीलिकेषु मिथो वासरूपविधिर्नास्तीति। ...प्रायिकं चैतज् ज्ञापकम्। क्वचित् समावेश इष्यत एव। गन्ता खेटं विचक्षणः। काशिका]

क्रुधभूपार्थात् ॥१००॥

क्रोधार्थेभ्यो मण्डनार्थेभ्यश्च शीलादिषु युज् भवति। क्रोधनः, कोपनः। भूषणः, मण्डनः।

[क्रुधमण्डार्थेभ्यश्च। पा० ३।२।१५१, क्रुधभूपार्थेभ्यश्च। स० १।४।२२२]

न यदीक्षः ॥१०१॥

यकारान्ताद्दीक्षश्च युज् न भवति। क्नुयिता। दीक्षिता। सूदिदीपिभ्यां प्रतिषेधो वक्तव्यः—सूदिता, दीपिता? न वक्तव्यः। अरिसूदन इतीह दृश्यते। दीपेरपि रो बाधको भविष्यति। कथं तर्हि दीपिता? तुना रेण समावेशो भविष्यति, युचो न भविष्यति*, वहुलाधिकारात्।

[न यः। सूददीपदीक्षश्च। पा० ३।२।१५२-१५३, न यान्तसूददीपदीक्षिभ्यः। स० क० १।४।२२३। See Candra i. 2. 116 Vṛtti.]

लपपतपदस्थाभूशॄष्पहनकमगम उकञ् ॥१०२॥

लपादिभ्यः शीलादिषूकञ् भवति। अपलापुकः, प्रपातुकः, उपपादुकः, उपस्थायुकः, प्रभावुकः, प्रशारुकः, प्रवर्षुकः, आघातुकः, कामुकः, आगामुकः।

[लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्। पा० ३।२।१५४, स० क० १।४।२२४]

* This refers to the root दीप् only, for Patajali says सति यद्दीपिग्रहणं करोति तज्ज्ञापयत्याचार्यो भवति युचो रेण समावेश इति।

**जल्पभिक्षकुट्टलुण्टवृङः पाकन्** ॥१०३॥ [पा० ३।२।१५५, स० क० १।४।२२५ ]

जल्पादिभ्यः शीलादिषु पाकन् भवति। जल्पाकः, भिक्षाकः, कुट्टाकः, लुण्टाकः, वराकः। पकारो ङीपर्थः, जल्पाकी। कथं प्रजवी? प्रजवोऽस्यास्तीति प्रजवी। एवं विजयी, दरी, क्षयी, विश्रयी, अत्ययी, वमी, अव्यथी, अभ्यमी, परिभवी, प्रसवीति।

[प्रजोरिनिः। जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च। पा० ३।२।१५६-१५७, प्रे जूसुभ्यामिनिः। जीणृदृक्षिश्रिपरिभूवमाभ्यमाव्यथिभ्यः। स० क० १।४।२२६-२२७]

**स्पृहिगृहिपतिशीङ आलुच्** ॥१०४॥

एभ्यः शीलादिष्वालुज् भवति। स्पृहयालुः, गृहयालुः, पतयालुः, शयालुः। कथं दयालुः, निद्रालुः, तन्द्रालुः, श्रद्धालुरिति? मत्वर्थीयं वक्ष्यामः [४।२।१५७]।

[स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। पा० ३।२।१५८, आलुचि शीङ्ग्रहणम् ३।२।१५८।१, दयिपतिगृहिस्पृहिनिद्रातन्द्राशीङ्श्रद्धाभ्य आलुच्। स० क० १।४।२२८]

**धेसिशदसदो रुः** ॥१०५॥

धादिभ्यः शीलादिषु रुर्भवति। धारुः, सेरुः, शद्रुः, सद्रुः। कथं दारु? अङ्ग लेर्दारुणि [४।४।९७] इति निपातनात्।

[दाधेट्सिशदसदो रुः। पा० ३।२।१५९, स० क० १।४।२२९]

**सृघसदः क्मरच्** ॥१०६॥

एभ्यः क्मरज् भवति। सृमरः, घस्मरः, अद्मरः।

[सृघस्यदः क्मरच्। पा० ३।२।१६०, स० क० १।४।२३०]

**भञ्जिभासिमिदो घुरच्** ॥१०७॥

भञ्जादिभ्यो घुरज् भवति। भज्यते स्वयमेव भनक्ति वात्मानम्,

भङ्गुरं काष्ठम्। यस्तु परं भनक्ति तत्र न भवति बहुलाधिकारात्। भासत इति भासुरः। मेदुरः।

[One expected either भञ्जभासमिदो घुरच् or भञ्जिभासिमिदेर्घुरच्॥ भञ्जभासमिदो घुरच्। पा० ३।२।१६१, भासिमिदिभ्यां घुरच्। भञ्जेः कर्मकर्तरि। स० क० १।४।२३१-२३२]

**विदिभिदिच्छिदेः कुरच्** ॥१०८॥ [पा० ३।२।१६२]

विदादिभ्यः कुरज् भवति। वेत्तीति विदुरः। भिद्यते स्वयमेव भिनत्ति वात्मानम्, भिदुरः। छिद्यते स्वयमेव छिनत्ति वात्मानम्, छिदुरः। यस्तु परं भिनत्ति छिनत्ति वा तत्र न भवति, बहुलाधिकारात्। तत्रापि केचिदिच्छन्ति—दोषान्धकारभिदुरो दृप्तारिपक्षच्छिदुर इति।

[छिदिभिदिभ्यां कुरच्। विदेश्च। स० क० १।४।२३३-२३४। न हि वयं कर्मकर्तरि नेति ब्रूमः, तस्यापि कर्तृतया तत्र प्रत्ययस्याप्रत्यूहत्वात्, किन्तु शुद्धेऽपि कर्तरि यथासम्भवं भवत्येव। शब्दकौस्तुभः]

**इण्जिस्नशः क्वरप्** ॥१०९॥

इणादिभ्यः क्वरप् भवति। इत्वरः, जित्वरः, सृत्वरः, विनश्वरः।

[इण्नशजिसर्तिभ्यः क्वरप्। पा० ३।२।१६३, इण्जिसृनशिभ्यः क्वरप्। स० क० १।४।२३५]

**गत्वरः** ॥११०॥

गत्वर इति निपात्यते।

[गत्वरश्च। पा० ३।२।१६४, गमेस्त च। स० क० १।४।२३६]

**जागरूकः** ॥१११॥ [पा० ३।२।१६५, स० क० १।४।२३७]

जागर्तेरूकः परो भवति। जागरूकः।

**यजजपदहदशो यङः*** ॥११२॥

---

* The rule must have read originally यजजपदशो यङः as is clearly shown by the Jainendra Vyākaraṇa. The द was probably dropped through the error of some scribes and ह

यजादिभ्यो यङन्तेभ्य ऊकः परो भवति। यायजूकः, जञ्जपूकः, दन्दहूकः, दन्दशूकः।

[ यजजपदशां यङः। पा० ३।२।१६६, चेक्रीयितान्तानां यजिजपिदन्शिवदाम्। कातन्त्र-कृद्वृत्तिः। २८९, यज्जपवद्दशादूकः। जैं० २।२।१४८, यजवद्दशजपादूकः। शा० ४।३।२४०, यजिजपिदंशिवदिभ्यो यङः। स० क० १।४।२३८। Hemacandra has यजिजपिदंशिवदादूकः v. 2. 47 and says in his Bṛhadvṛtti : अन्येभ्योऽपीति केचित्। दन्दहूकः। पापचूकः। निजागदूकः। नानशूकः। पम्पशूकः।]

**सहिचलिवहः किकिनौ** ॥११३॥ [स० क० १।४।२३९...वहिभ्यः]

सहादिभ्यो यङन्तेभ्यः किकिनौ परौ भवतः। सासहिः, चाचलिः, वावहिः।

[ सासहिवावहिचाचलिपापतीनां निपातनम्। पा० ३।२।१७१।४, अपर आह—सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ। भाष्यम्। ]

**पापतिः** ॥११४॥ [स० क० १।४।२४०]

पापतिरिति नीगभावो निपात्यते।

**चक्रिसस्निजज्ञयः** ॥११५॥

चक्र्यादयो निपात्यन्ते। कथं दधि? अस्थिदधि० [५।४।३१] इति निपातनात् सिद्धम्। नेमिरित्यौणादिकः [१६४]।

---

inserted later on to make some sense. This was probably hastened by दह and दश occurring side by side in the rule जपजभवहदहदशभञ्जपशाम् vi. 2. 135. All later grammarians including Vararuci, Bhoja, Hemacandra and other followers of Candra have वद in their rules instead of दह and Goyicandra, Viṣṇumis'ra and other commentators do not refer to Candra in this connexion. By the time the Vṛtti was composed दह might have established itself as the correct reading, for we find दन्दहूक in the Vṛtti, or the Vṛtti also might have been tampered with.

[ भाषायां धाञ्कृसृजनिनमिभ्यः । पा० ३।२।१७१।३, चक्सिसतिजनि-घघिनेमयः। स० क० १।४।२४१ ]

स्म्यजसहिंसदीपनमकमकम्पो रः ॥११६॥

स्म्यादिभ्यो रो भवति। स्मेरः, अजस्रम्, हिंस्रः, दीप्रः, नम्रः, कम्रः, कम्प्रः। युजपि भवत्येव। कमनः, कम्पन इति।

[ नमिकम्पिस्म्यजसकमहिंसदीपो रः। पा० ३।२।१६७, दीपिकम्प्यजसि-हिंसिकमिस्मिनमिभ्यो रः। स० क० १।४।२४२ ]

सनाशंस उः ॥११७॥

सनन्तेभ्य आशंसश्च उः परो भवति। चिकीर्षुः। आशंसुः। ०भिक्षुनटसूत्रम्० [ ३।३।७७ ] इति भिक्षुः।

[ सनाशंसभिक्ष उः। पा० ३।२।१६८, सनाशंसिभिक्षिभ्य उः। स० क० १।४।२४३ ]

विन्दुरिच्छुः ॥११८॥ [ पा० ३।२।१६९ ]

एतौ शब्दौ निपात्येते।

[ वेत्तीच्छत्योर्नुछौ च। स० क० १।४।२४४ ]

स्वप्नक् तृष्णक् ॥११९॥

स्वपितृषो नजिङ् निपात्यते।

[ स्वपितृषोर्नजिङ्। पा०। ३।२।१७२, स्वपितृषिधृषिभ्यो नजिङ्। स० क० १।४।२४५. Candra makes no provision for धृष्णक् which is found in the Kāśika and Amarakoṣa.]

शॄवन्देरारुः ॥१२०॥ [ पा० ३।२।१७३—०न्द्यो० ]

शृणातेर्वन्दतेश्च आरुः परो भवति। शरारुः, वन्दारुः।

[ शॄवन्दिभ्यामारुः। स० क० १।४।२४६ ]

भियः क्रुः ॥१२१॥

बिभेतेः क्रुः परो भवति। भीरुः। कना भीरुकः। लत्वेन। भीलुकः।

[ भियः क्रुक्लुकनौ । पा० ३।२।१७४, भियः क्रुकनपि वक्तव्यः । भाष्यम् । भियः क्रुक्रुकन्वलुकनः । स० क० १।४।२४७ ]

**स्थाभासपिसकसो वरच् ॥१२२॥**

स्थादिभ्यो वरज् भवति । स्थावरः । ईश्वरार्थात्० [ २।२।६९ ] इति ईश्वरः । भास्वरः, पेस्वरः, कस्वरः ।

[ स्थेशभासपिसकसो वरच् । पा० ३।२।१७५, स० क० १।४।२४८ ]

**यो यङः ॥१२३॥**

यातेर्यङन्ताद् वरज् भवति । यायावरः । कथं भ्राट्, भाः, धूः विद्युत्, ऊर्क्, पूः, ग्रावस्तुत्, स्वयम्भूः, प्रतिभूरिति ? क्विपा पूर्वेण सिद्धम् । वाक्, प्राट्, श्रीः, शतद्रुः, कटप्रूः, स्रूः, जूरित्यौणादिकाः[३।६९]। एवमायतस्तूः, जूहूः, दिद्युत्, जगत्, ददृदिति । धीरिति सुप्यसुधियः [५।३।८९] इति निपातनात् सिद्धम् । विभुः, प्रभुः, सम्भुः, शम्भुः, मितद्रुरित्यौणादिकाः [१।२१] । धात्री, दात्रम्, नेत्रम्, शस्त्रम्, योत्रम्, योक्त्रम्, स्तोत्रम्, तोत्त्रम्, सेत्रम्, सेक्त्रम्, मेढ्रम्, पत्त्रम्, दंष्ट्रा, नद्ध्रीति करणे ष्ट्रनौणादिकाः [३।४२] । तथा हलस्य पोत्रम्, सूकरस्य पोत्रम्, अरित्रम्, लवित्रम्, धवित्रम्, सवित्रम्, खनित्रम्, सहित्रम्, चरित्रम्, पवित्रम् । यज्ञे पवित्रम्, पवित्रा नाम नदी, पवित्रो नाम ऋषिः, पवित्रोऽग्निर्रिति । प्रक्षिवण इति यत्राभूतकालता तत्र क्तः । एवं राज्ञां मतः, राज्ञामिष्टः, राज्ञां बुद्धः, राज्ञा पूजितः । एवं शीलितः, रक्षितः, क्षान्तः, आक्रुष्टः, जुष्टः, रुष्टः, रुषितः, अभिव्याहृतः, दयितः, हृष्टः, कान्तः, संयतः, उद्यतः, अमृत इति । कष्टमिति भूततायामेव हेतोः, फलं त्वत्र भावि ।

इति चान्द्र व्याकरणे प्रथमाध्यायस्य द्वितीयः पाद. समाप्तः ।

[ यश्च यङः । भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् । अन्येभ्योऽपि दृश्यते । भुवः संज्ञान्तरयोः । विप्रसंभ्यो ड्वसंज्ञायाम् । धः कर्मणि ष्ट्रन् ।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे। हलसूकरयोः पुवः। अर्तिलूधूसूखनसहचर इत्रः। पुवः संज्ञायाम्। कर्तरि चर्षिदेवतयोः। ञीतः क्तः। मतिबुद्धिपूजार्थेभ्यश्च। पा० ३।२।१७६-१८८। वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च। द्युनिगमिजुहोतीनां द्वे च। दृणातेर्ह्रस्वश्च द्वे च क्विप् चेति वक्तव्यम्। भाष्यम्। ध्यायतेः सम्प्रसारणं च। ३।२।१७८।२-४। डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम्। ३।२।१८०।१।

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः॥ महाभाष्यम्।

यातेर्डः। भ्राजभासधुर्विद्युतोर्जिप्रावस्तुवः क्विप्। अन्येभ्योऽपि दृश्यते। श्विड्द्रुस्तुज्यायतस्तुकटप्रुपरिव्रजां दीर्घश्च। वचिप्रच्छ्योरप्रसारणं च। ध्यः सम्प्रसारणं च। जुहोतेर्द्वे च। द्युतिगमोश्च। दृणातेर्ह्रस्वश्च। भुवः संज्ञायाम्। डुः शंविसम्प्रेषु। धः कर्मणि ष्ट्रन्। नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतपानहिभ्यः करणे। दंशेरपित्। सीरसूकरास्ये पुवः। अर्तिलूधूसूखनिसहिवहिचरिभ्य इत्रः। पुवः संज्ञायाम्। कर्तरि चर्षिदेवतयोः। ञीतः क्तः प्राग्वत्। मतिबुद्धिपूजार्थेभ्यः। शीङ्श्लिषिसञ्जभञ्जिलज्जिलिपितृपिदृपिक्रुधिक्षुधिरुहिमुहिदिहिस्निहिक्लमिश्रम्यवग्रासिगुधाञ्भुम्मदिमुदिप्रभृतिभ्यः। शीलिरक्षिक्षमिकमिजुषिरुषितुषिहृषिभ्यः। क्रुशियमिसिभ्यामाङि। रभेः समि च। यमेरुदि च। अभिव्याङि हृञः। नञि मृङः। कषेर्निष्ठा भविष्यति च। सर्वेभ्यो हेतुसम्पत्तौ वा। स० क० १।४।२४९-२७७]

---

उणादयः॥१॥

क्रियार्थात् परे बहुलमुणादयो भवन्ति। केचिद्वर्तमाने। कारुः, वायुः। केचिद् भूते। वृत्तं तदिति वर्त्म। भसितं तदिति भस्म। केचिद्भविष्यति। ग्रामगमी, ग्रामागामी। भविष्यतीति भावी। लुङ्विषयेऽपि। श्वो ग्रामगमी। केचिदपादाने। भीमः, भीष्मः। केचित् सम्प्रदाने। दाराः।

[उणादयो बहुलम् । भूतेऽपि दृश्यन्ते । भविष्यति गम्यादयः । वाशगोघ्नौ सम्प्रदाने । भीमादयोऽपादाने । ३।३।१, ३।४।७३-७४ भविष्यतीत्यनद्यतन उपसंख्यानम् । ३।३।३।१, उणादयो भूतेऽपि । सर्वधातुभ्यो मनिन् । भविष्यति गम्यादयः । स० क० २।४।१-३]

**भविष्यति लृट् ॥२॥**

भविष्यदर्थे वर्तमानात् क्रियार्थाल्लृट् परो भवति । करिष्यति ।

[लृट् शेषे च । पा० ३।३।१३, लृट् । स० क० २।४।१५]

**अनद्यतने लुट् ॥३॥** [पा० ३।३।१५, स० क० २।४।१२]

अविद्यमानाद्यतन भविष्यदर्थ वर्तमानात् क्रियार्थाल्लुट् परो भवति । श्वः कर्ता । अन्यपदार्थः किम् ? अद्य श्वो वा गमिष्यति । कथं यावद् भुङ्क्ते ततो व्रजतीति ? वर्तमानसमीपस्य तद्ग्रहणेन ग्रहणात् । पदाद्वा वर्त्तमानता गम्यते, पदान्तराद्भविष्यत्ता । लृट् तर्हि कस्मान्न भवति ? ततः प्रभृति वर्तमानस्य विवक्षितत्वात् । भविष्यद्विवक्षायां तु यावच्छब्दप्रयोगो न स्यात् । अधीष्व माणवक पुरा विद्योतते विद्युदिति वर्तमानस्यैव विवक्षितत्वात्, तत्समीपस्य तद्ग्रहणेन ग्रहणात् । पुराशब्दाद्वा भविष्यत्तावगमे तदा तस्य वर्तमानत्वात् । कदाकर्हिशब्दप्रयोगे तु स्वे स्वे विषये विवक्ष्यमाणे लकारत्रयं भवति । कदा भुङ्क्ते ? कदा भोक्ष्यते ? कदा भोक्ता ? कर्हि भुङ्क्ते ? कर्हि भोक्ष्यते ? कर्हि भोक्ता ? लिडादयोऽपि भवन्ति । कदा बुभुजे ? कदा भुक्तवान् ? तथा किंवृत्तप्रयोगे लिप्सायां गम्यमानायाम् । को भवतां भिक्षा ददाति ? को भवतां भिक्षां दास्यति ? को भवतां भिक्षां दाता ? तथा लिप्स्यमानसिद्धावपि विवक्षितायाम् । यो भवतां भिक्षां ददाति स स्वर्गलोक याति । यो भवतां भिक्षां दास्यति स स्वर्गलोकं यास्यति । यो भवतां भिक्षां दाता स स्वगलोकं याता । यो भवतां भिक्षामदात् स स्वर्गलोकमगमत् ।

तथा। उपाध्यायश्चेदागच्छत्यथ त्वं छन्दोऽधीष्व। उपाध्यायश्चेदागमिष्यत्यथ त्वं व्याकरणमधीष्व। उपाध्यायश्चेदागन्ता अथ त्वं मीमांसामधीष्वेति। तथा, ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्वेति। ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेदथ त्वं छन्दोऽधीष्वेत्याशंसायां लिङ् अस्त्येव। तस्मादूर्ध्वमौहूर्तिकादन्यत्रापि भवितव्यमेव लिङा। उपाध्यायश्चेदागच्छेदथ त्वं छन्दोऽधीष्वेति।

[यावत्पुरानिपातयोर्लट्। विभाषा कदाकर्ह्योः (कदाकर्ह्योर्वा–स०)। किंवृत्ते लिप्सायाम्। लिप्स्यमानसिद्धौ च। लोडर्थलक्षणे च। लिङ् चोर्ध्वमौहूर्तिके। पा० ३।३।४-९, स० क० २।४।४-९]

माङि लुङ् ॥४॥ [पा० ३।३।१७५, स० क० २।४।१०]

माङि प्रयुज्यमाने भविष्यदर्थ वर्तमानात् क्रियार्थाल्लुङ् भवति। मा कार्षीत्। ङकारः किम्? मा करोतु। मा करिष्यति।

[कथं मा भवतु तस्य पापं मा भविष्यतीति? असाधुरेवायम्। केचिदाहुः। अङिद्परो माशब्दो विद्यते, तस्यायं प्रयोगः। काशिका]

स्मपरे लङ् च ॥५॥ [स० क० २।४।११]

स्मोत्तरे माङि प्रयुज्यमाने लङ् भवति, लुङ् च। मा स्म करोत्। मा स्म कार्षीत्।

[स्मोत्तरे लङ् च। पा० ३।३।१७६]

तुमुन् भावे क्रियायां तदर्थायाम् ॥६॥

भविष्यदर्थे वर्तमानात् क्रियार्थाद् भावे तुमुन् भवति क्रियायां तदर्थायां प्रतीयमानायाम्। पक्तुं व्रजति। भाव इति किम्? पक्ष्यामीति व्रजति। क्रियायामिति किम्? भिक्षिष्य इत्यस्य जटाः। तदर्थायामिति किम्? गमिष्यतस्ते भविष्यत्यन्नं भोजनाय। तुमुनो नकारः स्वरार्थः, उकार उच्चारणार्थः। कथं कारको

व्रजति? पूर्वेण ण्वुला सिद्धम्। तृजादयोऽपि तर्हि प्राप्नुवन्ति? न, तैस्तादर्थ्यानवगमात्। न हि कर्ता व्रजति, विक्षिपो व्रजतीति तादर्थ्यं गम्यते। ण्वुलपि तर्हि न प्राप्नोति, न हि कारको व्रजतीति तादर्थ्यं गम्यते। अथ प्रकरणात् तादर्थ्यं गम्येत? तृजादिष्वपि समानम्। तस्मान्नैव तादर्थ्ये ण्वुलादयः सम्भवन्ति, प्रकरणात्तु तादर्थ्यं गम्यते। तथापि बहुलाधिकाराण् ण्वुल् भविष्यति, तृजादयो न भविष्यन्ति। पाकाय व्रजति, पक्तये व्रजति, पचनाय व्रजतीत्येवमादि घञाद्यन्तात् तादर्थ्यं चतुर्थ्या सिद्धम्। गोदायो व्रजतीति कविषयेऽपि बहुलवचनादण् भविष्यति। अन्यत्रापि तर्हि प्राप्नोति? बहुलाधिकारादन्यत्र न भविष्यति।

[तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्। भाववचनाश्च। अण् कर्मणि च। पा० ३।३।१०-१२, क्रियायां च क्रियार्थायाम्। ण्वुल् च। कर्मणि चाण्। तुमुन् भावे। भाववचनाश्च। स० द० २।४।१७-२१]

घञ् कारके च ॥७॥

भावे कारके च क्रियार्थाद्बहुलं घञ् भवति। भावे। पाकः, त्यागः। कारकेऽपि संज्ञायां तावत्। पद्यतेऽनेनेति पादः। रुजतीति रोगः। विशतीति वेशः। स्पृशतीति स्पर्शो व्याधिविशेषः। सरति कालान्तरमिति सारः; स्थिरोऽर्थः। सरन्त्यनेनेति सारो बलम्। अतीसारो व्याधिः। विसारो मत्स्यः। प्रास्यत इति प्रासः। दीर्यन्त एभिरिति दाराः। जीर्यतेऽनेनेति जारः। असंज्ञायामपि दायो दत्तः। लाभो लब्धः।

[पदरुजविशस्पृशो घञ्। स्पृश उपतापे। वा १। सृ स्थिरे। व्याधिमत्स्यबलेष्विति वक्तव्यम्। भाष्यम्। भावे। अकर्तरि च कारके संज्ञायाम्। पा० ३।३।१६-१९। दारजारौ कर्तरि णिलुक् च। करणे च। ३।३।२०।४-५, संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात् ३।३।१९।२, संज्ञाव्यभिचारार्थश्चकारः। कार्मिका। घञ्। परिन्यविनिभ्यः कर्तरि। स्पृशेरुपतापे। दृजृभ्यां णिलुक्

च। सर्तेः स्थिरव्याधिबलमत्स्येषु। अकर्तरि कारके च संज्ञायाम्। स० क० २।४।२२-२७].

**संख्यातात् ॥८॥**

संख्यायाः परिमितार्थाद् घञ् भवति। एकस्तण्डुलनिश्चायः। बहुलाधिकारादेको निश्चयः। एका तिलोच्छ्रितिः।

[परिमाणाख्यायां सर्वेभ्यः। पा० ३।३।२०, घञनुक्रमणमजब्विषये। ३।३।२०।२। संख्यातात् परिमाणाख्यायाम्। स० क० २।४।२८]

**इङः पिद्वा ॥९॥**

इङो घञ् भवति, पिद्वा। उपेत्याधीयतेऽस्मादुपाध्यायः। उपाध्यायी, उपाध्याया।

[इङश्च। इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्। पा० ३।३।२१, ०२१।१, इङश्च। अपादाने पिद्वा। स० क० २।४।२९-३०]

**शॄ वायुवर्णनिवृतेषु ॥१०॥** [३।३।२१।२]

शॄ इत्येतस्माद् घञ् भवति वाय्वादिष्वर्थेषु। शारो वायुः। शारो वर्णः। नीशार आवरणम्। एतेष्विति किम्? शरः।

[शृणातेर्वायुवर्णनिवृतावरणेषु। स० क० २।४।३१, निशीर्यंते शीताद्युपद्रवो येन तत् नीशारो निवृतम्।...निवृता द्यूतोपकरणमिति कश्चित्, नियमेन कृता इत्यन्वर्थात्। शारैरिव क्रीडितम्। हेमचन्द्रः ५।३।२० बृहद्वृत्तिः]

**प्रादिभ्यो रुवः ॥११॥**

प्रादिभ्यः पराद् रौतेर्घञ् भवति। संरावः। प्रादिभ्य इति किम्? रवः। कथं रावः? बहुलाधिकारात्।

[उपसर्गे रुवः। पा० ३।३।२२, स० क० २।४।३३]

**समो युद्रुदुवः ॥१२॥**

समः परेभ्यो यौत्यादिभ्यो घञ् भवति। संयावः, सन्द्रावः, सन्दावः। सम इति किम्? यवः, द्रवः, दवः। कथं यावो द्रावो दाव इति? संपूर्वेभ्यो घञ् एवेति नियमादपोऽपि वानित्यत्वात्।

[समि युद्रुदुवः । पा० ३।३।२३, स० २।४।३५, अनुपसर्गाद्वा । स० २।४।३६]

त्रेः क्षुश्रुवः ॥१३॥

विपूर्वात् क्षौतेः शृणोतेश्च घञ् भवति । विक्षावः, विश्रावः । वेरिति किम् ? क्षवः श्रवः ।

[वौ क्षुश्रुवः । पा० ३।३।२५, स० क० २।४।३४]

श्रिभुवोऽप्रादेः ॥१४॥

श्रयतेर्भवतेश्च प्रादिरहिताद् घञ् भवति । श्रावः, भावः । अप्रादेरिति किम् ? प्रश्रयः, प्रभवः । कथं प्रभावः, विभावः, अनुभावः इति ? बहुलाधिकारात् । प्रकृष्टो वा भावः प्रभावः, विगतो वा भावो विभावः, अनुगतो वा भावोऽनुभावः ।

[श्रिणीभुवोऽनुपसर्गे । पा० ३।३।२४, प्रवृद्धो भावः प्रभावः । भाष्यम् १।४।६०, प्रकृष्टो भाव इति प्रादिसमासो भविष्यति । काशिका । श्रियः । स्यनुप्रेषु च भुवः । स० क० २।४।४३, ३७]

नियः ॥१५॥

नयतेः प्रादिरहिताद् घञ् भवति । नायः । अप्रादिरित्येव । प्रणयः । कथं नयः ? न्यायो नये [१।३।२८] इति निपातनात् ।

अवोदः ॥१६॥

अव उदित्यवंपूर्वान् नियो घञ् भवति । अवनायः, उन्नायः । कथमुन्नयः ? बहुलाधिकारात् । उद्गतो वा नय उन्नयः ।

[अवोदोर्नियः । पा० ३।३।२६, उदि च नियः । अवे । स० क० २।४।३८-३९]

परेर्द्यूते ॥१७॥

परिपूर्वान् नयतेर्द्यूतविषये घञ् भवति । परिणायेन शारीन् हन्ति । द्यूत इति किम् ? परिणयः ।

[परिन्योर्नीणो द्यूताभ्रेषयोः । पा० ३।३।३७, परौ द्यूते । स० क० २।४।४०]

**प्रात् स्रु-द्रुस्तुवः ॥१८॥**

प्रपूर्वेभ्यः स्रवत्यादिभ्यो घञ् भवति। प्रस्रावः, प्रद्रावः, प्रस्तावः। प्रादिति किम् ? स्रवः, द्रवः। कथं स्रावः ? बहुलाधिकारात्।

[प्रे द्रुस्तुस्रुवः। पा० ३।३।२७, प्रे द्रुस्तुभ्याम्। स्रुवोऽनुपसर्गाच्च। स० क० २।४।४१-४२, अप्रादेर्वा नीरुस्रुवः। स० सा० ३।२७८]

**निरभेः पूल्वः ॥१९॥**

निरभिपूर्वाभ्यां पूलूभ्यां घञ् भवति। निष्पावः, अभिलावः।

[निरभ्योः पूल्वोः। पा० ३।३।२८, निरभ्योः पूलूभ्याम्। स० क० २।४।४५]

**न्युदो गृः ॥२०॥**

नेरुदश्च पराद् गिरतेर्घञ् भवति। निगारः, उद्गारः। न्युद इति किम् ? गरः।

[उन्न्योर्ग्रः। पा० ३।३।२९, स० क० २।४।४६, गृ निगरणे गृशब्दे द्वयोरपि ग्रहणमिति जयादित्यः। गिरतेरेवायं प्रत्यय इति कातन्त्रचन्द्रवृत्तिकारौ। गोयीचन्द्रः ३।२६४]

**कॄ धान्ये ॥२१॥** [पा० ३।३।३०, किरो०। स० क० २।४।४७]

किरतेर्धान्यविषये घञ् भवति। उत्कारो धान्यस्य। धान्य इति किम् ? पुष्पोत्करः।

**नीवाराः ॥२२॥**

नीवारा इति निपात्यते धान्येऽभिधेये।

[नौ वृ धान्ये। पा० ३।३।४८, नौ वृञः। स० क० २।४।४८]

**यज्ञे संस्तावः ॥२३॥**

संस्ताव इति निपात्यते यज्ञविषये। संस्तवोऽन्यः।

[यज्ञे समि स्तुवः। पा० ३।३।३१, स० क० ३।४।४९]

**प्रस्त्रोऽन्यत्र ॥२४॥**

यज्ञादन्यत्र प्रपूर्वात् स्तृणातेर्घञ् भवति । प्रस्तारः । यज्ञे तु बर्हिः*प्रस्तरः ।

[ प्रे स्त्रोऽयज्ञे । पा० ३।३।३२, प्रे स्त्रोऽन्यत्र । स० क० २।४।५० ]

**प्रथने वेरशब्दे ॥२५॥**

प्रथनेऽभिधये विपूर्वात् स्तृणातेर्घञ् भवति शब्दादन्यत्र । पटस्य विस्तारः । अशब्द इति किम् ? वाक्यविस्तरः ।

[ प्रथने वावशब्दे । पा० ३।३।३३, स० क० २।४।५१ ]

**छन्दोनाम्नि ॥२६॥**

छन्दोनामविषये स्तृणातेर्घञ् भवति । प्रस्तारपङ्क्तिः, विष्टारपङ्क्तिः, आस्तारपङ्क्तिश्छन्दः ।

[ छन्दोनाम्नि च । पा० ३।३।३४, स० क० २।४।५२ ।
आस्तारपङ्क्तिरादितः प्रस्तारपङ्क्तिरन्ततः ।
संस्तारपङ्क्तिर्मध्यतो विष्टारपङ्क्तिर्बाह्यतः ॥ ऋ० प्रा० १६।४० ]

**अवात् त्रश्च ॥२७॥**

अवपूर्वात् तरतेः स्तृणातेश्च घञ् भवति । अवतारः, अवस्तारः । बहुलाधिकारादवतरः ।

[ अवे तृस्त्रोर्घञ् । पा० ३।३।१२०, अवे च । त्रो वा । स० क० २।४।५३-५४ ]

**न्यायो नये ॥२८॥**

न्याय इति निपात्यते नयेऽर्थे । न्ययोऽन्यः ।

[ परिन्योर्नीणो द्यूताभ्रेषयोः । पा० ३।३।३७, इणो नायभ्रेषे । स० क० २।४।५५ ]

**पर्यायः क्रमे ॥२९॥**

पर्याय इति निपात्यते क्रमेऽर्थे । पर्ययोऽन्यः ।

[ परावनुपात्यय इणः । पा० ३।३।३८, परायनुपात्यये । स० २।४।५६ ]

* बर्हिःप्रस्तरः—L. from MSS.

व्युपाच्छीङः ॥३०॥

विपूर्वादुपपूर्वाच्च शीङः क्रमे घञ् भवति। तव राजविशायः, मम राजोपशायः। क्रम इत्येव। विशयः*। उपशयः।

[ व्युपयोः शेतेः पर्याये। पा० ३।३।३९, व्युपयोः शीङः। स० क० २।४।५७ ]

हस्तप्राप्ये चेरस्तेये ॥३१॥

हस्तप्राप्यविषयाच्चिनोतेरस्तेये घञ् भवति। पुष्पप्रचायः। हस्तप्राप्य इति किम्? वृक्षाग्रे पुष्पप्रचयः। अस्तेय इति किम्? पुष्पप्रचयं हस्तेन करोति चौरः।

[ हस्तादाने चेरस्तेये। पा० ३।३।४०, हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते। काशिका। प्रत्यासत्तौ चेरस्तेये। स० क० २।४।५८ ]

चितिराशिवासदेहेषु चः कः ॥३२॥

चित्यादिष्वर्थेषु चिनोतेर्घञ् भवति, चकारस्य च ककारः। आकायमग्निं चिन्वीत। गोमयनिकायः। ब्राह्मणनिकायः। कायः शरीरम्।

[ निवासचितिशरीरोपसमाधानेष्वादेश्च कः। पा० ३।३।४१, शरीरनिवासयोः कश्चादेः। चितौ च। राशौ वा। स० क० २।४।५९-६१ ]

सङ्घेऽनुत्तराधरे ॥३३॥

प्राणिसमूहे †चोत्तराधरवर्जिते चिनोतेर्घञ् भवति, चकारस्य च ककारः। वैयाकरणनिकायः। अनुत्तराधर इति किम्? सूकरनिचयः।

[ सङ्घे चानौत्तराधर्ये। पा० ३।३।४२, स० क० २।४।६२ ]

उदः श्रियुपूद्रुवः ॥३४॥

उत्पूर्वेभ्यः श्रयत्यादिभ्यो घञ् भवति। उच्छ्रायः, उद्यावः,

* विशयः not found in Liebich.

† This च shows the influence of P's rule on the Vṛttikāra.

उत्पावः ? उद्द्रावः। उद इति किम् ? प्रश्रयः। कथं समुच्छ्रयः ? बहुलाधिकारात्।

[ उदि श्रयतियौतिपूद्रुवः। पा० ३।३।४९, उदि वा। उदियुपूद्रुवः। स० क० २।४।४४, ६३ ]

**आक्रोशे न्यवाद् ग्रहः ॥३५॥**

आक्रोश गम्यमाने निपूर्वादवपूर्वाच्च ग्रहो घञ् भवति। निग्राहस्ते वृषल भूयात्। अवग्राहस्ते वृषल भूयात्। आक्रोश इति किम् ? निग्रहः, अवग्रहः।

[ आक्रोशेऽवन्योर्ग्रहः। पा० ३।३।४५, न्यवयोराक्रोशे। स० क० २।४।६५ ]

**समो मुष्टौ ॥३६॥**

सम्पूर्वाद् ग्रहो मुष्टावर्थे घञ् भवति। संग्राहो मल्लस्य। मुष्टाविति किम् ? संग्रहः।

[ समि मुष्टौ। पा० ३।३।३६, स० क० २।४।६६ ]

**परेर्यज्ञे ॥३७॥**

परिपूर्वाद् ग्रहो यज्ञविषये घञ् भवति। उत्तरपरिग्राहः। यज्ञ इति किम् ? परिग्रहः।

[ परौ यज्ञे। पा० ३।३।४७, स० क० २।४।६७ ]

**प्राल्लिप्सायाम् ॥३८॥**

प्रपूर्वाद् ग्रहो लिप्सायां गम्यमानायां घञ् भवति। पात्रप्रग्राहेण चरति भिक्षु पिण्डपातार्थी। लिप्सायामिति किम् ? प्रग्रहः।

[ प्रे लिप्सायाम्। पा० ३।३।४६, स० क० २।४।६८ ]

**वा वणिजाम् ॥३९॥** [ स० क० २।४।६९ ]

वणिग्गम्यनिपन्यविषये प्रपूर्वाद् ग्रहो घञ् वा भवति। तुलाप्रग्राहेण चरति वणिक्, तुलाप्रग्रहेण चरति वणिक्।

[ प्रे वणिजाम्। पा० ३।३।५२ ]

**रश्मौ** ॥४०॥

प्रपूर्वाद् ग्रहो रश्मावभिधेये घञ् वा भवति । प्रग्राहः, प्रग्रहः ।

[ रश्मौ च । पा० ३।३।५३, स० क० २।४।७० ]

**अवाद् वर्षविबन्धे** ॥४१॥

अवात् पराद् ग्रहो वर्षप्रतिबन्धे वा घञ् भवति । अवग्राहो वृष्टेः, अवग्रहो वा ।

[ अवे ग्रहो वर्षप्रतिबन्धे । पा० ३।३।५१, अवे वर्षप्रतिबन्धे । स० क० २।४।७१ ]

**आङो रुप्लोः** ॥४२॥

आङ्पूर्वाद् रौतेः प्लवतेश्च वा घञ् भवति । आरावः, आप्लावः । आरवः, आप्लवः ।

[विभाषाङि रुप्लुवोः । पा० ३।३।५०, आङि रुप्लुभ्याम् । स० २।४।७२ ]

**वृञ आच्छादे** ॥४३॥

वृणोतेराच्छादेऽर्थे वा घञ् भवति । प्रावारः, प्रावरः ।

[ वृणोतेराच्छादने । पा० ३।३।५४, स० क० २।४।७४ ]

**परेर्भुवोऽवज्ञाने** ॥४४॥

परिपूर्वाद् भवतेरवज्ञानेऽर्थे वर्तमानाद्वा घञ् भवति । परिभावः, परिभवः । अवज्ञान इति किम् । सर्वतो भवनं परिभवः ।

[ परौ भुवोऽवज्ञाने । पा० ३।३।५५, स० क० २।४।७३ ]

**एरच्** ॥४५॥ [ पा० ३।३।५६, स० क० २।४।७७ ]

इवर्णान्तात् क्रियार्थादज् भवति । चयः, जयः । भयम् । चकार-*स्थाथघञ्क्ताजवित्रम्यान्त इति चिह्लार्थः ।

[अजविधौ भयस्योपसंख्यानम् । ३।३।५६।१]

---

* This is a rule from Chap. VIII of Candra's grammar and corresponds to P's थाथघञ्क्ताजबित्रकाणाम् vi. 2. 144

**स्थास्नापाव्यधिहनियुधः कः ॥४६॥**

स्थादिभ्यो भावे कारके च को भवति। आखूत्थो वर्तते। प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः। प्रस्नान्त्यस्मिन्निति प्रस्नः। प्रपिबन्त्यस्यामिति प्रपा। आविध्यतेऽननत्याविधः। विहन्यतेऽस्मिन्निति विघ्नः*। निघ्नः, उपघ्नः, स्तम्बघ्नः। †आयुध्यन्तेऽननत्यायुधम्।

[ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्। ३।३।५८।४, स्थास्नापाव्यधिहनियुधादिभ्यः कः। स० क० २।४।७६ ]

**ऋदोरप् ॥४७॥** [ पा० ३।३।५७, स० क० २।४।७९ ]

ऋकारान्तेभ्य उवर्णान्तेभ्यश्चाप् भवति। करः, धरः। भवः, पवः। दकारोऽसन्देहार्थः।

[यदि तादपि परस्तपर ऋदोरप् [३।३।५७] इतीहैव स्यात् यवः स्तवः, लवः पव इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि? दकारः। किं दकारे प्रयोजनम्? अथ किं सकारे? यद्यसन्देहार्थस्तकारो दकारोऽपि; अथ मुखसुखार्थस्तकारो दकारोऽपि। महाभाष्यम् १।१।१]

**ग्रहवृदृनिश्चिगमवशरणः ॥४८॥**

ग्रहादिभ्योऽब् भवति। ग्रहः; कपिरिकादीनाम् [ ६।३।४६ ] इति रेफस्य लत्वम्; ग्लहः। वरः, दरः, निश्चयः, गमः, वशः, रणः।

[ ग्रहवृदृनिश्चिगमश्च। पा० ३।३।५८, वशिरण्योश्चोपसंख्यानम्। ३।३।५८। ३, युदुवशिनिश्चिरणिगमिग्रहः। स० क० २।४।८० ]

---

*विघ्नन्ति तस्मिन्ननांसि विघ्नः। महाभाष्यम्। विहन्यन्तेऽस्मिन्निति विघ्नः। काशिका। विहन्यतेऽनेनेति विघ्नः। दुर्गवृत्तिः। विहन्यतेऽस्मिन्निति विघ्नः। हृदयहारिणी। In view of the fact that Adhikaraṇa is finished and we are now dealing with Kara·a, I am inclined to think विहन्यतेऽनेनेति विघ्नः is the correct reading here.

†आयुध्यन्ते तेनायुधम्। महाभाष्यम्। आयुध्यतेऽनेनेत्यायुधम्। काशिका, दुर्गवृत्तिः, हृदयहारिणी। The correct reading in the Vṛtti would appear to be आयुध्यते and not आयुध्यन्ते

**प्रादिभ्योऽदः ॥४९॥**

प्रादिपूर्वाददोऽव् भवति। प्रघसः। प्रादिभ्य इति किम्? घासः।

[उपसर्गेऽदः। पा० ३।३।५९, अदेरुपसर्गे। स० क० २।४।८२]

**नेर्ण च ॥५०॥**

निपूर्वाददो णो भवति, अप् च। न्यादः, निघसः।

[नौ ण च। पा० ३।३।६०, स० क० २।४।८३]

**व्यधजपोऽप्रादेः ॥५१॥**

व्यधो जपश्च प्रादिरहितादव् भवति। व्यधः, जपः। अप्रादेरिति किम्? आव्याधः, उपजापः।

[व्यधजपोरनुपसर्गे। पा० ३।३।६१, व्यधिजपिभ्यामनुपसर्गे। स० क० २।४।८४]

**स्वनहसो वा ॥५२॥**

स्वनो हसश्चाव् भवति वा। स्वनः, स्वानः। हसः, हासः। अप्रादेरित्येव। प्रस्वान, प्रहासः।

[स्वनहसोर्वा। पा० ३।३।६२, स्वनिहसिभ्यां वा। स० क० २।४।८३म]

**यमः सं्व्युपाच्च ॥५३॥**

यमः समादिपूर्वादप्रादेश्चाव् भवति वा। संयमः, संयामः। वियमः, वियामः। उपयमः, उपयामः। यमः, यामः।

[यमः समुपनिविषु च। पा० ३।३।६३, स० क० २।४।८५]

**नेः ॥५४॥**

निपूर्वाद् यमोऽव् भवति वा। नियमः, नियामः। योगविभाग उत्तरार्थः।

[यमः समुपनिविषु च। पा० ३।३।६३, स० क० २।४।८५]

**गदनदपठस्वनः ॥५५॥**

गदादिभ्यो निपूर्वेभ्योऽब् वा भवति। निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः। निस्वनः, निस्वानः।

[ नौ गदनदपठस्वनः पा० ३।३।६४, नौ गदनदपठस्वनिभ्यः। स० क० २।४।८६ ]

**क्वणो वीणायाश्च ॥५६॥**

क्वणतेर्निपूर्वादप्रादेर्वीणासम्बन्धिनश्चाब् वा भवति। निक्वणः, निक्वाणः। प्रक्वणो वीणायाः, प्रक्वाणः। क्वणः, क्वाणः।

[ क्वणो वीणायां च। पा० ३।३।६५, क्वणोऽनुपसर्गाच्च। उपसर्गे च वीणायाः। स० क० २।४।८७-८८ ]

**पणः परिमाणे ॥५७॥**

पणतेः परिमाणेऽब् भवति। पणः। परिमाण इति किम्? पाणः।

[ नित्यं पणः परिमाणे। पा० ३।३।६६, स० क० २।४।८९ ]

**मदोऽप्रादेः ॥५८॥**

मदोऽप्रादेरब् भवति। मदः। अप्रादेरिति किम्? प्रमादः।

[ मदोऽनुपसर्गे। पा० ३।३।६७, स० क० २।४।९०—०पसर्गात् ]

**प्रसंभ्यां हर्षे ॥५९॥**

प्रपूर्वात् संपूर्वाच्च मदो हर्षेऽब् भवति। प्रमदः कन्यानाम्। सम्मदः कोकिलानाम्।

[ प्रमदसम्मदौ हर्षे। पा० ३।३।६८, प्रसमोर्हर्षे। स० क० २।४।९१ ]

**समुदोरजः पशुषु ॥६०॥**

संपूर्वादुत्पूर्वाच्चाजः पशुविषयेऽब् भवति। समजः पशूनाम्। समूह इत्यर्थः। उदजः पशूनाम्। प्रेरणमित्यर्थः। पशुष्विति किम्? समाजो ब्राह्मणानाम्। उदाजः शकुनीनाम्।

[ समुदोरजः पशुषु। पा० ३।३।६९, स० क० २।४।९२ ]

**प्रजने सर्तेः** ॥६१॥ [ पा० ३।३।७१, स० क० २।४।९३ ]

प्रथमगर्भग्रहणे सतरप् भवति। गवामुपसरः। उपसारोऽन्यः।

**ह्वः** ॥६२॥

ह्वयतेरपि ह्व इति निपात्यते। ह्वः, निह्वः, अभिह्वः, उपह्वः, विह्वः, आह्वः।

[ ह्वः सम्प्रसारणं च न्यभ्युपविषु। आङि युद्धे। पा० ३।३।७२-७३, न्यभ्युपविषु ह्वः सम्प्रसारणं च। आङि युद्धे। स० क० २।४।९४-९५ ]

**निपानमाहावः** ॥६३॥ [ पा० ३।३।७४ ]

आहाव इति निपात्यते निपानं चेत्। आह्वायोऽन्यः।

[ निपाने वृद्धिश्च। स० क० २।४।९६]

**वधो घातः** ॥६४॥

वध इति निपात्यते हनो भावे, घात इति च।

[ हनश्च वधः। पा० ३।३।७६, हनो वा वध च। स० क० २।४।९९ म ]

**मूर्तौ घनः** ॥६५॥ [ पा० ३।३।७७ ]

घन इति निपात्यते मूर्तिश्चेत्। घातोऽन्यः। अन्तर्घणो नाम वाहीकेषु* देशविशेषस्तत्र पूर्वपदाद् [ ६।४।१०२ ] इति णत्वमस्त्येव। तथा प्रघण इति गृहैकदेशस्य संज्ञायामस्त्येव।

[ अन्तर्घनो देशे। पा० ३।३।७८, अन्ये णकारं पठन्ति—अन्तर्घणो देश इति। तदपि प्राह्यमेव। काशिका। मूर्तिनिकरमेघेषु घनः। अन्तर्घनोऽन्तर्घणश्च देशे। स० क० २।४।९९-१०० ]

**गृहांशे प्रघाणः** ॥६६॥

अगारैकदेशे प्रघाण इति निपात्यते। यस्योपरि काष्ठानि हन्यन्ते उद्गतो घन इत्युद्घनः। अपघन इति पाणिपादस्याभिधानम्, अपपूर्वेण

* Kāśikā has वाहीकेषु but Durga, Dandanātha, Goyī and others have वाह्लीकेषु.

घनेन सिद्धम्। एवमयोघनः, विघनः। द्रुघण इति संज्ञायां णत्वम्। स्तम्बघन इति स्तम्बपूर्वेण घनेन सिद्धम्।

[ अगारैकदेशे प्रघणः प्रघाणश्च। उद्घनोऽत्याधानम्। अपघनोऽङ्गम्। करणेऽयोविद्रुषु। स्तम्बे क च। पा० ३।३।७९-८३, प्रघणःप्रघाणश्चागारैकदेशे। अपघनोद्घनावङ्गात्याधानयोः। विघनायोघनौ करणे। द्रुघनद्रुघणौ। स्तम्बे क च। स० क० २।४।१०१-५ ]

**परिघोद्घनिघाः ॥६७॥**

परिघः, उद्घः, निघ इति हनो निपात्यन्ते। सङ्घेऽनुत्तराधरे [ १।३।२३ ] इति सङ्घः।

[परौ घः। सङ्घोद्घौ गणप्रशंसयोः। निघो निमितम्। पा० ३।३।८४, ८६-८७। परौ डित्। समुदोर्गणप्रशंसयोः। नौ निमिते। स० क० २।४। १०७-१०९ ]

**ड्वितः क्त्रिः ॥६८॥** [ पा० ३।३।८८, स० क० २।४।११० ]

ड्वितः त्रियार्थात् क्त्रिः परो भवति। कृत्रिमम्, पवित्रमम्।

**ट्वितोऽथुच् ॥६९॥** [ पा० ३।३।८९, स० क० २।४।१११ ]

ट्वितोऽथुज् भवति। वेपथुः, क्षवथुः, श्वयथुः।

**विछरक्षो नङ् ॥७०॥**

आभ्यां नङ् भवति। विश्नः, रक्ष्णः। कथं याच्ञादयः ? टु याचृ याच्ञायाम् [ धातुपा० १।५९१ ], शीङ् स्वप्ने [ धातुपा० २।५१ ], प्रश्नाख्यानयोरिञ् च [ १।३।९२ ], यज्ञे संस्तावः [ १।३।२३ ], ०यत्नकर्मोपयोगपु० [ १।४।७८ ] इति निपातनात्।

[ यजयाचयतविच्छप्रच्छरक्षो नङ्। स्वपो नन्। पा० ३।३।९०-९१, यजियाचियतिविच्छिप्रच्छिरक्षिभ्यो नः। विच्छेर्नङ्। स्वपो नन्। स० क० २।४।११२-११४ ]

**प्रादिभ्यो दाधः किः ॥७१॥**

प्रादिपूर्वाभ्यां दाधाभ्यां किर्भवति। आदिः, निधिः। कथमन्तर्धिः ? शिरोऽन्तधौ [ २।२।२३ ] इति निपातनात्।

[ उपसर्गे घोः किः । पा० ३।३।९२, आङि दः किः । उपसर्गे धः । स० क० २।४।११५-११६ ]

व्याप्यादाधारे ॥७२॥

व्याप्यपूर्वाभ्यां दाधाभ्यामाधारे किर्भवति । वालधिः, इषुधिः ।

[ कर्मण्यधिकरणे च । पा० ३।३।९३, कर्मण्यधिकरणे । स० क० २।४।११७]

अभिविधाविनुण् ॥७३॥ [ स० क० २।४।११८ ]

अभिव्याप्तौ भाव इनुण् भवति । सांकटिनं वर्तते । सांराविणम् ।

[अभिविधौ भाव इनुण् । पा० ३।३।४४]

स्त्रियां क्तिन् ॥७४॥ [ पा० ३।३।९४, स० क० २।४।११९ ]

स्त्रीलिङ्गे भावे कारके च क्तिन् भवति । कृतिः, इष्टिः ।

ऊतियूतिजूतिसातिहेतिकीर्तयः ॥७५॥ [ ०च । पा० ३।३।९७ ]

एते शब्दा अन्तोदात्ताः* साधवो भवन्ति । अवतेरूतिः । यौतेर्यूतिः । जवतेर्जूतिः । सिनोतेः सुनोतेर्वा सातिः । हिनोतेर्हेतिः । कीर्तयतेः कीर्तिः ।

[ ऊतियूतिजूतिसातिहेतिज्ञप्तिकीर्तयश्च । स० क० २।४।१२३ ]

व्यतिहारे णच् ॥७६॥

क्रियाव्यतिहारे स्त्रियां णज् भवति । व्यवहासी, व्यवचर्ची ।

[ कर्मव्यतिहारे णच् स्त्रियाम् । पा० ३।३।४३, क्रियाव्यतिहारेऽनोहोरुगादिभ्यो णच् । स० क० २।४।१५४ ]

नाम्नि क्तिच् ॥७७॥

संज्ञायां क्तिज् भवति । तन्तिः, रन्तिः, वन्तिः, भूतिः ।

[ क्तिच्क्तौ च संज्ञायाम् । पा० ३।३।१७४, क्तिच्क्तः संज्ञायाम् । स० २।४।२८४ । Candra does not mention आशिष्.]

---

* In P. there is the anuvṛtti of उदात्तः from the preceding rule.

**समजमनविदसुशीभृञिणो भावे क्यप् ॥७८॥**

समजादिभ्यः संज्ञायां भावे क्यब् भवति । समज्या, मन्या, विद्या, सुत्या, शय्या, भृत्या, इत्या । आसुतिः, भृतिः, समितिरित्यपि भवति, बहुलाधिकारात् । भाव इति किम् ? भार्या । नाम्नीत्येव । संवित्तिः ।

[ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । पा० ३।३।९९, षुङ्शीङ्मनिविदिचरिभ्यः संज्ञायाम् । अजेः समि । भृञो वा । स० क० २।४।१२६-१२७, ९]

**नेः सत्पतः ॥७९॥**

निपूर्वाभ्यां सदिपतिभ्यां क्यब् भवति । निपद्या, निपत्या ।

[ सदिपतिभ्यां नौ । स० क० २।४।१२८ ]

**कृव्रजयजः ॥८०॥**

कृञादिभ्यः क्यब् भवति । कृत्या, व्रज्या, इज्या ।

[ व्रजयजोर्भावे क्यप् । कृञः श च । इच्छा । पा० ३।३।९८, १००-१, वजियज्यास्यवीणभ्यः क्यप् । कृञः श च । स० क० २।४।१२५, १३० ]

**मृगयाटाट्ये ॥८१॥**

एतौ शब्दौ भावे निपात्येते । मृगयतेर्मृगया, अटाट्यतेरटाट्या । कथमिच्छा, क्रियेति ? ० इच्छायाम् [१।१।२२] ०क्रियायाम्० [१।३।६] इति निपातनात् ।

[ इच्छापरिचर्यापरिसर्यामृगयाटाट्यानां निपातनं कर्तव्यम् । जागर्तेरकारो वा । पा० ३।३।१०१ भाष्यम् । इच्छामृगये च । अटाट्याद्वा । स० क० २।४। १३१, १३३ ]

**परेः सृचरो यः ॥८२॥**

[परौ सृचरिभ्यां यः । स० क० २।४।१३२]

परिपूर्वाभ्यां सृचरिभ्यां स्त्रियां यो भवति । परिसर्या, परिचर्या ।

**जागृ ॥८३॥** [ स० क० २।४।१३४ ]

जागर्तेर्यो भवति । जागर्या ।

**अः सनाद्यन्ताच** ॥८४॥

जागर्तेः सनाद्यन्ताच्च परोऽकारो* भवति। जागरा। चिकीर्षा, जिहीर्षा, पुत्रीया। अटाटयतेरटाटा। कण्डूतिरिति वहुलाधिकारात्।

[अ प्रत्ययात्। पा० ३।३।१०२, अ प्रत्ययाच्च। स० २।४।१३५। Amara does not take cognisance of कण्डूति. "कण्डूः खर्जूश्च कण्डूया।" Jumara says: कण्डूतिरित्येके। Sam. iii. 358, स० २।४।२८४]

**गुरोर्हलः** ॥८५॥ [स० क० २।४।१३६]

गुरुमतो हलन्तादः परो भवति। ईहा, ईक्षा। कथमाप्तिः, राद्धिरिति? वहुलाधिकारात्।

[गुरोश्च हलः। पा० ३।३।१०३, स्त्रियां क्तिनावादिभ्यश्च। ३।३।९४।१, न राध्यञ्ज्याविदीपिचायिस्रंसिध्वंस्यादेर्निष्ठायामनिटः। स० क० २।४।१३७]

**भिदादिपितोऽङ्** ॥८६॥

भिदादिभ्यः पितश्च स्त्रियामङ् भवति। भिदा। छिदा। विदा। क्षिपा। गुहा। मेधा। सेधा। गोधा। तारा। हारा। कारा। आरा। धारा। रेखा। लेखा। ऊहा। चूडा। पीडा। वपा। वसा। रुजा। मृजा। भित्तिरित्यादिषु क्तिनपि भवति वहुलाधिकारात्। पितः खल्वपि। जॄष्, जरा। डुपचष्, पचा। क्षिप् हिंसायाम्। [धातुपा० ९।२७], क्षिया। घटादयः पितः [धातुपा० १।५२२]। घटा। क्रप कृपायामिति वचनात् [धातुपा० १।५१९] कृपा। पक्तिरिति वहुलाधिकारात्।

[षिद्भिदादिभ्योऽङ्। पा० ३।३।१०४, भिदा विदारणे। छिदा द्वैधीकरणे। आरा शस्त्र्याम्। धारा प्रपाते। गुहा गिर्योषध्योः। ३।३।१०४।१-५, षितोऽङ्। क्रपेः सम्प्रसारणं च। याचितृषिभ्यां नुट् च। भिदिच्छिदिविदिदरिपचिजिमृजि-क्षिपिचुरिपृच्छिभ्योऽसंज्ञायाम्। गुहितुलिवसिवपिदसिक्षिभ्यः संज्ञायाम्। रिसि-

* परो अकारो—Liebich.

लिखिशुभिसिविमिधिगुधिभ्यो गुणश्च । ऋकृहृधृतृभ्यो वृद्धिश्च । स० क० २।४।१३८-१४४]

आतोऽन्तःप्रादिभ्यः ॥८७॥

आकारान्तादन्तःप्रादिपूर्वात् स्त्रियामङ् भवति । अन्तर्धा । सन्धा, संस्था, उपदा, उपधा । कथं श्रद्धा? प्रज्ञाश्रद्धा० [४।२।१०५] इति निपातनात् । अन्तःप्रादिभ्य इति किम्? स्थितिः । कथमवस्थितिः, संस्थितिः, संगीतिः, प्रपीतिरिति? बहुलाधिकारात् ।

[आतश्चोपसर्गे । पा० ३।३।१०६, स० क० २।४।१४६, अदन्तरोरुपसर्गवद्वृत्तिः । काशिका । अच्छ श्रदन्तरित्येतानाचार्यः शाकटायनः । उपसर्गान् क्रियायोगान्मेने ते तु त्रयोऽधिकाः ॥ बृहद्देवता २।९५ । श्रच्छब्दस्योपसंख्यानम् । १।४।५८।५]

कुम्बिचर्चिभ्याम् ॥८८।

एताभ्यां चुरादिण्यन्ताभ्यामङ् भवति । कुम्बा, चर्चा । पूजायां स्वतेः [४।४।५४] इति निपातनात् पूजा, ०कथोपयोगेषु ०[१।४।७८] इति कथा, स्मृ चिन्तायाम् [धातुपा० १।२६५] इति चिन्ता ।

[चिन्तिपूजिकथिकुम्बिचर्चश्च । पा० ३।३।१०५, भूषिभीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्च । स० क० २।४।१४५]

णिश्रन्थग्रन्थविदासघट्टवन्दो युच् ॥८९॥

ण्यन्ताच्छ्रन्थादिभ्यश्च युज् भवति । कारणा, हारणा । श्रन्थना, ग्रन्थना, वेदना, उपासना, घट्टना, वन्दना ।

[ण्यासश्रन्थो युच् । पा० ३।३।१०७, युच्-प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम् । ३।३।१०७।१, ण्यासश्रन्थघट्टवन्दविदिभ्यो युच् । स० २।४।१४८]

इषोऽनिच्छायाम् ॥९०॥

इषेरनिच्छायां युज् भवति । अन्वेषणा, पर्येषणा । अनिच्छायामिति किम्? इष्टिः । परीष्टिरिति बहुलाधिकारात् ।

[इषेरनिच्छार्थस्य । परेर्वा । पा० ३।३।१०७।२-३, इषरनिच्छायाम् । अधि-पर्योर्वा । स० क० २।४।१४९-१५०]

ण्वुच् ॥९१॥

स्त्रीलिङ्गे भावे कारके च क्रियार्थाद्बहुलं ण्वुज् भवति। आसिका। शायिका। प्रवाहिका। उद्दालपुष्पभञ्जिका। भवतः शायिका। अर्हति भवान् इक्षुभक्षिकाम्। इक्षुभक्षिकां मे धारयसि। इक्षुभक्षिका म उदपादि।

[पर्यायार्हर्णोत्पत्तिषु ण्वुच्। पा० ३।३।१११, स० क० २।४।१६२]

प्रश्नाख्यानयोरिञ् च ॥९२॥

प्रश्ने आख्याने च इञ् भवति, यथाप्राप्तं च। कां त्वं कारिमकार्षीः? कां कारिकाम्? कां कृतिम्? कां क्रियाम्? कां कृत्याम्? सर्वां कारिमहमकार्षम्। सर्वां कारिकाम्। सर्वां कृतिम्। सर्वां क्रियाम्। सर्वां कृत्याम्। कथं वापिर्वासिरिति? औणादिक इञ् [१।५६]। कथमाजिरातिः? औणादिक इण् [१।५७]। पादस्याज्यातिगोपहते पदः [५।२।५८] इति लिङ्गाद्वा।

[विभाषाख्यानपरिप्रश्नयोरिञ् च। पा० ३।३।११०, प्रश्नाख्यानयोरिञ्च वा। स० क० २।४।१६१]

सम्पदादिभ्यः क्विप् ॥९३॥ [पा० ३।३।१०८।९]

भावे कारके च सम्पदित्येवमादिभ्यः क्विब् भवति। सम्पत्। विपत्। प्रतिपत्। परिपत्। वहुलाधिकारात् सम्पत्तिरित्यादौ क्तिनपि भवति।

[समादिषु पदिसदिविदिशासिध्रुस्त्रुनहिसृपिस्रुषिवृतियतीणभुप्रभृतिभ्यः क्विप्। क्षुधियुधिक्षुधितुदिविस्त्विषिरुजिरुचिशुचिमुदिमृदिगुत्रादिभ्यश्च। ह्रीभीलूभूकण्डूयिकुञ्भिदिच्छिदिनुदिदृशियुजिज्वरत्वरावस्रिवुमवनुशदादिभ्यो वा। स० क० २।४।१५१-१५३]

आक्रोशे नञोऽनिः ॥९४॥

आक्रोशे गम्यमाने नञ्पूर्वात् क्रियार्थादनिर्भवति। अकरणिस्ते भूयात्। आक्रोश इति किम्? अकृतिस्तव पटस्य। नञ इति किम्? मृतिस्ते वृपल भूयात्।

[आक्रोशे नञ्यनिः। पा० ३।३।११२, स० क० २।४।१५५]

**ग्लाहाज्यः ॥९५॥**

ग्ला हा ज्या इत्येतेभ्योऽनिर्भवति। ग्लानिः, हानिः, ज्यानिः। कथं कृपिः किरिर्गिरिरिति*? औणादिका एते।

[ग्लाज्याहाभ्यो निः। ३।३।९५।४, इक्कृष्यादिभ्यः। ३।३।१०८।८, ग्लाम्लाज्याहाभ्यः। स० क० २।४।१५६]

**इकिश्तिपः स्वरूपे ॥९६॥** [स० क० २।४।१८१]

क्रियार्थस्य स्वरूपेऽभिधेये क्रियार्थात् पर इ-कि-श्तिपो भवन्ति। इन्धिः, युधिः, पचतिः। कथमकारः ककार इत्यादि? कारशब्देन समासः, यथा एवङ्कारः, ओङ्कारः, चीत्कारः†, शीत्कारः, हूङ्कारः, वषट्कारः, स्वाहाकार इत्यादि। औणादिको रेफः [२।८८]। कथं मत्वर्थीयो मतुवर्थीय इति? गहादेराकृतिगणत्वाच्छः।

[इक्श्तिपौ धातुनिर्देशे। वर्णात् कारः। रादिफः। मत्वर्थाच्छः। ३।३।१०८।२-५, इकिश्तिपः स्वरूपे। अर्थे च। स० क० २।४।१८१-२]

The Pañji commenting on Durga's Vṛtti इकिश्तिपौ धातुस्वरूपेऽर्थे शापकादेव सिद्धाः (Kṛdvṛtti 408) says: अन्ये तु इक्श्तिपाविति मन्यमाना द्वौ प्रत्ययावित्याहुः, तदसत्, इन्धिश्रन्थिग्रन्थीत्यादिनिर्देशानुपपत्तिप्रसङ्गात्, इह ह्येक्प्रत्ययेऽनुषङ्गलोपः स्यादिति। तस्मादिप्रत्ययोऽपि विधेयः। तथाच चान्द्रसूत्रम्—इ-कि-श्तिपः स्वरूपे इति।

---

* The Uṇādi section makes provision for कृपि alone by the rule इगुपान्तात् किः 1. 52. The Vṛttikāra was probably thinking of the Uṇādi of Pāṇini.

† चीत्कारः—L.

ल्युट् ॥९७॥

क्रियार्थात् परो वहुलं ल्युड् भवति। गमनम्, भोजनम्, पानम्, दानम्। इध्मव्रश्चनः, पलाशशातनः। प्रस्कन्दनः। प्रपतनः। गोदोहनी, सक्तुधानी। करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम्।

[ल्युट् च। कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्। करणाधिकरणयोश्च। पा० ३।३।११५-१७, स० क० २।४।१६४-१६६]

ष्ठिवुसिवो दीर्घश्च ॥९८॥ [०वा। स० क० २।४।१६७]

ष्ठीव्यतेः* सीव्यतेश्च ल्युड् भवति दीर्घश्च वहुलम्। निष्ठीवनम्, निष्ठेवनम्। सीवनम्, सेवनम्।

[पृषोदरादित्वाद्दीर्घमाहुः पाणिनीयाः। ष्ठिवुसिवोर्दीर्घश्चेति चन्द्रसूत्रम्। गोयीचन्द्रः कृदन्त ३७४. Candra would appear to be the first grammarian to make provision for ष्ठीवनम् and सीवनम्]

कृञः कर्तरि ॥९९॥ [स० क० २।४।१६८]

करोतेः कर्तरि ल्युड् भवति दीर्घश्च। करोतीति कारणम्। कर्तरीति किम्? करणम्।

[चकारात् करोतीति कारणम्। कातन्त्रीया कृद्वृत्तिः ४०९]

घः ॥१००॥

---

* साहचर्य is not a नियामक in all cases and there is no reason why the divādi root should be regarded as the base of ष्ठीवन in preference to the bhvādi which is much more frequently used. The Vṛttikāra manifestly goes against the Sūtrakāra. S'araṇadeva alone quotes the rule twice (vii. 3. 86, viii. 2. 77) as ष्ठिविसिव्योर्दीर्घश्च. The original form of the rule would therefore appear to be ष्ठिविसिवेर्दीर्घश्च, as Candra generally uses the singular in preference to the dual and plural.

क्रियार्थाद्बहुलं घो भवति। वकः। कषः, निकषः*। गोचरः, सञ्चरः वहः। आपणः।

[पुंसि संज्ञायां घः प्रायेण। पा० ३।३।११८, पुंसि संज्ञायां घः। स० क० २।४।१७३। वक्तीति वकः। हृदयहारिणी।]

व्रजव्यजौ ॥१०१॥

एतौ शब्दौ निपात्येते। व्रजः, व्यजः। कथं निगम इति? अपा सिद्धम्; स्वरं तु वक्ष्यामः। हलन्ताद् घञ् उक्त एव [१।३।७]। लेखः, वेदः, †वीमार्गः, अध्यायः, न्यायः, उद्यावः, संहारः, आधारः, आवाय इति बहुलाधिकारात्। तथा तैलोदङ्को घृतोदङ्क इति घञेव। इह तु न भवति—उदकोदञ्चन इति। आनाय इति जालेऽभिधेये। आनयोऽन्यः।

[गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च। पा० ३।३।११९, गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमबकभगाकर्षनिकषाश्च। स० क० २।४।१७४, हलश्च (हलो घञ्—स०)। अध्यायन्यायोद्यावसंहाराधारावायाश्च (०संहारावहाराधारा०—स०। उदङ्कोऽनुदके। जालमानायः। पा० ३।३।१२२-१२४, स० क० २।४।१७५-१७८]

खनो डरेकौ च ॥१०२॥

खनतेर्घो भवति, डर इकश्च। आखनः, आखरः, आखनिकः। आखनिकवक इति वकशब्देन समासः। आख इति डेन सिद्धम्। आखान इति घञा सिद्धम्।

[खनो घ च। पा० ३।३।१२५, डो वक्तव्यः। आखः। डरो वक्तव्यः। आखरः। इको वक्तव्यः। आखनिकः। इकवको वक्तव्यः। आखनिकवकः। भाष्यम्। खनो घ च। डडरेकेकवकाश्च। स० क० २।४।१७९-१८०]

---

* पकः। निपकः। L. from MSS.

† Read सप्तमार्गः with Kāśikā, Durga, Hṛdaya etc..

**ईषद्दुःसुभ्यः खल् ॥१०३॥**

ईषदादिभ्यः परात् क्रियार्थात् खल् भवति। ईषत्करः कटो भवता। दुष्करः। सुकरः। ईषल्लभ्य इति बहुलाधिकारात्।

[ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। पा० ३।३।१२६, भावकर्मणोर्दुरीषत्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्। स० क० २।४।१८३]

**कर्त्राप्याभ्यां च भूकृञः ॥१०४॥**

ईषद्दुःसुभ्यः पराभ्यां कर्त्राप्याभ्यां परौ यौ भूकृञौ ताभ्यां खल् भवति। ईषदाढ्येन भवनम्, ईषदाढ्यम्भवम्। दुराढ्येन भवनम्, दुराढ्यम्भवम्। स्वाढ्येन भवनम्, स्वाढ्यम्भवम्। ईषदाढ्यः क्रियते, ईषदाढ्यङ्करः। दुराढ्यङ्करः। स्वाढ्यङ्करः। यदा त्वीषदाढ्य एव किञ्चित् क्रियते तदा कस्मान्न भवति? करोतेरभूतप्रादुर्भावार्थत्वात्।

[कर्तृकर्मणोश्च भूकृञोः। पा० ३।३।१२७, भूकृञ्भ्यां कर्तृकर्मणोश्च च्व्यर्थे। स० क० २।४।१८४]

**आतो युच् ॥१०५॥** [पा० ३।३।१२८, स० क० २।४।१८५]

आकारान्तात् क्रियार्थादीषदादिभ्यः पराद् युज् भवति। ईषत्पानः, दुष्पानः, सुपानः।

**शासियुधिदृशिधृषिमृषः ॥१०६॥** [०मृषिभ्यश्च। स० २।४।१८६]

शास्यादिभ्यः ईषदादिपूर्वेभ्यो युज् भवति। दुःशासनः, दुर्योधनः, दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षण.। बहुलाधिकाराद् भावाप्ययोरेव खल्युचौ भवतः।

*कदा त्वमागतोऽसि देवदत्त? एष आगच्छामि। आगच्छन्तमेव मां विद्धि। कदा गमिष्यसि? एष गच्छामि। गच्छन्तमेव मां विद्धीति

* Candra skips P. iii. 3. 131-138 and frames a rule corresponding to P. iii. 3. 139. The Vrtti shows that those rules are not necessary. The author probably took the hint from the

वर्तमानतैवात्र लटो गम्यते । भूतभविष्यत्ता त्वर्थप्रकरणशब्दान्तरादिभिः, वर्तमानसमीपोऽपि वा वर्तमान एव—भूतस्तावत् तत्फलस्यानुवृत्तेः, भविष्यन्नपि तदर्थसाधनानुष्ठानात् । क्रियाकालविवक्षायां तु यथाप्राप्तमेव । अद्यागमम् । अद्य गमिष्यामि । आशंसायां तु भविष्यत्कालोऽपि व्यापारः सिद्धेरभिप्रेतत्वाद् वर्तमानवद् भूतवद् वा प्रतिभाति । उपाध्यायश्चदागच्छति ! युक्ता व्याकरणमधीमहे। उपाध्यायश्चेदागतः! एतदधीतं व्याकरणम्। उपाध्यायश्चेदागमत् ! एवं व्याकरणमध्यगीष्महि । भूतविशेषस्याविवक्षितत्वाल्लङ्लिटौ न भवतः । यथास्वं कालविवक्षायां तु यथाप्राप्तमेव । उपाध्यायश्चेदागमिष्यति ! युक्ता व्याकरणमध्येष्यामहे । उपाध्यायश्चेदागन्ता युक्ता व्याकरणमध्येतास्महे। क्षिप्रवचने पुनरप्राप्तस्यैव क्षिप्रत्वमाशास्यत इति भूतवद्वर्तमानवद्वा* विधिर्न भवति। उपाध्यायश्चेत् क्षिप्रमागमिष्यति! क्षिप्रं व्याकरणमध्येष्यामहे। क्षिप्रतायाश्च विवक्षितत्वादनद्यतनविवक्षा नास्तीति लुडपि न भवति। आशंसावचने ०प्रार्थन० [१२१] इति लिङ् अस्त्येव । उपाध्यायश्चेदागच्छेत् ! आशंसे युक्तो व्याकरणमधीयीय । क्रियाप्रबन्धसामीप्ययोर्विप्रकर्षविवक्षाया अभावादनद्यतनवद्विधिर्न भवति। यावज्जीवं भृशमन्नमदात्। यावज्जीवं भृशमन्नं दास्यति । येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित। येयं पौर्णमास्यागामिनी, एतस्यामुपाध्यायोऽग्नीनाधास्यते। तथा भविष्यति मर्यादावचनेऽवरस्मिन् प्रविभागे सन्निकर्षस्यापनपरत्वाद् विवक्षाया लुट् न भवति। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्

Kāśikā: यो मन्यते गच्छामीति पदं वर्तमाने काल एव वर्तते, कालान्तरगतिस्तु वाक्याद् भवति, न च वाक्यगम्यः कालः पदसंस्कारवेलायामुपयुज्यत इति, तादृशं वाक्यार्थं प्रतिपत्तारं प्रति प्रकरणमिदं नारभ्यते ।

*भूतवर्तमानवद्वा—L. from MSS.

तस्य यदवरं कौशाम्ब्यास्तत्रौदनं भोक्ष्यामहे। योऽयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। भूतस्य तु भेदेनानुभूतत्वादनद्यतनविवक्षाप्यस्ति। योऽयमध्वा गत आ पाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्रौदनमभुञ्ज्महि। योऽयं संवत्सरोऽतीतस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्यैमहि। मर्यादावचनाभावेऽपि विप्रकर्षपरत्वाद्विवक्षाया अनद्यतनविधिर्भवत्येव। योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्रौदनं भोक्तास्महे। योऽयं काल आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे। परस्मिन् पुनः प्रविभागे विप्रकृष्टपरत्वादनद्यतनविवक्षाप्यस्त्येव। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य यत् परं कौशाम्ब्यास्तत्रौदनं भोक्तास्महे। भविष्यत्सामान्यविवक्षायां तु लृटापि भवितव्यम्। एवं कालकृतेऽपि परस्मिन् प्रविभागे यथाविवक्षं लृड्लुटौ सिद्धौ। योऽयं संवत्सर आगामी तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, अध्येष्यामह इति वा। अहोरात्राणामहोरात्रैर्वा प्रविभागे भेदस्य विवक्षितत्वादवरस्मिन्नपि प्रविभागेऽनद्यतनविवक्षास्त्येव। योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता अध्यतास्महे। योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्धमासस्तत्र युक्ता अध्येतास्महे। योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे।

[भाषायां शासियुधिदृशिधृषिभ्यो युच्। ३।३।१३०।१। मृषेश्चेति वक्तव्यम्। भाष्यम्। वर्तमानसामीप्ये वर्तमानवद्वा। आशंसायां भूतवच्च। क्षिप्रवचने लृट्। आशंसावचने लिङ्। नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः, पा० ३।३।१३१-१३५, स० २।४।१८७-१९०, १९३; भविष्यति मर्यादावचनेऽवरस्मिन्। कालप्रविभागे चानहोरात्राणाम्। परस्मिन् विभाषा। पा० ३।३।१३६-१३८। निष्पन्नवच्च सम्भावनायाम्। विद्यमानस्तुं केभ्योऽस्त्यर्थेभ्यो भवन्त्यर्थे

सर्वा विभक्तयः। भविष्यति मर्यादावचने देशस्य विभागेऽवरस्मिन्। कालस्य चानहोरात्राणाम्। परस्मिन् वा। २।४। स० क० १९१-१९२, १९४-१९६]

**लिङ्क्रतिपत्तौ लृङ् ॥१०७॥**

लिङ्विषये क्रियातिपत्तौ लृङ् भवतीत्यतदधिकृतं वेदितव्यम्।

[लिङ्निमित्ते लृङ् क्रियातिपत्तौ। पा० ३।३।१३९, स० क० २।४।१९७]

**आ शेषाद्भूते वा ॥१०८॥**

आ शेषसंशब्दनाद् [११६]भूते काले लिङ्विषये क्रियातिपत्तौ लृङ् वा भवतीत्येतदधिकृतं वेदितव्यम्। यावच्च भूते वेत्यनुवर्तते तावत् पूर्वयोगो भविष्यति नित्यो द्रष्टव्यः, न तु वर्तमाने, तत्र क्रियातिपत्तेरभावात्। अपि तत्रभवान् वृषलं याजयति। जातु तत्रभवान् वृषलं याजयति। गर्हामहे, अन्याय्यमिति। भूतभविष्यतोरपि पूर्ववल्लट्। गर्हायाश्च चिकीर्षितत्वात् क्रियाप्रबन्धाविराम एवात्र विवक्षितः। अगर्हायां तु यथाकालं लुङादयः।

[भूते च। वोताप्योः। पा० ३।३।१४०-१४१, भूते च। प्रागुताप्योर्वा। स० क० २।४।१९८-९]

**गर्हायां कथमि लिङ् ॥१०९॥**

गर्हायां गम्यमानाया कथंशब्दे सति लिङ् भवति वा। कथं नाम तत्रभवान् वृषलं याजयेत्। अयीयजत्। अयाजयत्। याजयाञ्चकार। याजयिष्यति। याजयिता। याजयति। भूतभविष्यतोरपि पूर्ववल्लट्। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। कथं नाम तत्रभवान् वृषलमयाजयिष्यत्। गर्हायामिति किम्? कथं नाम तत्रभवान् ब्राह्मणमयाजयत्? एवं यथाकालं लुङादय.।

[गर्हायां लडपिजात्वोः। विभाषा कथमि लिङ् च। पा० ३।३।१४२-३, स० क० २।४।२००, २०१ (कथमि लिङ् च वा)]

**किमि लृट् च ॥११०॥**

किंशब्दे सति गर्हायां लृङ् भवति, लिङ् च। को नाम तत्र* वृषलः, कतरो नाम वृषलः, कतमो नाम वृषलः, यं तत्रभवान् याजयिष्यति, याजयेत्? वाग्रहणानभिसम्बन्धाल्लुङादयो न भवन्ति। गर्हायामित्येव। को नाम ब्राह्मणो यं तत्रभवान् याजयेत्? इत्यादि। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। को नाम वृषलो यं तत्रभवानयाजयिष्यत्?

[ किंवृत्ते लिङ्लृटौ। पा० ३।३।१४४, स० क० २।४।२०२ ]

**क्रोधाश्रद्धयोः ॥१११॥**

अमर्षेऽनवक्लृप्तौ च लृङ् भवति, लिङ् च। न मर्षयामि, न श्रद्दधे, नावकल्पयामि यत् तत्रभवान् वृषलं याजयिष्यति। याजयेत्। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। न मर्षयामि, न श्रद्दधे, नावकल्पयामि यत् तत्रभवान् वृषलमयाजयिष्यत्।

[ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि। पा० ३।३।१४५, स० क० २।४।२०३ ]

**किंकिलास्त्यर्थयोर्लृट् ॥११२॥**

किंकिलशब्देऽस्त्यर्थेषु च सत्सु क्रोधाश्रद्धयोरर्थयोर्लृड् एव भवति, न लिङ्। किंकिल तत्रभवान् वृषलं याजयिष्यति? न मर्षयामि, न श्रद्दधे, नावकल्पयामि। अस्ति नाम, भवति नाम, विद्यते नाम यत् तत्रभवान् वृषलं याजयिष्यति?

[ किंकिलास्त्यर्थेषु लृट्। पा० ३।३।१४६, स० क० २।४।२०४ ]

**यच्चयदायदाजातुषु लिङ् ॥११३॥** [ स० क० २।४।२०५ ]

यदादिषु सत्सु क्रोधाश्रद्धयोर्लिङेव भवति, न लृट्। यत् तत्रभवान् वृषलं याजयेत्, यदि तत्रभवान् वृषलं याजयेत्, यदा तत्रभवान् वृषलं याजयेत्, जातु तत्रभवान् वृषलं याजयेत्। न मर्षयामि, न श्रद्दधे, नावकल्पयामि। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। यत् तत्रभवान् वृषलमयाजयिष्यत्।

* तत्र is not found in K. and H. and should be dropped.

[जातुयदोर्लिङ् । पा० ३।३।१४७, जातुयदोर्लिङ्विधाने यदाययोरुपसंख्यानम् । ३।३।१४७।१ ]

**यच्चयत्रयोर्गर्हायां च** ॥११४॥ [पा० ३।३।१४८-१४९, स० क० २।४।२०६ ]

यच्चशब्दे यत्रशब्दे च सति गर्हायां गम्यमानायां क्रोधाश्रद्धयोश्च लिङ् भवति। यच्च तत्रभवान् वृषलं याजयेत्। यत्र तत्रभवान् वृषलं याजयेत्। विगर्हे; न मर्षयामि, न श्रद्दधे, नावकल्पयामि। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। यच्च तत्रभवान् वृषलमयाजयिष्यत्।

**आश्चर्ये** ॥ ११५ ॥

यच्चशब्दे यत्रशब्दे च सत्याश्चर्ये गम्यमाने लिङ् भवति। आश्चर्यम्, अद्भुतम्, चित्रं यच्च तत्रभवान् वृषलं याजयेत्; यत्र तत्रभवान् वृषलं याजयेत्। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्। यत्र तत्रभवान् वृषलमयाजयिष्यत्।

[ चित्रीकरणे च । पा० ३।३।१५०, आश्चर्ये च । स० क० २।४।२०७ ]

**शेषे लृट्** ॥ ११६ ॥

यच्चयत्राभ्यामन्यस्मिन्नाश्चर्ये लृट् भवति। आश्चर्यम्, अद्भुतम्, चित्रम् अन्धो नाम पर्वतमारोक्ष्यति; बधिरो नाम शब्दं श्रोष्यति। आश्चर्यं यदि स भुञ्जीतेति लिङा बाधितत्वान्न लृट् भविष्यति। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्।

[ शेषे लृडयदौ । पा० ३।३।१५१, स० क० २।४।२०८ ]

**उताप्योर्बाढार्थे लिङ्** ॥ ११७ ॥ [स० २।४।२०९]

उत अपि इत्येतयोर्बाढार्थे प्रयुज्यमानयोः क्रियार्थाल्लिङ् भवति। उत कुर्यात्। अपि कुर्यात्। बाढं कुर्यादित्यर्थः। बाढार्थ इति किम्?

उत दण्डः पतिष्यति ? अपिधास्यते द्वारम् । प्रश्न आवरणं च गम्यते। भूते वा [१।३।१०८] इति निवृत्तम् । अतो भूते भविष्यति च क्रियातिपत्तौ लिङ्विषये लृङ् नित्यं द्रष्टव्यः । उताकरिष्यत् । अप्यकरिष्यत् । कामप्रवेदन ०प्रार्थन० [ १।३।१२१] इति लिङ् भविष्यति । कामो मे भुञ्जीत भवान् । *कच्चिज्जीवति ते मातेति प्रश्नमात्रे प्रार्थनाभावान्न भविष्यति ।

[ उताप्योः समर्थयोर्लिङ् । पा० ३।३।१५२, कामप्रवेदनेऽकच्चिति ।" पा० ३।३।१५३, स० २।४।२१०]

**सम्भावनेऽलमर्थे तदर्थाप्रयोगे ॥ ११८ ॥** [स० क० २।४।२११]

*अलमर्थविषये सम्भावने गम्यमाने लिङ् भवति, तदर्थश्चेच्छब्दो* न प्रयुज्यते । अपि पर्वतं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुञ्जीत । अलमर्थ इति किम् ? विदेशस्थायी देवदत्तो ग्रामं गमिष्यति । तदर्थाप्रयोग इति किम् ? वसति चेत् सुराष्ट्रेषु भोक्ष्यतेऽलं लवणेन । क्रियातिपत्तौ लृङ् भवत्येव । अपि वज्राहतो नापतिष्यत् ।

[ सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे । पा० ३।३।१५४]

**धातूक्तावयदि वा ॥ ११९ ॥**

धातुनोच्यमाने सम्भावने वा लिङ् भवति यच्छब्दस्याप्रयोगे। सम्भावयामि, श्रद्दधे, अवकल्पयामि, भुञ्जीत भवान्; भोक्ष्यते भवान्; अभुङ्क्त भवान् । अयदीति किम् ? सम्भावयामि यत् स भुञ्जीत । क्रियातिपत्तौ लृङ् भवत्येव । सम्भावयामि नाभोक्ष्यत भवान् ।

[ विभाषा धातौ सम्भावनवचनेऽयदि । पा० ३।३।१५५, अयदि सम्भावनवचने धातौ वा । स० क० २।४।२१२ ]

**हेतुफलयोः ॥ १२० ॥** [स० क० २।४।२१३]

हेतुभूतायां फलभूतायां च क्रियायां वर्तमानात् क्रियार्थाल्लिङ्

---

* कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।
मारुविद त्वा पृच्छामि कच्चिज्जीवति पार्वती ॥ काशिका ।

वा भवति। दक्षिणेन चेद् यायान्न शकटं पर्याभवत्। दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति। इह कस्मान्न भवति—हन्तीति पलायते, वर्षतीति धावति? इतिशब्देनैव हेतुहेतुमद्भावस्य द्योतितत्वात्। यस्त्वाह। भविष्यत्कालत्वादस्य योगस्य वर्तमाने न भविष्यति तस्येह स्यात्। हनिष्यतीति पलायिष्यते। क्रियातिपत्तौ लृङ् भवत्येव। दक्षिणेन चेदयास्यन्न शकटं पर्याभविष्यत्। केनचिल्लिङ्गेन भविष्यन्ती क्रियातिपत्तिमवगम्य प्रयुङ्क्ते। भूतेऽपि च प्रयोगो दृश्यते।

अमङ्क्ष्यद् वसुधा तोये च्युतशैलेन्द्रबन्धना।
नारायण इव श्रीमन् यदि त्वं नाधरिष्यथाः॥

इच्छार्थेषु ०प्रार्थन० [ १२२ ] इत्येव लिङ्लोटौ भविष्यतः। इच्छामि भुञ्जीत भवान्, इच्छामि भुङ्क्तां भवान्। अन्यथा हीच्छन् करोमीत्यपि स्याताम्। इच्छति भोक्तुम्, कामयते भोक्तुम्, गवेषयति भोक्तुमिति तुमुन् भावे क्रियायां तदर्थायाम् [ १।३।६ ] इति सिद्धम्। पुनर्विधानादिहापि स्यात्—इच्छन् करोतीति। भुञ्जीयेतीच्छतीति लिङ् ०प्रार्थन० [ १२१ ] इति भविष्यति। इच्छत् कामयेतेति विधिरेव गम्यते।

[ हेतुहेतुमतोर्लिङ्। इच्छार्थेषु लिङ्लोटौ। इच्छार्थेभ्यो विभाषा वर्तमाने। पा० ३।३।१५६-१५७, १६०, इच्छार्थेषु कामप्रवेदने लोट च। स० २।४।२१४]

**विधिसंप्रश्नप्रार्थनेषु॥ १२१॥**

विधिरप्राप्तनियोगो दृष्टार्थो वादृष्टार्थो वा, प्रत्याख्याने *सप्रत्यवायो वा *निष्प्रत्यवायो वा, सत्कारपूर्वको वा न्यक्कारपूर्वको वा। सप्रश्नः संप्रधारणा। प्रार्थनं याचनमिष्टार्थशंसनं † च। तेषु विध्यादिषु क्रियार्थाल्लिङ् भवति। कटं कुर्याद् भवान्। यजेत्। दद्यात्। यत्राङ्गीकृतस्य प्रत्याख्याने ‡ प्रत्यवायस्तन्निमन्त्रणम्। इह भवान्

* ०प्रत्यपायः—L. † इष्टाशंसनम्-पञ्जीधृतपाठः। ‡ सप्रत्यपायः—L.

भुञ्जीत। यत्र प्रत्याख्याने कामचारस्तदामन्त्रणम्। इह भवान् आसीत। सत्कारपूर्वको नियोगोऽध्येषणम्। माणवकं भवान् अध्यापयेत्। न्यक्कारपूर्वको नियोगः प्रैषः, तत्र लोटं वक्ष्यति [१२३]। संप्रश्ने। किं नु खलु भो व्याकरणमधीयीय? प्रार्थने। लभेयाहं भिक्षाम्। *जीवेद्भवान्।

[ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्। पा० ३।३।१६१, ० प्रार्थनेषु। स० क० २।४।२१६]

लोट्॥ १२२॥

विध्यादिषु क्रियार्थाल्लोड् भवति। कटं करोतु भवान्। तृष्णां छिन्धि, भज क्षमाम्, जहि मदम्, कुरु दयाम्†। इह भवान् भुङ्क्ताम्। इह भवानास्ताम्। माणवकं भवान् अध्यापयतु। किं नु खलु भो व्याकरणमध्ययै? देहि मे भिक्षाम्। जीवतु भवान्।

[ लोट् च। पा० ३।३।१६२, स० क० २।४।२१७]

प्रैषानुज्ञाप्राप्तकालेषु॥१२३॥ [स० २।४।२१८]

प्रैषादिषु लोड् भवति। ग्रामं गच्छ। कर्तुमिच्छतोऽनुज्ञानमनुज्ञा। एवं कुरु। कटं कुरु, प्राप्तस्ते कालः कटकरणे।

[ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। पा० ३।३।१६३]

लिङ् चोर्ध्वमौहूर्तिके॥ १२४॥ [पा० ३।३।१६४, स० क० २।४।२१९]

---

* जीव्याद्भवान्—L.

† This is reminiscent of Bhartṛhari's stanza:
तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम्।
मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम्॥

ऊर्ध्वमौहूर्तिके वर्तमानात् क्रियार्थात् प्रैषादिषु लिङ् भवति, लोट् च। ऊर्ध्वं मुहूर्तात् कटं कुर्याः ; कटं कुरु। ऊर्ध्वं मुहूर्तादेवं कुर्याः; एवं कुरु। ऊर्ध्वं मुहूर्तात् कटं कुर्याद् भवान् ; कटं करोतु भवान्; भवतो हि प्राप्तः कालः कटकरणे।

**स्मे लोट्** ॥ १२५ ॥ [ पा० ३।३।१६५, स० क० २।४।२२० ]

स्मशब्दप्रयोगे ऊर्ध्वमौहूर्तिके वर्तमानात् क्रियार्थात् प्रैषादिषु लोडेव भवति। ऊर्ध्वं मुहूर्ताद् ग्रामं गच्छतु स्म भवान्। एवं करोतु स्म भवान्। कटं करोतु स्म भवान्, भवतो हि प्राप्तः कालः कटकरणे।

**अधीष्टौ** ॥ १२६ ॥

अध्येषणायां स्मशब्दप्रयोगे लोडेव भवति। अङ्ग स्म विद्वन् माणवकमध्यापय। प्रैषादिषु चान्यत्र च तव्यादयः सिद्धा एव। भवता खलु कटः कर्तव्यः, करणीयः, कार्यः, कृत्यः। तथोर्ध्वमौहूर्तिके चार्हादिषु च। कालो भोक्तुम्, समयो भोक्तुम्, वेला भोक्तुमिति पूर्वक एव तुमुन्। *वृत्तेर्भवतेर्वा तदर्थस्य प्रतीयमानत्वात्।

[ अधीष्टे च। पा० ३।३।१६६, अधीष्टौ च। स० क० २।४।२२१ ]

**कालसमयवेलासु लिङ् यदि** ॥ १२७ ॥ [ स० २।४।२२२ ]

कालादिषु यच्छब्दसहितेषु प्रयुज्यमानेषु क्रियार्थाल्लिङ् भवति। कालो यद् भुञ्जीत भवान्। समयो यद् भुञ्जीत भवान्। वेला यद भुञ्जीत भवान्।

[ कालसमयवेलासु तुमुन्। लिङ् यदि। पा० ३।३।१६७-१६८ ]

**अर्हशक्तयोः** ॥ १२८ ॥

अर्हार्थे शक्तौ च लिङ् भवति। भवान् खलु कन्यां वहेत्। भवानर्हः। भवान् शक्तः।

---

* वृत्तिः—L. from MSS.

अग्निष्टोमयाजीति भूत एव कालः। अस्य पुत्रो जनितेति पदान्तरसम्बन्धे भविष्यत्कालता गम्यते। एवं कृतः कटः श्वो भविता। भावि कृत्यमासीत्। गोमानासीत्। गोमान् भवितेति। लुनीहि लुनीहीत्येवायं लुनाति। अधीष्वाधीष्वेत्येवायमधीत इति लोड् एवतन्मध्यमपुरुषैकवचनयोः। *आभीक्ष्ण्ये द्विर्वचनम्।* एतदुक्तं भवति। एवमसौ त्वरावान् यदन्यानपि प्रेरयन्निव तां क्रियां करोतीति। एवं लुनीत लुनीतेत्यवायं लुनाति। अधीध्वमधीध्वमित्येवायमधीते। तथा कालान्तरेष्वपि। लुनीहि लुनीहीत्यवायमलावीत्; लुलाव; लविष्यति; लविता। एवं स्वशब्देऽपि योज्यम्। तथा समुच्चयेऽपि। मठमट विहारमटेत्येवायमटति। छन्दोऽधीष्व व्याकरणमधीष्वेत्येवायमधीते। व्यापारभेदे तु सामान्यवचनस्यैव व्यापकत्वादनुप्रयोगो भवति। ओदनं भुङ्क्ष्व सक्तून् पिब धानाः खादेत्येवायमभ्यवहरति।

[अर्हे कृत्यतृचश्च। शकि लिङ् च। पा० ३।३।१६९, १७२; अर्हशक्तयोः। स० क० २।४।२२३, धातुसम्बन्धे प्रत्ययाः। क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः। समुच्चयेऽन्यतरस्याम्। यथाविध्यनुप्रयोगः पूर्वस्मिन्। समुच्चये सामान्यवचनस्य। पा० ३।४।१-५, धातुसम्बन्धे प्रत्ययाः। क्रियासमभिहारे लोट् तस्य हिस्वौ हिस्ववत्। तध्वम्भाविनो वा। समुच्चये वा। यथाविध्यनुप्रयोगः पूर्वस्मिन्। समुच्चये सामान्यवचनस्य। स० क० २।४।२२४-२२९]

अलंखल्वोः प्रतिषेधे क्त्वा वा ॥ १२९॥

अलंखलुशब्दयोः प्रतिषेधार्थयोः प्रयोगे क्त्वा वा भवति। अलं कृत्वा, खलु कृत्वा। अलं कृतेन, खलु कृतेन। अलंखल्वोरिति किम्? मा कार्षीः। प्रतिषेध इति किम्? अलंकारः।

[ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। पा० ३।४।१८, अलंखल्वोः प्रतिषेधयोर्भवि क्त्वा वा। स० क० २।४।२३० ]

मेङः ॥ १३० ॥ [ स० क० २।४।२३१ ]

मयते. क्त्वा वा भवति। अपूर्वकालार्थ आरम्भः। अपमित्य याचते। अपमातु याचते। याचित्वापमयते।

[ उदीचां माङो व्यतीहारे। पा० ३।४।१९ ]

**एककर्तृकयोः पूर्वात्** ॥ १३१ ॥

एककर्तृकयोर्व्यापारयोर्मध्ये यः पूर्वव्यापारस्तदर्थात् क्त्वा भवति। भुक्त्वा व्रजति। द्विवचनस्यातन्त्रत्वात्, भुक्त्वा पीत्वा व्रजति। परापेक्षया वा। एककर्तृकयोरिति किम्? भुक्तवति देवदत्ते यज्ञदत्तो व्रजति। पूर्वादिति किम्? भुङ्क्ते च पचति च। अप्राप्य नदीं पर्वतः, अतिक्रम्य पर्वतं नदीति भवतेः सर्वत्र सम्भवादेककर्तृकता पूर्वकालता च गम्यते।

[समानकर्तृकयोः पूर्वकाले। परावरयोगे च। पा० ३।४।२१,२०, अभिन्नकर्तृकयोः पूर्वकालात्। परावर०। स० क० २।४।२३३, २३२]

**आभीक्ष्ण्ये णमुल् च** ॥१३२॥ [पा० ३।४।२२, स० २।४।२३५]

एककर्तृकयोः पूर्वस्मिन् व्यापारे पौनःपुन्यविशिष्टे वर्तमानात् क्रियार्थाण्णमुल् भवति, क्त्वा च। भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा व्रजति। आभीक्ष्ण्ये [ ६।३।१ ] इति द्विर्वचनम्, यदयं भुङ्क्ते ततो व्रजतीति यच्छब्दप्रयोगे ततःशब्देन क्रमस्याभिधानात् क्त्वा न भवति। आभीक्ष्ण्याभावाच्च णमुल् न भवति। यदयं पुनःपुनर्भुङ्क्ते ततो व्रजतीति पुनःपुनःशब्देनैवाभीक्ष्ण्याभिधानान् न भवति। यदयं भुक्त्वा गच्छति ततोऽधीत इति भोजनगमनयोः क्रमे क्त्वा, गमनाध्ययनयोस्तु क्रमस्य ततःशब्देनाभिधानान् न भविष्यति।

**पूर्वाग्रेप्रथमेषु** ॥ १३३ ॥

पूर्वादिषु प्रयुज्यमानेषु णमुल् भवति, क्त्वा च। पूर्वं भोजं

व्रजति, पूर्वं भुक्त्वा व्रजति। अग्रेभोजं व्रजति, अग्रे भुक्त्वा व्रजति। प्रथमंभोजं व्रजति, प्रथमं भुक्त्वा व्रजति। पूर्वं भुङ्क्ते ततो व्रजतीति ततःशब्देन क्रमस्याभिधानान् न भविष्यतः।

[विभाषाग्रेप्रथमपूर्वेषु। पा० ३।४।२४, वाग्रेप्रथमपूर्वेषु। स० क० २।४। २३७]

**व्याप्यादाक्रोशे कृञः खमुञ्॥ १३४॥**

व्याप्यात् परात् करोतेः खमुञ् भवत्याक्रोशे गम्यमाने। दस्युंकारमाक्रोशति। आक्रोश इति किम्? साधुं कृत्वा स्तौति।

[कर्मण्याक्रोशे कृञः खमुञ्। पा० ३।४।२५, स० क० २।४।२३८]

**स्वाद्वर्थाददीर्घात्॥१३५॥**

स्वादुवचनाददीर्घान्तात् परात् करोतेः खमुञ् भवति। स्वादुंकारं भुङ्क्ते। संपन्नंकारं भुङ्क्ते। लवणंकारं भुङ्क्ते। अदीर्घादिति किम्? स्वादूकृत्य भुङ्क्ते। स्वाद्वीं कृत्वा। अन्यथाकारं भुङ्क्ते एवंकारं, कथंकारम्, इत्थंकारमिति णमुल् न वाच्यः, घञन्तेन क्रियाविशेषणेन सिद्धत्वात्। यथा ओदनपाकं शेत इति। एवं यथाकारं तथाकारमहं भोक्ष्ये, किं तवानेन? कन्यादर्शं वरयति। ब्राह्मणवेदं भोजयति। यावद्वेदं भुङ्क्ते। यावज्जीवमधीते। चर्मपूरं ददाति। उदरपूरं भुङ्क्ते। गोष्पदपूरं वृष्टो देवः। गोष्पदं प्रातीति गोष्पदप्रमुदकम्। गोष्पदप्रं वृष्टो देवः। तथा च सर्वा विभक्तयः, समासे च विभक्तिलोपः। एवं चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपं वृष्टो देवः। वसनक्नोपम्। निमूलकापं कषति। समूलकाषं कषति। शुष्कपेषं पिनष्टि, चूर्णपेषम्, रूक्षपेषम्। समूलघातं हन्ति। अकृतकारं करोति। पाणिघातं वेदीं हन्ति। उदपेषं पिनष्टि। तैलपेषं पिनष्टि। हस्तवर्तं वर्तयति। स्वपोषं पुष्णाति, गोपोषम्, रैपोषम्। चारकवन्धं बद्धः, क्रौञ्चबन्धम्। जीवनाशं नष्टः। पुरुषवाहं वहति। ऊर्ध्वशोषं शुष्कः, ऊर्ध्वपूरं पूर्णः।

[स्वादुमि णमुल् । पा० ३।४।२६, स्वादुमीत्यर्थग्रहणम् । काशिका । स्वाद्वर्थेषु चादीर्घेषु । स० क० २।४।२३९ अन्ययैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ( ०सु णमुलप्रयोगाहात्—स० ) । यथातथयोरसूयाप्रतिवचने । कर्मणि दृशिविदोः (० विदिभ्यां–स०) साकल्ये । यावति विन्दजीवोः (०विन्दजीविभ्याम्–स०) चर्मोदरयोः पूरेः । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् (०श्चास्य वा–स०) । चेले ( चेलाथ–न० ) वनोपेः । (गात्रपुरुषयोः स्नातेः । स०) । निमूलसमूलयो: कषः । शुष्कचूर्णरूक्षेषु पिषः । समूलाकृतजीवेषु हन् कृञ् ग्रहः ( अकृते कृञः । जीवे गृहः । समूले हनः । स० ) । करणे हनः ( करणे च–स० ) । स्नेहने पिषः । हस्ते वर्तिगृहोः (हस्तार्थे वर्तिगृहिभ्याम् । स०)। स्वे पुषः । अधिकरणे बन्धः (बन्धेरधिकरणे–स०) । संज्ञायाम् । पा० ३।४।२७-४२, स० २।४।२४०-२५८]

**जीवाद् ग्रहो णमुल् स चानु ॥१३६॥**

जीवाद् व्याप्यात् परस्माद् ग्रहेर्णमुल् भवति, स च* ग्रहिरनु प्रयुज्यते । जीवग्राहं गृह्णाति ।

[समूलाकृतजीवेषु हन्कृञ् ग्रहः । कषादिषु यथाविध्यनुप्रयोगः । पा० ३।४।३६,४६, जीवे ग्रहः । स० क० २।४।२५१ ]

**हस्तेन ॥१३७॥**

हस्तकरणकाद् ग्रहेर्णमुल् भवति, स चानुप्रयुज्यते । हस्तग्राहं गृह्णाति । करग्राहं गृह्णाति ।

[हस्ते वर्तिग्रहोः । पा० ३।४।३९, हस्तार्थे वर्तिग्रहिभ्याम् । स० २।४।२५५ ]

**उपमानात् कर्तुश्च ॥१३८॥**

उपमानात् कर्तुर्व्याप्याच्च परात् क्रियार्थाण्णमुल् भवति, स च क्रियार्थोऽनुप्रयुज्यते । चूडकनाशं नष्टः । सुवर्णनिधायं निहितः । ओदनपाचं पक्वः । घञि हि कुत्वं स्यात् । उपमानादिति किम् ? चूडका नष्टः ।

[उपमाने कर्मणि च । पा० ३।४।४५, कर्मणि चोपमाने । स० क० २।४।२६१ ]

---

* चेत्—L. from MSS.

**उपदंशस्तृतीयायाम्** ॥१३९॥ [ पा० ३।४।४७ ]

उपपूर्वाद् *दंशतेस्तृतीयान्त उपपदे णमुल् भवति। मूलकेनोपदंशं भुङ्क्ते। मूलकोपदंशं भुङ्क्त इति घञापि सिद्धम्। तृतीयायामिति किम्? मूलकमुपदश्य भुङ्क्ते।

[ दंशेस्तृतीयायाम्। स० क० २।४।२६४ ]

**हिंसार्थादेकाप्यात्** ॥१४०॥

हिंसार्थादनुप्रयोगेण सह समानव्याप्यात् तृतीयान्त उपपदे णमुल् भवति। दण्डेनोपघातं गाः कालयति। दण्डोपघातम्। एकाप्यादिति किम्? दण्डेनोपहत्य भूमिं गाः शादयति गोपालको यष्ट्या।

[ हिंसार्थानां च समानकर्मकाणाम्। पा० ३।४।४८, हिंसार्थादेककर्मकात्। स० क० २।४।२६५ ]

**सप्तम्यां चोपात् पीडरुधकर्षः** ॥१४१॥

उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्त उपपदे तृतीयान्ते च णमुल् भवति। पार्श्वयोरुपपीडं शेते, पार्श्वेनोपपीडम्, पार्श्वोपपीडम्। व्रज उपरोधं गाः शादयति, व्रजेनोपरोधम्, व्रजोपरोधम्। पाणावपकर्षम्, पाणिनोपकर्षम्, पाण्युपकर्षम्।

[ सप्तम्यां चोपपीडरुधकर्षः। पा० ३।४।४९, स० क० २।४।२६६ ]

**आसत्तौ** ॥१४२॥ [ स० क० २।४।२६७ ]

प्रत्यासत्तौ गम्यमानायां सप्तम्यन्त उपपदे क्रियार्थाण्णमुल् भवति। केशेषु ग्राहं युध्यन्ते। केशग्राहम्।

[समासत्तौ। पा० ३।४।५० The Vṛttikāra stands alone in not recognising the अनुवृत्ति of तृतीयायाम् from 1. 3. 139. He takes his stand on the principle चानुकृष्टं नोत्तरत्र. Jayāditya Durga, Daṇḍanātha—all agree in applying this rule to instrumental upapadas also.]

---

* दंशतेः is a blend of दंशेः and दशतेः.

**प्रमाणे** ॥ १४३ ॥ [ स० क० २।४।२६८ ]

प्रमाणे गम्यमाने सप्तम्यन्त उपपदे क्रियार्थाण्णमुल् भवति। द्व्यङ्गुलोत्कर्षं गण्डिकां छिनत्ति। द्व्यङ्गुल उत्कर्षम्।

[ प्रमाणे च। पा० ३।४।५१ ]

**पञ्चम्यां त्वरायाम्** ॥ १४४ ॥ [ स० क० २।४।२६९ ]

पञ्चम्यन्त उपपदे त्वरायां गम्यमानायां क्रियार्थाण्णमुल् भवति। शय्योत्थायं व्रजति। शय्याया उत्थायं व्रजति। त्वरायामिति किम्? आसनादुत्थाय धावति।

[ अपादाने परीप्सायाम्। पा० ३।४।५२ ]

**द्वितीयायाम्** ॥ १४५ ॥ [ स० क० २।४।२७० ]

द्वितीयान्त उपपदे त्वरायां गम्यमानायां क्रियार्थाण्णमुल् भवति। यष्टिग्राहं युध्यन्ते। यष्टीर्ग्राहम्।

[ द्वितीयायां च। पा० ३।४।५३ ]

**अध्रुवे स्वाङ्गे** ॥ १४६ ॥ [ स० क० २।४।२७१ ]

अध्रुवे स्वाङ्गे द्वितीयान्त उपपदे क्रियार्थाण्णमल् भवति। भ्रूविक्षेपं जल्पति। भ्रुवं विक्षेपम्। अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति।

अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत्तथा युतम्॥ [ महाभाष्यम् ]

[ स्वाङ्गेऽध्रुवे। पा० ३।४।५४]

**पीडायाम्** ॥ १४७ ॥

पीडायां गम्यमानायां स्वाङ्गे द्वितीयान्त उपपदे क्रियार्थाण्णमुल् भवति। उरःप्रतिपेषं युध्यन्ते। उरांसि प्रतिपेषम्।

[ परिक्लिश्यमाने च। पा० ३।४।५५, स० क० २।४।२७२ ]

**विशिपतिपदिस्कन्दां वीप्साभीक्ष्ण्ययोः ॥ १४८ ॥**

विश्यादिभ्यो वीप्सायामाभीक्ष्ण्ये च गम्यमाने द्वितीयान्त उपपदे णमुल् भवति। गेहानुप्रवेशमास्ते। गेहं गेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। गेहानुप्रपातमास्ते। गेहं गेहमनुप्रपातम्। गेहमनुप्रपातमनुप्रपातम्। गेहानुप्रपादमास्ते। गेहं गेहमनुप्रपादम्। गेहमनुप्रपादमनुप्रपादम्। गेहावस्कन्दमास्ते। गेहं गेहमवस्कन्दम्। गेहमवस्कन्दमवस्कन्दम्। वीप्साभीक्ष्ण्ययोरिति किम्? गेहमनुप्रविश्यास्ते।

[विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः। पा० ३।४।५६, विशिपतिपदिस्कन्दिभ्यो वीप्साभीक्ष्ण्ययोः। स० २।४।२७३]

**अस्तृषः कालेषु विच्छेदे ॥ १४९ ॥**

अस्यतेस्तृषेश्च कालेषु द्वितीयान्तेषूपपदेषु विच्छेदे गम्यमाने णमुल् भवति। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहं तर्षम्। अस्तृष इति किम्? द्व्यहमुपोष्य भुङ्क्ते। कालेष्विति किम्? पञ्च पिण्डानत्यस्य जलं पिबति। विच्छेद इति किम्? अहरत्यस्येषून् गतः।

[अस्यतितृषोः क्रियान्तरे कालेषु। पा० ३।४।५७, अस्यतितृषिभ्यां क्रियाविच्छेदकाभ्यां कालेषु। स० क० २।४।२७४]

**नाम्नि ग्रहादिशः ॥ १५० ॥**

नामशब्दे द्वितीयान्त उपपदे ग्रहेरादिशश्च णमुल् भवति। नामग्राहं ददाति। नामानि ग्राहं ददाति। नामादेशं ददाति। नामान्यादेशं ददाति। नीचैःकारमाचष्टे, उच्चैःकारमाचष्ट इति घञा सिद्धम्। नीचैः कृत्वा, नीचैःकृत्येति क्त्वापि भवति। एवं तिर्यक्कारम्, तिर्यक् कृत्वा, तिर्यक्कृत्य। मुखतःकारम्, मुखतः कृत्वा, मुखतःकृत्य। मुखतोभावम्, मुखतो भूत्वा, मुखतोभूय। नानाकारम्, नाना कृत्वा, नानाकृत्य। द्विधाकारम्, द्विधा कृत्वा, द्विधाकृत्य। तूष्णीम्भावम्, तूष्णीं भूत्वा,

स्तिङिति प्रत्याहारार्थः। पचति, पचतः, पचन्ति ; पचसि, पचथः पचथ ; पचामि, पचावः, पचामः। पचते, पचेते, पचन्ते ; पचसे, पचेथे, पचध्वे ; पचे, पचावहे, पचामहे।

[ लस्य। तिप्तसझि०। पा० ३।४।७७-७८ ]

**अत आत इत्** ॥ २ ॥ [ स० क० ३।१।२ ]

अतः परस्य तिङामाकारस्य इदादेशो भवति। पचेते, पचेथे। पचेताम्, पचेथाम्। अत इति किम्? ददाते, दधाते। प्रकृतिग्रहणादिह न भवति ; पचानि।

[ आतो ङितः। अतो येयः। लोपो व्योर्वलि। पा० ७।२।८१, ८०; ६।१।६६ ]

**झोऽन्तः** ॥ ३ ॥ [ पा० ७।१।३, स० ३।१।३ ]

तिङां झकारस्यान्तादेशो भवति। पचन्ति, पचन्ते। यजन्ति, यजन्ते। यजन्तु, यजन्ताम्।

**द्विरुक्तादत्** ॥ ४ ॥

द्विरुक्तादुत्तरस्य तिङां झकारस्य अदादेशो भवति। जुह्वति, बिभ्यति। जुह्वतु।

[ अदभ्यस्तात्। पा० ७।१।४, स० ३।१।४ ]

**जक्षादिभ्यः पञ्चभ्यः** ॥ ५ ॥

जक्षादिभ्यः पञ्चभ्यः परस्य झकारस्य अदादेशो भवति। जक्षति, जाग्रति, दरिद्रति, चकासति, शासति। पञ्चभ्य इति किम्? द्विषन्ति।

[जक्षित्यादयः षट्। अदभ्यस्तात्। पा० ६।१।६, ७।१।४ ; जक्षादयश्चा शासः। स० १।१।७९]

**तङ्यनतः** ॥ ६ ॥

तङ्विषयस्य झकारस्यानतः परस्यादादेशो भवति। लुनते, लुनताम्। पुनते, पुनताम्। अनत इति किम्? पचन्ते।

तूष्णीम्भूय । अन्वग्भावम्, अन्वग् भूत्वा, अन्वग्भूय तिष्ठति । शक्नोति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम्, ग्लायति भोक्तुम्, घटते भोक्तुम्, आरभते भोक्तुम्, प्रक्रमते भोक्तुम्, लभते भोक्तुम्, उत्सहते भोक्तुम्, अर्हति भोक्तुम्, अस्ति भोक्तुम्, विद्यते भोक्तुमिति तुमुन् भावे क्रियायां तदर्थायाम् [ १।३।१६ ] इति सिद्ध एव । तथा पारयति भोक्तुम्, प्रभवति भोक्तुम्, प्रभुर्भोक्तुम्, समर्थो भोक्तुम्, पर्याप्तो भोक्तुम्, अलं भोक्तुमिति भवतेः सर्वत्र सम्भवात् सिद्धम् । यथा भोक्तुं मनः, श्रोतुं श्रोत्रम्, द्रष्टुं चक्षुः, योद्धुं धनुः; वक्तुं जडः, गन्तुं मन्दः, कर्तुमलस इति । *उच्चारणं तु वक्तुरायत्तम् ।

[नाम्न्यादिशिग्रहोः । पा० ३।४।५८, नाम्न्यादिशिग्रहिभ्याम् । सं० क० २।४।२७५ । अध्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । तिर्यच्यपवर्गे । स्वाङ्गे तस्प्रत्यये कृभ्वोः । नाधार्थप्रत्यये च्व्यर्थे । तूष्णीमि भुवः । अन्वच्यानुलोम्ये । शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । पर्याप्तिवचनेष्वलमर्थेषु । पा० ३।४।५९-६६, अध्ययेऽनभिप्रेताख्याने कृञः क्त्वा च । तिर्यच्यपवर्गे । स्वाङ्गतस्नाधार्थे भुवश्च । तूष्णीमि च । अन्वच्यानुलोम्ये । शकधृषज्ञारभलभसहार्हेच्छार्थेषु कर्मणस्तुमुन् । ग्लाघटास्त्यर्थसमर्थार्थकालसमयवेलासु च । सं० क० २।४।२७६-२८२ ]

इति चान्द्र व्याकरणे प्रथमाध्यायस्य तृतीयः पादः समाप्तः ।

---

लस्तिप्तस्झिसिप्थस्थमिप्वस्मस्तातांझथासाथांध्वमिट्वहिमहिङ् ॥ १ ॥ [ सं० ३।१।१ ]

लडादीनां लकारस्य स्थाने तिबादय आदेशा भवन्ति । पकारः पित्कार्यार्थः† । टकार इटोऽत् [ १।४।३८ ] ति चिह्नार्थः । ङकार-

---

* ०.८. भवतेः.

† पितीति विशेषणार्थः—पाठान्तरम् ।

वेद, विदतुः, विदुः ; वेत्थ, विदथुः, विद ; वेद, विद्व, विद्म। न च भवन्ति। वेत्ति, वित्तः, विदन्ति ; वेत्सि, वित्थः, वित्थ; वेद्मि, विद्वः, विद्मः।

**ब्रुवः पञ्चानामादित आह च ॥ १३ ॥**

ब्रुवः परेषां लडादेशानामतङां पञ्चानामादितो णलादय आदेशा वा भवन्ति, आहादेशश्च ब्रुवो भवति। आह, आहतुः, आहुः, आत्थ, आहथुः। न च भवन्ति। ब्रवीति, ब्रूतः, ब्रुवन्ति, ब्रवीषि, ब्रूथः। पञ्चानामिति किम्? ब्रूथ। आदित इति किम्? परेषां मा भूत्।

[ब्रुवः पञ्चानामादित आहो ब्रुवः। पा० ३।४।८४, ब्रुवः पञ्चानां पञ्चादितो ब्रुवश्चाहः। स० ३।१।१२]

**आतो णल औः ॥१४॥**

आकारान्तादुत्तरस्य णल औकारादेशो भवति। पपौ, तस्थौ।

[आत औ णलः। पा० ७।१।३४, स० ३।१।१३। C. avoids विधेयाविमर्श.]

**टित्तङामेत् ॥१५॥**

टितो लकारस्यादेशानां तङामन्तस्यैकारादेशो भवति। पचते, पचन्ते, पचध्वे। टित इति किम्? अपचत।

[टित आत्मनेपदानां टेरे। पा० ३।४।७९, टिदात्मनेपदानां टेरेत्। स० ३।१।१४]

**आमः ॥१६॥**

टिल्लकारस्य सम्बन्धिन आम एद्भवति। पचेते, पचेथे।

[पा० ३।४।७९, स० ३।१।१४]

**थासः से ॥१७॥** [पा० ३।४।८०, स० ३।१।१५]

टिल्लकारसम्बन्धिनस्थासः से आदेशो भवति। पचसे।

**लुट आद्यानां डारौरसः ॥१८॥**

[ आत्मनेपदेष्वनतः । पा० ७।१।५, स० ३।१।५ ]

**शीङो रत् ॥ ७ ॥** [ स० ३।१।६ ]

शीङः परस्य झकारस्य रदादेशो भवति । शेरते, शेरताम्, अशेरत ।

[ शीङो रुट् । पा० ७।१।६ ]

**वेत्तेर्वा ॥ ८ ॥** [ स० ३।१।७ ]

वेत्तेः परस्य झकारस्य रदादेशो वा भवति । संविद्रते, संविदते । लुग्विकरणः किम् ? विन्दतेर्मा भूत् । तङीत्येव । विदन्ति ।

[ वेत्तेर्विभाषा । पा० ७।१।७ ]

**लिट इरच् ॥ ९ ॥** [ ० इरेच् । स० ३।१।८ ]

लिडादेशस्य झकारस्य इरजादेशो भवति । पचिरे, शेकिरे* । तङीत्यव । पेचुः ।

[ लिटस्तझयोरेशिरेच् । पा० ३।४।८१ ]

**तस्यैश् ॥ १० ॥** [ स० ३।१।९ ]

लिडादेशस्य तकारस्यैशादेशो भवति । पेचे, शेके ।

[ पा० ३।४।८१ ]

**अतङां णलतुसुस्थलथुसणल्वमाः ॥ ११ ॥**

तङ्वर्जितानां लिडादेशानां णलादय आदेशा भवन्ति । पपाच, पेचतुः, पेचुः ; पपक्थ पेचिथ, पेचथुः, पेच ; पपाच, पेचिव, पेचिम ।

[ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । पा० ३।४।८२, स० ३।१।१० ]

**विदो लटो वा ॥ १२ ॥** [पा० ३।४।८३, वेत्तेः० । स० ३।१।११]

विदः परेषां लडादेशानामतङां णलादय आदेशा वा भवन्ति ।

---

* This शक् is divādi ubhayapadin, and is read as शक मृष क्षान्तौ iv, 118.

वेद, विदतुः, विदुः ; वेत्थ, विदथुः, विद ; वेद, विद्व, विद्म । न च भवन्ति । वेत्ति, वित्तः, विदन्ति ; वेत्सि, वित्थः, वित्थ; वेद्मि, विद्वः, विद्मः ।

**ब्रुवः पञ्चानामादित आह च ॥ १३ ॥**

ब्रुवः परेषां लडादेशानामतङां पञ्चानामादितो णलादय आदेशा वा भवन्ति, आहादेशश्च ब्रुवो भवति । आह, आहतुः, आहुः, आत्थ, आहथुः । न च भवन्ति । ब्रवीति, ब्रूतः, ब्रुवन्ति, ब्रवीषि, ब्रूथः । पञ्चानामिति किम् ? ब्रूथ । आदित इति किम् ? परेषां मा भूत् ।

[ ब्रुवः पञ्चानामादित आहो ब्रुवः । पा० ३।४।८४, ब्रुवः पञ्चानां पञ्चादितो ब्रुवश्चाहः । स० ३।१।१२ ]

**आतो णल औः ॥१४॥**

आकारान्तादुत्तरस्य णल औकारादेशो भवति । पपौ, तस्थौ ।

[आत औ णलः । पा० ७।१।३४, स० ३।१।१३। C. avoids विपर्यासविमर्श.]

**टिराङामेत् ॥१५॥**

टितो लकारस्यादेशानां तङामन्तस्यैकारादेशो भवति । पचते, पचन्ते, पचध्वे । टित इति किम् ? अपचत ।

[ टित आत्मनेपदानां टेरे । पा० ३।४।७९, टिदात्मनेपदानां टेरेत् । स० ३।१।१४ ]

**आमः ॥१६॥**

टिल्लकारस्य सम्बन्धिन आम एद्भवति । पचेते, पचेथे ।

[ पा० ३।४।७९, स० ३।१।१४ ]

**थासः से ॥१७॥** [ पा० ३।४।८०, स० ३।१।१५ ]

टिल्लकारसम्बन्धिनस्थासः से आदेशो भवति । पचसे ।

**लुट आद्यानां डारौरसः ॥१८॥**

**स्वो वामौ ॥२५॥**

लोडादेशाभ्यां सकारवकाराभ्यां परस्यैकारस्य व अमित्येतावादेशौ भवतः। पचस्व, पचध्वम्।

[ सवाभ्यां वामौ। पा० ३।४।९१, स० ३।१।२२ ]

**इडादीनामैप् ॥२६॥** [ स० ३।१।२३ ]

लोटः सम्बन्धिनामिडादीनामेत ऐव् भवति। करवै, करवावहै, करवामहै। पकारोऽदेङर्थः।

[ एत ऐ। पा० ३।४।९३ ]

**म्वोष्टाप् ॥२७॥**

लोटः सम्बन्धिनोर्व्मोः परतष्टाप् भवति। करवाव, करवाम। करवावहै, करवामहै। टकार आदेशविध्यर्थः, पकारोऽदेङ्भावार्थः।

[ आडुत्तमस्य पिच्च। पा० ३।४।९२, वमादीनां टाप्। स० ३।१।२४ ]

**तस्थस्थानां तान्तन्ता ङितश्च ॥२८॥**

ङितां लकाराणां लोटश्च तस् थस् थ इत्येतेषां तां तं त इत्येत आदेशा भवन्ति। अपचताम्, अपचतम्, अपचत, पचताम्, पचतम्, पचत।

[नित्यं ङितः। तस्थस्थमिपां तान्तन्तामः। पा० ३।४।९९, १०१, तस्थस्थवस्मसां तान्तन्तवमाः। ङितश्च। स० ३।१।२५-२६]

**वस्मसोर्लोपः ॥२९॥**

ङितां लकाराणां लोटश्च वस्मसोरन्त्यस्य लोपो भवति। अपचाव, अपचाम। पचाव, पचाम।

[ नित्यं ङितः। स उत्तमस्य। इतश्च लोपः परस्मैपदेषु। पा० ३।४।९९, ९८, ९७; तस्थस्थवस्मसां तान्तन्तवमाः। स० ३।१।२५ ]

**इतोऽतङि ॥३०॥**

लुडादेशानामाद्यानां त्रयाणां डारौरस आदेशा भवन्ति। पक्ता, पक्तारौ, पक्तारः।

[लुटः प्रथमस्य डारौरसः। पा० २।४।८५, स० ३।१।१६]

तङाम् ॥१९॥

तङामपि लुडादेशानामाद्यानां त्रयाणां डारौरस आदेशा भवन्ति। अध्येता, अध्येतारौ, अध्येतारः। एशादिलिङ्गादेस्त्वाभावः।

[पा० २।४।८५, स० ३।१।१६]

लोट एरुः ॥२०॥ [स० ३।१।१७]

लोडादेशस्य इकारस्य उकारादेशो भवति। पचतु, पचन्तु।

[एरुः। लोटो लङ्वत्। पा० ३।४।८६, ८५]

सेर्हिङ् ॥२१॥ [स० ३।१।१८]

लोडादेशस्य सिपो हिङादेशो भवति। जुहुधि, लुनीहि। ङकारोऽपित्त्वज्ञापनार्थः।

[सेर्ह्यपिच्च। पा० ३।४।८७]

आशिषि तुह्योस्तातङ् वा ॥२२॥ [स० ३।१।१९]

आशीर्विषये लोटः सम्बन्धिनोस्तुहीत्येतयोस्तातङ् वा भवति। जीवताद्भवान्, जीवतु भवान्। कुरुतात् त्वम्, कुरु त्वम्।

[तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्। पा० ७।१।३५]

मेरानिः ॥२३॥ [स० ३।१।२०]

लोडादेशस्य मिप आनिरादेशो भवति। पचानि, करवाणि।

[मेर्निः। पा० ३।४।८९]

आमेतः ॥२४॥ [पा० ३।४।९०, स० ३।१।२१]

लोडादेशस्यैकारस्याम्भवति। पचताम्, पचेताम्, पचन्ताम्।

[ लिङः सलोपोऽनन्त्यस्य । पा० ७।२।७९ ]

**झस्य रन्** ॥३७॥ [ पा० ३।४।१०५, स० ३।१।३२ ]

लिङादेशस्य झकारस्य रनादेशो भवति। पचेरन्, पक्षीरन्।

**इटोऽत्** ॥३८॥ [ पा० ३।४।१०६, स० ३।१।३३ ]

लिङादेशस्येटोऽदादेशो* भवति। पचेय, पक्षीय।

**सुट् तथोः** ॥३९॥ [ स० ३।१।३४, ०तिथोः—पा० ३।४।१०७ ]

लिङस्तकारथकारयोः सुड् भवति। पक्षीष्ट, पक्षीयास्ताम्, पक्षीष्ठाः।

**झेर्जुस्** ॥४०॥ [ पा० ३।४।१०८, स० ३।१।३७ ]

लिङो झेर्जुसादेशो भवति। पचेयुः, कुर्युः।

**सिचः** ॥४१॥ [ स० ३।१।३८ ]

सिचः परस्य झेर्जुसादेशो भवति। अकार्षुः।

[ सिजभ्यस्तविदिभ्यश्च । पा० ३।४।१०९ ]

**आतः** ॥४२॥ [ पा० ३।४।११० ]

आकारान्तादेव सिज्लुगन्तात् परस्य झेर्जुसादेशो भवति। अदुः, अधुः। अनाकारान्तान्न भवति। अभूवन्।

**लङो द्विषश्च वा** ॥४३॥

द्विष आकारान्ताच्च परस्य लङो झेर्जुसादेशो वा भवति। अद्विषुः, अद्विषन्। अयुः, अयान्।

[ लङः शाकटायनस्यैव। द्विषश्च। पा० ३।४।१११-११२, द्विषादभ्यो वा स० ३।१।४१ ]

**विदः** ॥४४॥

विदः परस्य लङो झेर्जुसादेशो भवति, नित्यं योगविभागात्। अविदुः।

* इटो अवादेशः—L.

ङितां लकाराणामतङ्विषयस्येकारस्य लोपो भवति। अपचत्, अपचन्। अकरिष्यत्, अकरिष्यन्।

[इतश्च। पा० ३।४।१००, इतो लोपः परस्मैपदानाम्। स० ३।१।२७]

**मिपोऽम् ॥३१॥** [स० ३।१।२८]

ङितां लकाराणां मिपोऽम् भवति। अकरवम्, अकार्षम्, अकरिष्यम्।

[तस्थस्थमिपां तान्तन्तामः। पा० ३।४।१०१]

**लिङः सीयुट् ॥३२॥** [पा० ३।४।१०२]

लिङादेशानां सीयुडागमो भवति। पक्षीष्ट, यक्षीष्ट।

[सीयुडात्मनेपदानाम्। स० ३।१।३१]

**यासुडतङः कित् ॥३३॥**

तङ्वर्जितस्य लिङादेशस्य यासुडागमो भवति, स च किद्वत्। भूयात्, भूयास्ताम्, भूयासुः। अतङ इति किम्? लविषीष्ट।

[यासुट् परस्मैपदेषूदात्तो ङिच्च। किदाशिषि। पा० ३।४।१०३-१०४, लिङो यासुट् ङिच्च। किदाशिषि। स० ३।१।२९-३०]

**ङिदनाशिषि ॥३४॥**

अनाशीर्विषये लिङो ङिद् यासुड् भवति। यजेत्, यजेताम्, यजेयुः। अनाशिषीति किम्? इज्यात्। अतङ इत्येव। यजेत।

[पा० ३।४।१०३, स० ३।१।२९]

**अत इय् ॥३५॥**

अतः परस्य यासुट इयादेशो भवति। पचेत्, पचेताम्, पचेयुः। अत इति किम्? कुर्यात्। अनाशिषीत्येव। चिकीर्ष्यात्।

[अतो येयः। पा० ७।२।८०, अतो य इय्। स० ३।१।३६]

**सो लोपोऽनन्त्यस्य ॥३६॥** [०अनाशिषि। स० ३।१।३५]

लिङोऽनन्त्यस्य सकारस्य लोपो भवति। कुर्यात्, कुर्याताम्। अनन्त्यस्येति किम्? कुर्युः। अनाशिषीत्येव। भूयास्ताम्, भूयासुः।

[ लिङः सलोपोऽनन्त्यस्य । पा० ७।२।७९ ]

**झस्य रन्** ॥३७॥ [ पा० ३।४।१०५, स० ३।१।३२ ]

लिङादेशस्य झकारस्य रनादेशो भवति। पचेरन्, पक्षीरन्।

**इटोऽत्** ॥३८॥ [ पा० ३।४।१०६, स० ३।१।३३ ]

लिङादेशस्येटोऽदादेशो* भवति। पचेय, पक्षीय।

**सुट् तथोः** ॥३९॥ [ स० ३।१।३४, ०तिथोः—पा० ३।४।१०७ ]

लिङस्तकारथकारयोः सुड् भवति। पक्षीष्ट, पक्षीयास्ताम्, पक्षीष्ठाः।

**झेर्जुस्** ॥४०॥ [ पा० ३।४।१०८, स० ३।१।३७ ]

लिङो झेर्जुसादेशो भवति। पचेयुः, कुर्युः।

**सिचः** ॥४१॥ [ स० ३।१।३८ ]

सिचः परस्य झेर्जुसादेशो भवति। अकार्युः।

[ सिजभ्यस्तविदिभ्यश्च । पा० ३।४।१०९ ]

**आतः** ॥४२॥ [ पा० ३।४।११० ]

आकारान्तादेव सिज्लुगन्तात् परस्य झेर्जुसादेशो भवति। अदुः, अधुः। अनाकारान्तान्न भवति। अभूवन्।

**लङो द्विषश्च वा** ॥४३॥

द्विष आकारान्ताच्च परस्य लङो झेर्जुसादेशो वा भवति। अद्विषुः, अद्विषन्। अयुः, अयान्।

[ लङः शाकटायनस्यैव। द्विषश्च । पा० ३।४।१११-११२, द्विषाद्भ्यो वा स० ३।१।४१ ]

**विदः** ॥४४॥

विदः परस्य लङो झेर्जुसादेशो भवति, नित्यं योगविभागात्। अविदुः।

---

* इटो अदादेशः—L.

[सिजभ्यस्तविदिभ्यश्च । पा० ३।४।१०९, विदभ्यस्ताभ्यां लङः । स० ३।१।४०]

अति ॥ ४५ ॥

अद्विषये लङो द्विरुक्ताज् जक्षादिभ्यश्च परस्य झेर्जुस् भवति । अविभरुः, अविभयुः । अजागरुः ।

[सिजभ्यस्तविदिभ्यश्च । पा० ३।४।१०९, सिजभ्यस्ताभ्याम् । स० ३।१।४०]

तङाना यथापाठम् ॥ ४६ ॥

तङश्च आनश्च यथापाठं क्रियार्थात् परे भवन्ति । वर्धते, वर्धमानः । वर्तते, वर्तमानः ।

[ अनुदात्तङित आत्मनेपदम् । पा० १।३।१२, कर्तर्यात्मनेभावेभ्यः । स० ३।१।४४]

भावाप्ययोः ॥ ४७ ॥

भावे तद्वदाप्ये चार्थे तङाना भवन्ति । भूयते, भूयमानम् । क्रियते कटः, क्रियमाणः कटः । पूर्वमुत्तरं च कर्तरि विधानम् ।

[भावकर्मणोः । पा० १।३।१३, आत्मनेपदानि भावकर्मणोः । स० ३।१।४२]

ङितः ॥ ४८ ॥ [ स० ३।१।४५ ]

ङितः क्रियार्थात् तङाना भवन्ति । पापच्यते, पापच्यमानः ।

विनिमये ॥ ४९ ॥

क्रियापरिवर्ते वर्तमानात् क्रियार्थात् तङाना भवन्ति । व्यतिलुनते, व्यतिपुनते ।

[कर्तरि कर्मव्यतिहारे । पा० १।३।१४, क्रियाव्यतिहारे । स० ३।१।४६ ]

न गतिहिंसाशब्दार्थहसः ॥ ५० ॥

क्रियाविनिमये वर्तमानेभ्यो गत्याद्यर्थेभ्यो हसश्च तङाना न भवन्ति । व्यतिगच्छन्ति, व्यतिघ्नन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति । कथम्

* The Madras ed. reads सिजभ्यस्ताल्लङः and the Trivandrum ed. reads सिजभ्यस्ताभ्यां लिङः. The second word is लङः and appears to be a part of the next rule.

व्यतिहरन्ते भारम्, व्यतिवहन्ते भारमिति ? नैतौ गत्यर्थौ । किं तर्हि ? देशान्तरप्रापणार्थौ । एवं संप्रहरन्ते राजान इति हरतिर्न हिंसार्थः । इतरेतरान्योन्यपरस्परयोगे तु शब्दान्तरेणाभिहितत्वात् क्रियाविनिमयस्य तङाना न भवन्ति । इतरेतरस्य व्यतिलुनन्ति । अन्योन्यस्य व्यतिलुनन्ति । परस्परस्य व्यतिलुनन्ति ।

[ न गतिहिंसार्थेभ्यः । इतरेतरान्योन्योपपदाच्च । पा० १।३।१५-१६, परस्परोपपदाच्च । १।३।१६।१ । प्रतिषेधे हसादीनामुपसंख्यानम् । १।३।१५।१, न गतिहिंसाशब्दार्थहसिभ्योऽह्ववहिभ्यः । इतरेतरान्योन्यपरस्परोपपदाच्च । स० ३।१।४७-४८ ; धर्मदासस्तु भाष्यार्थविरुद्धमेव व्यतिवहन्ते भारं व्यतिहरन्ते भारमित्युदाजहार । गोयीचन्द्रः ]

**नेर्विशः ॥ ५१ ॥** [ पा० १।३।१७, स० ३।१।४९ ]

नेर्विशेष्याद् विशस्तङाना भवन्ति । निविशते, न्यविशत । पष्ठ्या निर्देशः किम् ? मधुनि विशन्ति भ्रमराः ।

**परिव्यवात् क्रियः ॥ ५२ ॥**

पर्यादिपूर्वात् क्रीणातेस्तङाना भवन्ति । परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।

[ परिव्यवेभ्यः क्रियः । पा० १।३।१८, स० ३।१।५० ]

**विपराभ्यां जेः ॥ ५३ ॥** [ पा० १।३।१९, स० ३।१।५१ ]

एताभ्यां विशेष्याज् जयतेस्तङाना भवन्ति । विजयते, पराजयते । कथम्—बहुवि जयति वनम्, परा जयति सेनेति ? नात्र विपराशब्दाभ्यां जयतिर्विशेष्यते, अन्योन्यसाहचर्याद् वा प्रादिपरिपठितयोरिह ग्रहणम् ।

**आङो दः ॥ ५४ ॥** [ स० ३।१।५२ ]

आङ्पूर्वाद् ददातेस्तङाना भवन्ति । आदत्ते ।

[ आङो दोऽनास्यविहरणे । पा० १।३।२० ]

**न स्वप्रसारणे ॥ ५५ ॥**

प्रसारणे वर्तमानाद् ददातेस्तङाना न भवन्ति, तच्चेत् प्रसारणं

स्वस्य भवति। आस्यं व्याददाति। विपादिकां व्याददाति। नदी कूलं व्याददाति। स्वग्रहणं किम्? व्याददते पिपीलिकाः पतङ्गस्य मुखम्।

[ आङो यो ऽव्यसनक्रियस्य। स्वाङ्गकर्मकाच्च। पा० १।३।२०।१-२, न विकासस्वास्यप्रसारणयोः। स० ३।१।५३ ]

**गमेः क्षान्तौ॥ ५६॥**

आङ्पूर्वाद् गमेर्ण्यन्तात् क्षान्तौ वर्तमानात् तङाना भवन्ति। आगमयस्व तावत्। क्षान्ताविति किम्? आगमयति।

[ आगमेः क्षमायाम्। पा० १।३।२१।२, गमेः कालहरणे। स० ३।१।५४ ]

**नुप्रच्छः॥५७॥** [ स० ३।१।५५ ]

आङ्पूर्वान् नौतेः प्रच्छश्च तङाना भवन्ति। आनुते शृगालः। आपृच्छते गुरून्।

[ आङि नुप्रच्छ्योः। पा० १।३।२१।६ ]

**क्रीडोऽनुपरिभ्यां च॥ ५८॥** [ स० ३।१।५६ ]

क्रीडतेरनुपरिभ्यामाङा च युक्तात् तङाना भवन्ति। अनुक्रीडते, परिक्रीडते, आक्रीडते। इह कस्मान्न भवति—माणवकमनु क्रीडतीति? नात्र क्रीडतिरनुना युक्त इति न भविष्यति।

[ क्रीडोऽनुसंपरिभ्यश्च। पा० १।३।२१ ]

**समोऽकूजने॥ ५९॥** [ पा० १।१।२२।१, स० ३।१।५७ ]

संपूर्वात् क्रीडतेरकूजने तङाना भवन्ति। संक्रीडते। अकूजन इति किम्? संक्रीडन्ति शकटानि। कथं शिक्षते? शिक्षतिस्तङानवानेव। कथं शिक्षति? शक्तुमिच्छति, शिक्षति।

[शिक्षेर्जिज्ञासायाम्। पा० १।३।२१।३, शकेः सनो जिज्ञासायाम्। स० ३।१।५८]

**अपस्किरः॥ ६०॥** [ स० ३।१।५९ ]

अपपूर्वात् ससुट्कात् किरतेस्तङाना भवन्ति । अपस्किरते वृपभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा निवासार्थी । अपेति किम् ? उपस्किरन्तो लुनन्ति मद्रकाः । सुट् किम् ? अपकिरति ।

[ किरतेर्हर्षजीविकाकुलायकरणेषु । पा० १।३।२१।४ ]

**हृञो गतिशीले ॥ ६१ ॥**

हरतेर्गतिताच्छील्ये गम्यमाने तङाना भवन्ति । पैतृकमश्वा अनुहरन्ते । गतिग्रहणं किम् ? पितरमनुहरति ।

[हरतेर्गतताच्छील्ये । पा० १।३।२१।५, हृञो गतताच्छील्ये । स० ३।१।६०]

**आशिषि नाथः ॥ ६२ ॥** [ १।३।२१।७, स० ३।१।६१ ]

*आशिष्येव नाथस्तङाना भवन्ति । सर्पिषो नाथते । आशिषीति* किम् ? माणवकमुपनाथति ।

**शपः शपथे ॥ ६३ ॥** [ स० ३।१।६२ ]

शपतेः शपथक्रियार्थात् तङाना भवन्ति । देवदत्ताय शपते । अन्यत्र । देवदत्तं शपति ।

[ शप उपलम्भने । पा० १।३।२१।८ ]

**स्थः प्रतिज्ञानिर्णयप्रकाशनेषु ॥ ६४ ॥** [ स० ३।१।६३ ]

तिष्ठतेः प्रतिज्ञायां निर्णये प्रकाशने च गम्यमाने तङाना भवन्ति । नित्यं शब्दमातिष्ठते । त्वयि तिष्ठते विवादः । तिष्ठते कन्या छात्रेभ्यः ।

*[आङः स्थः प्रतिज्ञाने । पा० १।३।२२।१, प्रकाशनस्थेयाख्ययोश्च । १।३।२३]*

**संविप्रावात् ॥ ६५ ]**

सम् वि प्र अव इत्येवपूर्वात् तिष्ठतेस्तङाना भवन्ति । सन्तिष्ठते, वितिष्ठते, प्रतिष्ठते, अवतिष्ठते ।

[ समवप्रविभ्यः स्थः । पा० १।३।२२, समवप्रविभ्यश्च । स० ३।१।६४ ]

**उदोऽनूर्ध्वेहायाम् ॥ ६६ ॥**

उत्पूर्वात् तिष्ठतेरनूर्ध्वचेष्टायां वर्तमानात् तङाना भवन्ति। मुक्तावुत्तिष्ठते। अनूर्ध्व इति किम्? आसनादुत्तिष्ठति। ईहायामिति किम्? अस्माद् ग्रामाच्छतमुत्तिष्ठति।

[ उदोऽनूर्ध्वकर्मणि। पा० १।३।२४, उद ईहायाम्। १।३।२४।१, उदोऽनूर्ध्वचेष्टायाम्। स० ३।१।६५ ]

**उपान्मन्त्रेण ॥ ६७ ॥**

उपपूर्वात् तिष्ठतेस्तङाना भवन्ति, मन्त्रश्चेदस्य करणं भवति। सावित्र्या उपतिष्ठते। मन्त्रेणेति किम्? अश्वेनोपतिष्ठति राजानम्। तृतीयानिर्देशः किम्? सावित्रीमुपतिष्ठति।

[ उपान्मन्त्रकरणे। पा० १।३।२५, उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वक्तव्यम्। भाष्यम्। मन्त्रकरणात्। स० ३।१।६८ ]

**पथ्याराधनयोः ॥ ६८ ॥**

पथि कर्तर्याराधने च गम्यमान उपपूर्वात् तिष्ठतेस्तङाना भवन्ति। अयं पन्थाः स्रुघ्नमुपतिष्ठते। आदित्यमुपतिष्ठते; रथिकानुपतिष्ठते; महामात्रानुपतिष्ठते।

[उपाद्देवपूजासङ्गतिकरणमित्रकरणेषु। पथिकर्तृकात्। स० ३।१।६६-६७]

**वा लिप्सायाम् ॥ ६९ ॥** [ पा० १।३।२५।२, स० ३।१।६९ ]

उपपूर्वात् तिष्ठतेर्लिप्सायां गम्यमानायां तङाना वा भवन्ति। भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा।

**अव्याप्यात् ॥ ७० ॥**

व्याप्यरहितात् तिष्ठतेरुपपूर्वात् तङाना भवन्ति। भोजनकाल उपतिष्ठते। अव्याप्यादिति किम्? राजानमुपतिष्ठति।

[ अकर्मकाच्च। पा० १।३।२६, अकर्मकात्। स० ३।१।७० ]

**समो गमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशः ॥७१॥**

संपूर्वेभ्यो गम्यादिभ्यस्तङाना भवन्ति। संगच्छते, समृच्छते.

संपृच्छते, संस्वरते, संशृणुते, संवित्ते। वेत्तीति निर्देशात् संविन्दतीति न भवति। समारत, संपश्यते। अव्याप्यादित्येव। संगच्छति सुहृदम्।

[समो गम्यृच्छिभ्याम्। पा० १।३।२९, समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम्। अर्तिश्रुदृशिभ्यश्च। १।३।२९।१-२, समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः। काशिका। समो गम्यृच्छिप्रच्छिस्वृश्रुवेत्यर्तिदृशिभ्यः। स० ३।१।७१]

**प्रादिभ्योऽस्यूहो वा ॥७२॥**

प्रादिपूर्वाभ्यामस्यत्यूहिभ्यां तङाना वा भवन्ति। निरस्यते, निरस्यति। समूहते समूहति। अव्याप्यादित्येव। निरस्यति शत्रून्। समूहति पदार्थान्।

[उपसर्गादस्यत्यूह्योर्वावचनम्। पा० १।३।२९।३, उपसर्गादस्यत्यूहिभ्यां वा। स०। ३।१।७२। अनयोरकर्मकत्व एवात्मनेपदमित्यन्ये, तदयुक्तम्। तथाच सन्ततं तिमिरमिन्दुरुदास्ते [किरात० ९।२२] इति भारविः। जुमरः। अनयोरित्यादिना चन्द्रमते दूषणमाह। गोयीचन्द्रः।]

**आङो यमहनः स्वाङ्गाप्याच्च ॥७३॥**

आङ्पूर्वाभ्यां यमिहनिभ्यामव्याप्याभ्यां स्वाङ्गाप्याभ्यां च तङाना भवन्ति। आयच्छते, आहते। आयच्छते पादम्। आहत उदरम्*। अन्यस्मिन् व्याप्ये—आयच्छति रज्जुम्। आहन्ति वृपलम्। स्वग्रहणं किम्? देवदत्तो यज्ञदत्तस्य पाणिमाहन्ति।

[आङो यमहनः। पा० १।३।२८, स्वाङ्गकर्मकाच्च। १।३।२८।१, आङो यमहनः स्वाङ्गकर्मकाच्च। स० ३।१।७३]

**व्युदस्तपः ॥७४॥**

वेरुदश्च परात् तपतेरव्याप्यात् स्वाङ्गाप्याच्च तङाना भवन्ति। वितपते, उत्तपते। वितपते पाणिम्। उत्तपते पाणिम्। अव्याप्यात् स्वाङ्गाप्याच्चेत्येव। आदित्यः पृथिवीं वितपति। उत्तपति सुवर्णं

---

* उदः—पाठान्तरम्।

सुवर्णकारः। देवदत्तो यज्ञदत्तस्य हस्तमुत्तपति। व्युद इति किम्? नितपति।

[उद्विभ्यां तपः। पा० १।३।२७, स० ३।१।७४]

**तपआप्यात्** ॥७५॥

तपो व्याप्यं यस्य तस्मात् तपतेस्तङाना भवन्ति। तप्यते तपस्तापसः। तपः करोतीत्यर्थः।

[तपस्तपःकर्मकस्यैव। पा० ३।१।८८, तपःकर्मकाच्च। स० ३।१।७५]

**निसंव्युपेभ्यो ह्वः** ॥७६॥

नि सम् वि उप इत्येवंपूर्वाद् ह्वयतेस्तङाना भवन्ति। निह्वयते, संह्वयते, विह्वयते, उपह्वयते।

[निसमुपविभ्यो ह्वः। पा० १।३।३०, स० ३।१।७६]

**स्पर्धायामाङः** ॥७७॥ [पा० १।३।३१, स० ३।१।७७]

आङ्पूर्वाद् ह्वयतेः स्पर्धायां वर्तमानात् तङाना भवन्ति। मल्लो मल्लमाह्वयते। स्पर्द्धायामिति किम्। गामाह्वयति गोपालकः।

**सूचनावक्षेपणसेवासाहसयत्नकथोपयोगेषु कृञः** ॥७८॥

सूचनादिष्वर्थेषु करोतेस्तङाना भवन्ति। सूचनमपकारप्रयुक्तं परदोषाविष्करणम्, अवक्षेपणं तिरस्कारः, सेवा परचित्ताराधनम्*, साहसं यदबुद्धिपूर्वं करणम्, यत्नः सतो गुणान्तराधानम्, कथा कथनम्, उपयोगो धर्मादिप्रयोजने विनियोगः। सूचने तावत्। अयमिममुत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणे। श्येनो वर्तकामपकुरुते†।

* परवित्ताराधनम्—L.

† अपकुरुते—One MS., Tic. (iii.3.75), Durgād sa. अयकुरुते—Daṇḍanātha, Jakṣavarman (i 4.45). उपकुरुते—One MS, Durga, R T., Jainendra (Laghuvṛtti i.3.32). उदाकुरुते—Kās'ikā, Jumara, Bhaṭṭoji, Supadma (iii, 78) उत्कुरुते—Bhāṣāvṛtti, Jumara.

*भर्त्सयतीत्यर्थः । सेवायाम् । महामात्रान् प्रकुरुते, गणकान् प्रकुरुते । सेवत इत्यर्थः । साहसे । परदारान् प्रकुरुते । तेषु सहसा प्रवर्तत इत्यर्थः । यत्ने । काण्ड गुडस्योपस्कुरुते†। एधोदकस्योपस्कुरुते । तस्य गुणान्तराधानं करोतीत्यर्थः । कथायाम् । जनवादान् प्रकुरुते । प्रकर्षेण कथयतीत्यर्थः । उपयोगे । शतं प्रकुरुते । धर्मार्थं शतं विनियुङ्क्त इत्यर्थः ।

[गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । पा० १।३।३२, सूचनावक्षेपणसेवासाहसप्रतियत्नप्रकथनोपयोगेषु कृञः । स० ३।१।७८ ]

अधेः शक्तौ ॥७९॥

अधिपूर्वात् कृञः शक्तौ वर्तमानात् तङाना भवन्ति । तं ह्यधिचक्रे‡ । शक्ताविति किम् ? अधिकरोति ।

[ अधेः प्रसहने । पा० १।३।३३, स० ३।१।७९ ]

वेः शब्दाप्यात् ॥८०॥

विपूर्वात् कृञस्तङाना भवन्ति, शब्दश्चेदस्य व्याप्यं भवति । क्रोष्टा विकुरुते स्वरान् । शब्द इति किम् ? विकरोति मृदम् । आप्यादिति किम् ? शब्देन विकरोति मतिम् ।

[ वेः शब्दकर्मणः । पा० १।३।३४, स० ३।१।८० ]

अव्याप्यात् ॥८१॥

व्याप्यरहिताद् विपूर्वात् कृञस्तङाना भवन्ति । विकुर्वते सैन्धवाः । साधु दान्ताः शोभनं वल्गन्तीत्यर्थः ।

[ अकर्मकाच्च । पा० १।३।३५, अकर्मकात् । स० ३।१।८१ ]

पूजोत्सञ्जोपनयनज्ञानभृतिव्ययविगणनेषु नियः ॥८२॥

पूजादिष्वर्थेषु नयतेस्तङाना भवन्ति । पूजा सम्माननम् । नयते पाणिनिर्व्याकरणे । पूजामधिगच्छतीत्यर्थः । नयते चार्वी लोकायते ।

---

*. भर्त्सयति is found in the Kās'ika also The correct form as Maitreya Rakṣita points out, भर्त्सयते.

† काण्डगुणस्योपस्कुरुते—L. from MSS.

‡ तमधिचक्रे—काशिका ।

चार्वी बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी। स लोकायते पदार्थान्नयते, गमयति, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयति। ते युक्तिभिः स्थाप्यमानाः संमानिताः पूजिता भवन्ति। उत्सङ्ग उत्सञ्जनम्, उत्क्षेपणम्। माणवकमुदानयते। अधःस्थितं माणवकमुत्सङ्ग उत्क्षिपतीत्यर्थः। उपनयने। उपनयनमाचार्यक्रिया। माणवकमीदृशेन विधिना आत्मसमीपं प्रापयति, यथासावुपनेता स्वयमाचार्यः संपद्यते। माणवकमुपनयते। आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं संप्रापयतीत्यर्थः। ज्ञानं प्रमेयनिश्चयः। नयते कात्यायनो व्याकरणे। प्रमेयं निश्चिनोतीत्यर्थः।' भृतिर्वेतनम्। कर्मकरानुपनयते। भृतिदानेन समीपीकरोतीत्यर्थः। व्ययो धर्मादिषु विनियोगः। शतं विनयते। विनियुङ्क्त इत्यर्थः। विगणनमृणादिनिर्यातनम्। मद्रकाः कारं विनयन्ते। निर्यातयन्तीत्यर्थः। कर एव कारः, राजग्राह्यो भागः कर्षकैः रक्षार्थं परिकल्पितः।* एतेष्विति किम्? अजां नयति ग्रामम्।

[सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। पा० १।३।३६
पूजोत्सञ्जनाचार्यकरणज्ञानभृतिविगणव्ययेषु नियः। स० ३।१।८२]

**कर्तृस्थामूर्ताप्यात्** ॥८३॥

कर्तृस्थममूर्तमकठिनं व्याप्यं यस्य तस्मान्नयतेस्तङानो भवन्ति। क्रोधं विनयते। मन्युं विनयते। कर्तृस्थ इति किम्? देवदत्तो यज्ञदत्तस्य मन्युं विनयति। अमूर्त इति किम्? गण्डुं विनयति। आप्यादिति किम्? बुद्ध्या विनयति।

[कर्तृस्थे चाशरीरे कर्मणि। पा० १।३।३७, कर्तृस्थामूर्तकर्मकाच्च। स० ३।१।८३]

•वृत्त्युत्साहतायनेषु क्रमः ॥८४॥ [०त्सर्गतायने०। पा० १।३।३८]

वृत्त्यादिष्वर्थेषु क्रमस्तङानो भवन्ति। वृत्तिरप्रतिबन्धः। उत्साहोऽवैक्लव्यम्*। तायनं स्फीतता। वृत्तौ। ऋक्ष्वस्य क्रमते बुद्धिः।

---

* It is curious Candra retains the rather unintelligible वृत्ति.

† वैक्लव्यम् is hardly correct.

न प्रतिहन्यत इत्यर्थः। उत्साहे। व्याकरणाध्ययनाय क्रमते। उत्सहत इत्यर्थः। तायने। नीतिमति श्रियः क्रमन्ते। प्राज्ञे शास्त्राणि क्रमन्ते। स्फीतीभवन्तीत्यर्थः।

[अप्रतिबन्धोत्साहतायनेषु क्रमः। स० ३।१।८४]

**परोपात्** ॥८५॥

परोपाभ्यामेव प्रादिभ्यां परात् *क्रमतेर्वृत्त्यादिष्वर्थेषु तङाना भवन्ति। पराक्रमते, उपक्रमते। परोपादिति किम्? संक्रामति। वृत्त्यादिष्वित्येव। पराक्रामति।

[उपपराभ्याम्। पा० १।३।३९, स० ३।१।८५]

**आङो ज्योतिरुद्गतौ** ॥८६॥

आङ्पूर्वात् *क्रमतेर्ज्योतिरुद्गमने वर्तमानात् तङाना भवन्ति। आक्रमते सूर्यः। ज्योतिरिति किम्? आक्रामति धूमः। उद्गताविति किम्? अग्निरिन्धनमाक्रामति।

[आङ उद्गमने। पा० १।३।४०, ज्योतिषामुद्गमने। १।३।४०।१, आङो ज्योतिरुद्गमने। स० ३।१।८६]

**वेः पादाभ्याम्**† ॥८७॥

विपूर्वात् *क्रमतेस्तङाना भवन्ति, पादाभ्यां चेत् सा क्रिया क्रियते। साधु विक्रमते। पादाभ्यामिति किम्? अश्वेन विक्रामति।

[वेः पादविहरणे। पा० १।३।४१, स० ३।१।८७]

**प्रोपादारम्भे** ॥८८॥

प्रोपाभ्या परात् क्रमतेरारम्भे तङाना भवन्ति। प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम्। अङ्गीकरणमप्यारम्भ एव। प्रक्रमते शुश्रूषाम्।

---

*This is the reading found in the printed books on grammar under the rules 87-89, but the correct form is either क्रामतेः or क्रमेः.

† Candra uses पादाभ्याम् instead of पद्भ्याम् probably because he had in his mind पाद used by Pāṇini.

आरम्भ इति किम्? पूर्वेद्युः प्रक्रामति, गच्छतीत्यर्थः। *अपरेद्युरुपक्रामति, आगच्छतीत्यर्थः।

[ प्रोपाभ्यां समर्थाभ्याम्। पा० १।३।४२, प्रोपाभ्यामारम्भे। स० ३।१।८८]

अप्रादेर्वा ॥८९॥

प्रादिरहितात् क्रमतेस्तङाना भवन्ति वा। क्रमते, क्रामति। अप्रादेरिति किम्? सङ्क्रामति।

[ अनुपसर्गाद्वा। पा० १।३।४३, स० ३।१।८९]

निह्नवे ज्ञः ॥९०॥

जानातेर्निह्नवे वर्तमानात् तङाना भवन्ति। निह्नवोऽपह्नवः, अपलापः। सप्रादिश्च निह्नवे वर्तते, न केवलः। शतमपजानीते। अपलपतीत्यर्थः। निह्नव इति किम्? न त्वं किञ्चिदपि जानासि।

[ अपह्नवे ज्ञः। पा० १।३।४४, स० ३।१।९० Candra saves a syllable by changing अपह्नव into the less frequent निह्नव ]

अव्याप्यात् ॥९१॥

व्याप्यरहिताज् जानातेस्तङाना भवन्ति। सर्पिषो जानीते। सर्पिषा उपायेन प्रवर्तत इत्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ सर्पिरादि करणमपि सम्बन्धेन विवक्षितमिति षष्ठी। अव्याप्यादिति किम्? स्वरेण पुत्रं जानाति।

[ अकर्मकाच्च। पा० १।३।४५, स० ३।१।९१ ]

संप्रतेरस्मृतौ ॥९२॥

समः प्रतेश्च परात् जानातेरस्मरणे वर्तमानात् तङाना भवन्ति। संजानीते, प्रतिजानीते। अस्मृताविति किम्? मातुः संजानाति।

* परेद्युः—I. from MSS. The Kāśikā, Durgavṛtti etc show the correct reading. Sṛṣṭidhara's Bhāṣāvṛttyarthavivṛti has परेद्युः, but that is a very late work. Candra himself does not sanction परेद्युः

[संप्रतिभ्यामनाध्याने। पा० १।३।४६, स० ३।१।९९. आध्यान had evidently become archaic by the time of Candra, besides स्मृति is shorter. ]

ज्ञानयत्नोपच्छन्दनेषु वदः ॥९३॥

ज्ञानादिष्वर्थेषु वदतेस्तङाना भवन्ति। वदते पतञ्जलिर्व्याकरणे। ज्ञानपूर्वकं वदतीत्यर्थः। भासनमपि ज्ञानपूर्वकमेवेति न पृथग् वाच्यम्। यत्ने। कोऽस्मिन् क्षेत्रे वदते ? उपच्छन्दने। कर्मकरानुपवदते। परदारानुपवदते।

[भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः। पा० १।३।४७, भासनोपसान्त्वनज्ञानयत्नोपमन्त्रणेषु वदः। स० ३।१।९३]

अनोरव्याप्यात् ॥९४॥

अनुपूर्वाद् व्याप्यरहिताद् वदतेस्तङाना भवन्ति। अनुवदते कटः कालापस्य। अव्याप्यादिति किम्? पूर्वमेव यजुरुदितमनुवदति।

[अनोरकर्मकात्। पा० १।३।४९, अनुसंभ्यामकर्मकात्। स० ३।१।९४]

विमतौ ॥९५॥ [स० ३।१।९५]

नानामतौ वदतेस्तङाना भवन्ति। गेहे विवदन्ते।

व्यक्तं सहोक्तौ ॥९६॥

व्यक्ताक्षरं सहोच्चारणे वदतेस्तङाना भवन्ति। संप्रवदन्ते ग्राम्याः। व्यक्तमिति किम्? वरतनु संप्रवदन्ति कुक्कुटा [महाभाष्यम् १।३।४८]*। सहोक्ताविति किम्? वदति ब्राह्मण।

[व्यक्तवाचां समुच्चारणे। पा० १।३।४८, व्यक्तवाचां सहोक्तौ। स० ३।१।९६]

तयोर्वा ॥९७॥ [स० ३।१।९७]

विमतौ व्यक्तं सहोक्तौ चैकत्र विवक्षितायां वदतेस्तङाना भवन्ति

* अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः॥
अपनय पादसरोजमङ्कुतः शिथिलय बाहुलतां गलादृताम्।
इत्र च वदनेऽशुकमाकुलीकृतं वरतनु संप्रवदन्ति कुक्कुटाः॥

वा। विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति मौहूर्ताः। विमतावित्येव। संप्रवदन्ते ग्राम्याः। व्यक्तमित्येव। विप्रवदन्ति शकुनयः। सहोक्तावित्येव। *एकैकशो विप्रवदन्ते मौहूर्ताः।

[विभाषा विप्रलापे। पा० १।३।५०]

**अवाद्ग गिरः** ॥९८॥ [स० ३।१।९८, ०श्रः—पा० १।३।५१]

अवपूर्वाद् गिरतेस्तङाना भवन्ति। अवगिरते। अवादिति किम्? गिरति। गिर इति निर्देशादिह न भवति। अवगृणाति।

**समः प्रतिज्ञायाम्** ॥९९॥ [स० ३।१।९९]

संपूर्वाद् गिरतेः प्रतिज्ञायां गम्यमानायां तङाना भवन्ति। शतं संगिरते। प्रतिज्ञायामिति किम्? संगिरति। सम इति किम्? शतं गिरति।

[समः प्रतिज्ञाने। पा० १।३।५२]

**किरादिश्रन्थग्रन्थसनामाप्ये** ॥१००॥

किरादिभ्यः श्रन्थादिभ्यश्चाप्ये कर्तरि तङाना भवन्ति। अवकिरते हस्ती स्वयमेव। श्रथ्नीते माला स्वयमेव। ग्रथ्नीते माला स्वयमेव। चिकीर्षते कटः स्वयमेव। आप्य इति किम्? अवकिरति हस्ती हस्तिपकम्।

[भूषाकर्मकिरतिसनां चान्यत्रात्मनेपदात्। पा० ३।१।८७।१८, णिश्रिग्रन्थात्मनेपदाकर्मकभूषाकर्मकिरादिश्रन्थग्रन्थसन्स्नुनमिभ्यश्चिण् च। स० १।३।१०५]

**लुङचः** ॥१०१॥

लुङ्विषये अजन्ताद् व्याप्ये कर्तरि तङाना भवन्ति। अहोष्ट हविः स्वयमेव, अजेष्ट रोगः स्वयमेव। लुङीति किम्? जुहुत इति मा भूत्। अच इति किम्? अघस्तोति मा भूत्। आप्य इत्येव। अहौषीत्।

[अचः कर्मकर्तरि। पा० ३।१।६२, स० १।३।९५]

* Following the noble example of the Bhāṣyakāra our Vṛttikāra uses एकैकशः.

**स्नुनमः स्वयम्** ॥१०२॥

स्नुनमिभ्याम् अनन्यप्रेरिते कर्तरि तङाना भवन्ति। प्रस्नुते गौः स्वयमेव। नमते दण्डः स्वयमेव। स्वयमिति किम्? प्रस्नौति गौर्दोग्धुः कौशलेन। नमति पल्लवो वातेन।

[न दुहस्नुनमां यक्चिणौ। पा० ३।१।८९]

**सृजः श्राद्धे** ॥१०३॥

सृजतेः श्रद्धोपपन्ने कर्तरि तङाना भवन्ति। ससृजे मालां धार्मिकः। श्राद्ध इति किम्? ससर्ज मालां मालिकः।

[सृजियुज्योः श्यंस्तु। पा० ३।१।८७।१५, सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद् भवतीति वक्तव्यम्। श्यंस्तु भवति। सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यश्चिदगात्मनेपदार्थः। भाष्यम्। सृजः श्रद्धावति। स० ३।१।१००]

**शे श्यन्** ॥१०४॥

शविषये सृजतेः श्राद्ध कर्तरि श्यन् भवति। सृज्यते मालां धार्मिकः। श्राद्ध इत्येव। सृजति मालां मालिकः।

[सृजः श्राद्धे। स० १।३।१११]

**लुङि ते चिण्** ॥१०५॥

लुङि तभूते परतः सृजः श्राद्ध कर्तरि चिण् भवति। असर्जि मालां धार्मिकः। त इति किम्? असृक्षातां मालां धार्मिकौ। श्राद्ध इत्येव। व्यत्यसृष्ट मालां मालिकसमूहः। कथम्—मासं युज्यते ब्रह्मचारीति? दैवादिकेन सिद्धम्।

[दोषेभ्यो नित्यम्। स० १।३।९७]

**उदश्चरः साप्यात्** ॥१०६॥

उत्पूर्वाच्चिचरतेर्व्याप्यियुक्तात् तङाना भवन्ति। गेहमुच्चरते। साप्यादिति किम्? धूम उच्चरति।

[उदश्चरः सकर्मकात्। पा० १।३।५३, स० ३।१।१०१]

**समस्तृतीयायुक्तात्** ॥१०७॥ [पा० १।३।५४, स० ३।१।१०२]

समो विशेष्याच्चरतेस्तृतीयान्तेन युक्तात् तङाना भवन्ति। रथेन

सञ्चरते । सम इति किम् ? रथेन चरति । तृतीयायुक्तादिति किम् ? उभौ लोकौ संचरसि, इमं चामुं च देवल* ।

**दाणः सा चेच्चतुर्थ्यर्थे** ॥१०८ ॥

समो विशेष्याद् दाणस्तृतीयान्तेन-युक्तात् तङाना भवन्ति, सा चेत् तृतीया चतुर्थ्यर्थे भवति । दास्या सम्प्रयच्छते । सम्प्रदानस्य करणत्व-विवक्षायामियं तृतीया । सा चेयमशिष्टव्यवहार एव लौकिकी विवक्षा, तत्र तस्याः-साधकतमत्वात् । सा चेच्चतुर्थ्यर्थ इति किम् ? दास्या सम्प्रयच्छति भिक्षाम् । तृतीयायुक्तादित्येव । दास्यै सम्प्रयच्छति भिक्षाम्† ।

[ दाणश्च सा० । पा० १।५।५५, स० ३।१।१०३]

**उपयम उद्वाहे** ॥१०९॥

उपपूर्वाद् यम उद्वाहे वर्तमानात् तङाना भवन्ति । कन्यामुपयच्छते । उद्वाह इति किम् ? शाटकमुपयच्छति ।

[ उपाद्यमः स्वकरणे । पा० १।३।५६, उपाद्यमः स्वीकारे । स० ३।१।१०४। इह कस्मान्न भवति - स्वं शाटकान्तमुपयच्छतीति ? अस्वं यदा स्वं करोति तदा भवितव्यम् । यद्येवं स्वीकरण इति प्राप्नोति । विचित्रास्तद्धितवृत्तयः, नातस्तद्धित उत्पद्यते । महाभाष्यम् । पाणिग्रहणविशिष्टमिह स्वीकरणं गृह्यते, न स्वकरणमात्रम् । काशिका । The example in the Vṛtti goes directly against the Bhāsya ]

**आमः कृञः प्राग्वत्** ॥११०॥ [स० ३।१।१०५]

आमन्तात् परात् करोतेराम. पूर्वस्याः प्रकृतेर्यथा दृष्टास्तथा तङाना

* देवलः—L. from MSS. But the hemistich is found in the *Kāśikā*, *Kātantralaghuvṛtti* ( सञ्चरति . देवल. ), *Hṛdayahāriṇī*, Goyīcandravivaraṇī ( सञ्चरति देवलः) etc. and everywhere the last word is देवल and not देवलक which would be prejudicial to the metre One MS. of the Bhāṣavṛttyarthavivṛti reads नारदः for देवलः.

† मालाम्—पाठान्तरम् ।

भवन्ति, न भवन्ति च। ईहाञ्चक्रे। ईक्षाञ्चक्र। बिभराञ्चक्र, बिभराञ्चकार। जागराञ्चकार। कृञ इति किम्? ईहाम्बभूव।

[आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य। पा० १।३।६३]

**सनः** ॥ १११ ॥ [स० ३।१।१०६]

उक्ते वक्ष्यमाणे च प्रकरणे सनन्तात् प्राग्वत् तङाना भवन्ति, यथा प्रकृतेर्दृष्टाः। आस्ते, आसिसिषते। भुङ्क्ते, बुभुक्षते।

[पूर्ववत् सनः। पा० १।३।६२]

**स्मृदृशः** ॥ ११२ ॥

स्मृदृशिभ्यां सनन्ताभ्यां तङाना भवन्ति। सुस्मूर्षते, दिदृक्षते।

[ज्ञाश्रुस्मृदृशां सनः। पा० १।३।५७, स्मृदृशिभ्याम्। स० ३।१।१०७]

**अननोर्ज्ञः** ॥ ११३ ॥ [स० ३।१।१०८]

अनुरहिताज् जानातेः सनन्तात् तङाना भवन्ति। जिज्ञासते धर्मम्। अननोरिति किम्? पुत्रमनुजिज्ञासति।

[नानोर्ज्ञः। पा० १।३।५८]

**श्रुवोऽनाङ्प्रतेः** ॥ ११४ ॥ [स० ३।१।१०९]

आङ्प्रतिरहिताच्छृणोतेः सनन्तात् तङाना भवन्ति। शुश्रूषते गुरून्। अनाङ्प्रतेरिति किम्? आशुश्रूषति, प्रतिशुश्रूषति।

[प्रत्याङ्भ्यां श्रुवः। पा० १।३।५९]

**शदेः शिति** ॥ ११५ ॥ [स० ३।१।११०, ०शितः। पा० १।३।६०]

शदेः शिद्विषये तङाना भवन्ति। शीयते। शितीति किम्? शत्स्यति।

**मृङो लुङ्लिङोश्च** ॥ ११६ ॥ [स० ३।१।१११, म्रियतेः ०— पा० १।३।६१]

म्रियतेर्लुङ्विषये लिङ्विषये शिद्विषये च तङाना भवन्ति। अमृत, मृषीष्ट, म्रियते। एतेष्विति किम्? ममार।

**प्रादेरजाद्यन्ताद् युजेरयज्ञपात्रेषु** ॥ ११७ ॥ [उपसर्गादजाद्यन्ताद् ०—स० ३।१।११२]

प्रादिभ्योऽजादिभ्योऽजन्तेभ्यश्च पराद् युजेस्तङाना भवन्ति, यज्ञपात्रविषयश्चेदस्य प्रयोगो न भवति। उपयुङ्क्ते, नियुङ्क्ते, उद्युङ्क्ते, प्रयुङ्क्ते। अजाद्यदन्तादिति किम् ? संयुनक्ति। अयज्ञपात्रेष्विति किम् ? यज्ञपात्राणि प्रयुनक्ति।

[प्रोपाभ्यां युजेरयज्ञपात्रेषु। पा० १।३।६४, स्वराद्यन्तोपसृष्टादिति वक्तव्यम्। भाष्यम्।]

**समः क्ष्णुवः** ॥ ११८ ॥ [ पा० १।३।६५, स० ३।१।११३ ]

संपूर्वात् क्ष्णुतेस्तङाना भवन्ति। संक्ष्णुते शस्त्रम्।

**भुजोऽपालने** ॥ ११९ ॥

भुजोऽनवने वर्तमानात् तङाना भवन्ति। भुङ्क्ते। अपालन इति किम् ? भुनक्ति पृथिवीं राजा।

आरोहयते हस्ती स्वयमेव, दर्शयते राजा स्वयमेवेति फलवति [ १।४।१२४ ] इति तङ्। फलमस्य सुवासिका। अन्यथा हि हस्तिपकैः पीड्येत [हस्ती], न संरञ्जयेच्च भृत्यान् राजा। अचित्तेष्वपि क्रियाफलविवक्षा भवति, यथा शोषयते व्रीहीनातप इति, किं पुनः सचित्ते ?

[ भुजोऽनवने। पा० १।३।६६, भुनक्तेरनवने। स० ३।१।११४। अपालन though containing more matras, is distinctly simpler than अनवन. In the Durghatavrtti we find : चान्द्रास्तु भुजो भक्ष इत्येवमाहुः। Was there another recension of Candra's work and was Vopadeva following this when he framed his rule भुजोऽशने ? Sākaṭāyana (i. 4. 12 ) reduces the no. of sylls by changing अनवन into अत्राण, but Jainendra who preceded him had already laid down भुजोऽत्रे I. 2. 75. Hc. follows S' and says भुनजोऽत्राणे iii. 3. 37. Supadma (iii. I. 105 follows. C. It is interesting to note that the rucādi of Katantra grammar has the rule अशने भुजिः ii. 74. 59.

णेरणौ यत् कर्म णौ चेत् स कर्तानाध्याने। पा० १।३।६७, स० ३।१।११५]

**प्रयोजकाद् भीस्मेर्णः** ॥ १२० ॥

प्रयोजकतो यौ भीस्मी ताभ्यां परो यो णिच् तदन्तात् तङाना भवन्ति। मुण्डो भीषयते। जटिलो विस्मापयते। प्रयोजकादिति किम् ? कुञ्चिकयैनं भाययति।

[भीस्म्योर्हेतुभये। पा० १।३।६८, भीस्मिभ्यां हेतुभयोस्तदर्थे। स० ३।१।११६]

**गृधिवञ्चः प्रलम्भने** ॥ १२१ ॥

गृधिवञ्चिभ्यां ण्यन्ताभ्यां प्रलम्भने वर्तमानाभ्यां तङाना भवन्ति। माणवकं गर्धयते। माणवकं वञ्चयते। प्रलम्भन इति किम् ? श्वानं गर्धयति। अहिं वञ्चयति।

[गृधिवञ्च्योः प्रलम्भने। पा० १।३।६९, स० ३।१।११७]

**लियः पूजाभिभवयोश्च** ॥ १२२ ॥ [स० ३।१।११८]

लीयतेर्लिनातेर्वा ण्यन्तात् पूजायां गम्यमानायामभिभवे प्रलम्भने च तङाना भवन्ति। जटाभिरालापयते। पूजामधिगच्छतीत्यर्थः। श्येनो-वर्तकाम् अपलापयते*। अभिभवतीत्यर्थः। कस्त्वामुल्लापयते ? कस्त्वां †विसंवादयतीत्यर्थः। पूजादिष्विति किम् ? घृत विलीनयति।

[लियः सम्माननशालीनीकरणयोश्च। पा० १।३।७०]

**मिथ्यायोगे कृञोऽभ्यासे** ॥ १२३ ॥

मिथ्याशब्देन योगे कृञो ण्यन्तात् पौनःपुन्ये तङाना भवन्ति। पदं मिथ्या कारयते। मिथ्यायोग इति किम् ? पदं साधु कारयति। कृञ इति किम् ? पदं मिथ्या वाचयति। अभ्यास इति किम् ? सकृत् पदं मिथ्या कारयति।

[मिथ्योपपदात् कृञोऽभ्यासे। पा० १।३।७१, स० ३।१।११९]

**फलवति** ॥ १२४ ॥ [स० ३।१।१२०]

---

* उपलापयते v. l. उल्लापयते—काशिका, दुर्गवृत्तिः, हृदयहारिणी etc, अपलापयते—शब्दार्णवचन्द्रिका (जै० १।२।८०), चिन्तामणिः (शा० १।४।६२) हैमः (३।३।९०)

† प्रलम्भयतीत्यर्थं—पाठान्तरम्।

ण्यन्तात् फलवति कर्तरि तङाना भवन्ति। कारयते। फलवतीति किम्? कारयति।

[णिचश्च। पा० १।३।७४]

**पाठे विभाषितात्॥ १२५॥** [स० क० ३।१।१२१.]

पाठे विभाषिततङानेभ्यः फलवति कर्तरि तङाना भवन्ति। पचते, कुरुते। पाठे इति किम्? क्रमते क्रामतीति विभापि फलवत्सम्बन्धेन तङाना भवन्ति। फलवतीत्येव। पचन्ति कर्मकराः।

[स्वरितञितः कर्त्रभिप्राये क्रियाफले। पा० १।३।७२। पुत्रकर्तव्ये पितुर्वं पोत्सर्गादावपि करिष्य इत्यभिलापं चान्द्राः कुर्वन्ति। न्यायपञ्चाननः।]

**ञितः॥ १२६॥** [स० क० ३।१।१२२]

ञितः क्रियार्थात् फलवति कर्तरि तङाना भवन्ति। कण्डूयते। अन्यत्र कण्डूयति।

[पा० १।३।७२]

**अपवदः॥ १२७॥** [स० क० ३।१।१२३]

अपपूर्वाद् वदः फलवति कर्तरि तङाना भवन्ति। अपवदते। अन्यत्रापवदति।

[अपाद्वदः। पा० १।३।७३]

**समुदाङ्भ्यो यमेरग्रन्थे॥ १२८॥** [स० क० ३।१।१२४]

सम् उद् आङ् इत्येवं पूर्वाद् यमेरग्रन्थविषये फलवति कर्तरि तङाना भवन्ति। व्रीहीन् संयच्छते। भारमुद्यच्छते। रज्जुमायच्छते, अन्यत्र, व्रीहीन् संयच्छति। अग्रन्थ इति किम्? उद्यच्छति चिकित्सां वैद्यः।

[समुदाङ्भ्यो यमोऽग्रन्थे। पा० १।३।७५]

**अप्रादेर्ज्ञः॥ १२९॥**

प्रादिरहिताज् जानातेः फलवति कर्तरि तङाना भवन्ति। गां जानीते। अन्यत्र, गां जानाति। अप्रादेरिति किम्? स्वर्गलोकं प्रजानाति।

[ अनुपसर्गाज् ज्ञः । पा० १।३।७६, स० २।१।१२५ ]

**शब्दान्तरगतौ वा** ॥ १३० ॥ [ स० क० ३।१।१२६ ]

शब्दान्तरेण गम्यमानायां कर्तुः क्रियाफलवत्तायां तङाना भवन्ति वा। स्वं कटं कारयते, स्वं कटं कारयति। स्वं यज्ञं यजते, स्वं यज्ञं यजति। एवं सर्वत्र।

[ विभाषोपपदेन प्रतीयमाने। पा० १।३।७७]

**नानुपराभ्यां कृञः** ॥ १३१ ॥

अनुपराभ्यां विशेष्यात् कृञः फलवति कर्तरि तङाना न भवन्ति। अनुकरोति, पराकरोति। कथम्—गङ्गामनु कुरुते तप इति? नात्र करोतिरनुना विशेष्यः।

[ अनुपराभ्यां कृञः। पा० १।३।७९, स० ३।१।१३०। अस्मिन् प्रकरणे पठितत्वात् कर्त्रभिप्रायफले प्राप्तस्यायं निषेध इति चन्द्रादिसम्मतम्। अन्ये त्वाहुः—न ह्यत्र प्रकरणनियमोऽपेक्षितः, तथाहि रमेः स्वरितेत्यादिना सूत्रेणाप्राप्तमेवात्मनेपदं निषिध्यते। गोयीचन्द्रः। ]

**प्रत्यत्यभीनां क्षिपः** ॥ १३२ ॥

प्रति अति अभि इत्येतेषां विशेष्यात् क्षिपः फलवति कर्तरि तङाना न भवन्ति। प्रतिक्षिपति, अतिक्षिपति, अभिक्षिपति। षष्ठीनिर्देशः किम्? माणवकं प्रति क्षिपते।

[अभिप्रत्यतिभ्यः क्षिपः। पा० १।३।८०, स० ३।१।१३१- Candra saves one syllable.]

**प्राद् वहः** ॥ १३३ ॥ [ पा० १।३।८१, स० ३।१।१३२ ]

प्रपूर्वाद् वहः फलवति कर्तरि तङाना न भवन्ति। प्रवहति। प्रादिति किम्? वहते*।

**परेर्मृषश्च** ॥ १३४ ॥ [ स० ३।१।१३३, ० मृषः। पा० १।३।८२ ]

परेर्विशेष्यात् मृषो वहश्च फलवति कर्तरि तङाना न भवन्ति। परिमृष्यति, परिवहति। कथम्—माणवकं परि मृष्यते, वनं परि वहत इति? नैतौ परेर्विशेष्यौ।

* प्रादिति किम्? आवहते। काशिका।

[परेः । जैनेन्द्रः । १।२।९३ (लघुवृत्तिः) । वहतिमपि केचिदत्रानुवर्तयन्ति । काशिका । परे वहेश्चेत्येके । संक्षिप्तसारसूत्रम् । परिपूर्वादपि वहेर्निषेध इति चन्द्रः, न तद्वहुसम्मतम् । गोयीचन्द्रः । परिग्रहपरिमृषः । सुपद्म० ३।१।१३० । यद्यपि ग्राह्वह इति सूत्रितं मुनिना, प्रवहन्त सदामोदम् इति प्रयुक्तञ्च भट्टिना [८।५२], तथापि चान्द्रमतमाश्रित्य परिप्रवह इत्युक्तम् । मकरन्दः । ]

**रमो व्याङोश्च** ॥ १३५ ॥

व्याङोः परेश्च विशेष्याद् रमस्तङाना न भवन्ति । विरमति, आरमति, परिरमति । कथम्—गृहं परि रमत इति ? नात्र रमिः परेर्विशेष्यः ।

[ व्याङ्परिभ्यो रमः । पा० १।३।८३, रमेर्व्याङ्भ्यां च । स० ३।१।१३४ ]

**उपात्** ॥ १३६ ॥ [ स० ३।१।१३५, ० च । पा० १।३।८४ ]

उपपूर्वाद् रमस्तङाना न भवन्ति । कश्चित् कालमुपरमति ।

**अव्याप्याद्वा** ॥ १३७ ॥

व्याप्यरहिताद् उपपूर्वाद् रमस्तङाना वा न भवन्ति । उपरमते, उपरमति ।

[ विभाषाकर्मकात् । पा० १।३।८५, अकर्मकाद्वा । स० ३।१।१३६ ]

**अणौ चित्तवत्कर्तृकाण्णेः** ॥ १३८ ॥ [ स० ३।१।१३७ ]

अण्यन्तो यश्चित्तवत्कर्तृको व्याप्यरहितस्तस्माण् ण्यन्तात् फलवति [ १२४ ] इति प्राप्तास्तङाना न भवन्ति । आस्ते माणवकः, आसयति माणवकम् । अणाविति किम् ? आरोहयमाणं प्रयोजयति आरोहयते । चित्तवत्कर्तृकादिति किम् ? शुष्यन्ति व्रीहयः, शोषयते व्रीहीन् आतपः । अव्याप्यादित्येव । कटं कुर्वाणं प्रयोजयति, कारयते ।

[ अणावकर्मकाच्चित्तवत्कर्तृकात् । पा० १।३।८८ ]

**चलनाहारार्थात्** ॥ १३९ ॥ [ स० ३।१।१३८ ]

चलनार्थाद् आहारार्थाच्च ण्यन्तात् फलवति [ १२४ ] इति प्राप्तास्तङाना न भवन्ति । चलयति, कम्पयति । आशयति, भोजयति ।

[निगरणचलनार्थेभ्यश्च। पा० १।३।८७। Candra uses चलन here instead of चाल ]

**प्रुद्रुस्रुबुधयुधेङ्नशजनः ॥ १४० ॥** [ स० ३।१।१३९ ]

एभ्यो ण्यन्तेभ्यः फलवति [१२४] इति प्राप्तास्तङाना न भवन्ति। प्रावयति ; प्रापयतीत्यर्थः। द्रावयति ; द्रवीकरोतीत्यर्थः। स्रावयति ; स्यन्दयतीत्यर्थः। गत्यर्थेभ्यस्तु चलनार्थात् [ १३९ ] इत्येव सिद्धः प्रतिषेधः। बोधयति माणवकं श्लोकम्। योधयति काष्ठम्। अध्यापयति माणवकं वेदम्। नाशयति रोगम्। जनयति सुखम्।

[बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः। पा० १।३।८६]

**न पादमायमायसपरिमुहाक्तिरुचिनृतिधेट्वदवसः ॥ १४१ ॥** [स० ३।१।१४० ]

पादिभ्यो ण्यन्तेभ्य. फलवति [ १२४ ] इति प्राप्तास्तङाना न न भवन्ति, अपि तु भवन्त्येव। पिबत्यत्तिधेटाम् आहारार्थात् [ १७९ ] इति प्रतिषेधस्य पुनः प्रतिषेधः, नृतेश्चलनार्थात् ० [ १३९ ] इति, अणावकर्म्याप्यात् [१३८] इति च। एवमपि शेषाणाम्। पाययते, दमयते, आयामयते, आयासयते, परिमोहयते, आदयते, रोचयते, नर्तयते, धापयते, वादयते, वासयते।

[ न पादम्याङ्यमाङ्यसपरिमुहरुचनृतिवदवसः। पा० १।३।८९]

**वा क्यषः ॥ १४२ ॥** [पा० १।३।९०, स० ३।१।१४१ ]

क्यषन्तात् तङाना वा भवन्ति। लोहितायति, लोहितायते।

**द्युद्भ्यो लुङि ॥ १४३ ॥** [ पा० १।३।९१, स० ३।१।१४२ ]

द्युतादिभ्यो लुङि परतस्तङाना वा भवन्ति। व्यद्युतत्, व्यद्योतिष्ट। अश्वितत् अश्वेतिष्ट।

**वृद्भ्यः स्यसनोः ॥ १४४ ॥** [ पा० १।३।९२, स० ३।१।१४३ ]

वृतादिभ्यः स्ये सनि च तङाना वा भवन्ति। वर्त्स्यति, वर्तिष्यते। विवृत्सति, विवर्तिषते। वर्त्स्यति, वर्धिष्यते। विवृत्सति, विवर्धिषते।

कल्प्स्यति, कल्पिष्यते। चिक्लृप्सति, चिकल्पिषते। स्यसनोरिति किम्? वर्तते।

**लुटि क्लृपः** ॥१४५॥ [लुटि च०। पा० १।३।९३, स० ३।१।१४४]

लुटि * क्लृपस्तङानौ वा भवन्ति। कल्प्ता, कल्पिता।

**युष्मदि मध्यमत्रयम्** ॥ १४६ ॥

युष्मदि कारके प्रयुज्यमाने तङामतङां च मध्यमत्रयं भवति। त्वं पचसि, युवां पचथः, यूयं पचथ। त्वं पचसे, युवां पचेथे, यूयं पचध्वे। सामर्थ्यलभ्यमानत्वादप्रयुज्यमानेऽपि मध्यमत्रयं भवति। पचसि, पचथः, पचथ। पचसे, पचेथे, पचध्वे।

[युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। पा० १।४।१०५, समानाधिकरण युष्मद्यप्रयुज्यमानेऽपि मध्यमः। स० ३।१।१४७]

**अस्मद्युत्तमम्** ॥ १४७ ॥ [०म.। स० क० ३।१।१४९]

अस्मदि कारके प्रयुज्यमाने तङामतङां चोत्तमत्रयं भवति। अहं पचामि, आवां पचावः, वयं पचामः। अहं पचे, आवां पचावहे, वयं पचामहे। एवमप्रयुज्यमानेऽपि। प्रथमत्रयं तु सामान्यविहितं मध्यमोत्तमाभ्यां युष्मदस्मद्विषये बाधितत्वाच्छेषेऽवतिष्ठते। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्ते पितेति स्वविषय एव मध्यमोत्तमौ भवतः।

[प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च। पा० १।४।१०६, ०मन्योपपदात्। स० ३।१।१४८]

**एकद्विबहुषु** ॥ १४८ ॥

यथोक्तं त्रयमेकद्विबहुषु यथाक्रमं भवति। स पचति, तौ पचतः, ते पचन्ति। इत्येवमादि।

[तान्येकवचनद्विवचनबहुवचनान्येकशः। सुपः। पा० १।४।१०२-१०३, एकद्विबहुष्वेकवचनद्विवचनबहुवचनानि। स० क० ३।१।१५१]

इति चान्द्रे व्याकरणे प्रथमोऽध्यायः समाप्तः।

---

* In the Kas'ikā and Hṛdayahāriṇi also we find क्लृप् in the Vṛtti though the rules contain कलृप्.

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ॥१॥ [पा० ४।१।२, प्रातिपदिकात् स्वौ० । स० ३।१।१५९]

एषां त्रयं त्रयमेकद्विबहुषु भवति। एते च सामर्थ्यादिकत्वादिमदर्थवाचिनः शब्दात् परे भवन्ति। अत एव च क्रियार्थान् न भवन्ति, क्रियाया असत्त्वभूताया एकत्वादिभिः सह सम्बन्धाभावात्, तव्यादिभिश्च बाधितत्वात्। तिङन्तान्न भवन्ति, तिङ्भिरेवैकत्वादीनामुक्तत्वात्। शेषेभ्यो भवन्ति। दृषत्, दृषदौ, दृषदः; दृषदम्, दृषदौ, दृषदः; दृषदा, दृषद्भ्याम्, दृषद्भिः; दृषदे, दृषद्भ्याम्, दृषद्भ्यः; दृषदः, दृषद्भ्याम्, दृषद्भ्यः; दृषदः, दृषदोः, दृषदाम्; दृषदि, दृषदोः, दृषत्सु। एवं कुमारी, कुमार्यौ, कुमार्यः। एवं खट्वा, खट्वे, खट्वाः। तान्येतानि सप्त त्रयाणि सप्त विभक्तयो भवन्ति, विभागो विभक्तिरिति कृत्वा।

**अतो भिस ऐस्** ॥२॥ [पा० ७।१।९, स० ३।१।१६०]

अकारान्ताच्छब्दात् परस्य भिस ऐस् आदेशो भवति। वृक्षैः, प्लक्षैः। अत इति किम्? अग्निभिः। तपरः किम्? मालाभिः।

**इदमदसोः कात्** ॥३॥

इदमोऽदसश्च कादेव परस्य भिस ऐस् आदेशो भवति। इमकैः, अमुकैः। कादिति किम्? एभिः, अमीभिः।

[नेदमदसोरकोः। पा० ७।१।११, स० (०रकात्) ३।१।१६१]

**टाङसोरिनस्यौ** ॥४॥ [स० ३।१।१६२]

टाङसित्येतयोरकारान्तात् परयोरिन स्य इत्येतावादेशौ भवतः। वृक्षेण, वृक्षस्य।

[टाङसिङसामिनात्स्याः। पा० ७।१।१२]

**ङेङस्योर्यातौ** ॥५॥ [स० ३।१।१६३]

ङेङस्योरकारान्तात् परयोर्य आत् इत्येतावादेशौ भवतः। वृक्षाय, वृक्षात्।

[ङेर्यः । पा० ७।१।१३]

**सर्वादिभ्यः स्मैस्मातौ** ॥६॥ [सर्वनाम्नः० । स० ३।१।१६४]

सर्वादिभ्योऽकारान्तेभ्यः परयोर्ङ ङस्योः स्म स्मात् इत्येतावादेशौ भवतः । सर्वस्मै, सर्वस्मात् । विश्वस्मै, विश्वस्मात् । अत इत्यव । भवते, भवतः । सर्व । विश्व । उभ । उभय । डतर । डतम । इतर । अन्य । अन्यतर । त्व । त्वद् । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । अदस् । इदम् । एतद् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् ।

[सर्वादीनि सर्वनामानि । पा० १।१।२७, पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । सर्वनाम्नः स्मै । ङसिङ्योः स्मात्स्मिनौ । पा० ७।१।१४-१५ सर्वविश्वावुभोभयौ डतरडतमावितरान्यतरावन्यत्वौ समसिमौ नेमश्च सर्वनामानि त्यत्तद्यदेतददसिद-मेकद्वियुष्मदस्मद्भवतुकिमश्च । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरमपुरि बहिर्योगोपसंव्यानयोः । स० १।१। ११२-११६]

**ङेः स्मिन्** ॥७॥ [स० ३।१।१६५]

ङि इत्येतस्य सर्वादिभ्यः परस्य स्मिनादेशो भवति । सर्वस्मिन् । अत इत्येव । भवति ।

**जसः शीः** ॥८॥

सर्वादिभ्य. परस्य जसः शीरादेशो भवति । सर्वे । अत इत्येव । सर्वाः ।

[जसः शी । पा० ७।१।१७, स० ३।१।१६६ । Since the neuter plural has the short *i*, here also Sarvavarman and others prescribe the short *i*, instead of *Pāṇini's long ī which is* necessary for अनुवृत्ति in the rules for the neuter duals.]

**आद् आमः साम्** ॥९॥ [स० ३।१।१६७]

अवर्णान्तेभ्यः सर्वादिभ्यः परस्यामः सामादेशो भवति । सर्वेषाम् . सर्वासाम् । आदिति किम् ? भवताम् ।

[आमि सर्वनाम्नः सुट् । पा० ७।१।५२]

**नान्यच्च नामाप्रधानात् ॥१०॥**

नामभूतेभ्योऽप्रधानभूतेभ्यश्च सर्वादिभ्यो यदुक्तं यच्चान्यत् सर्वादिकार्यं तन्न भवति । विश्वो नाम कश्चित्, तस्मै विश्वाय देहि । अतिविश्वाय, प्रियविश्वाय ।

[संज्ञोपसर्जनप्रतिषेधः । पा० १।१।२७।२, नान्यच्च संज्ञोपसर्जनात् । स० ३।१।१६८]

**तृतीयार्थयोगे ॥११॥**

तृतीयार्थेन योगे सर्वादिभ्यो यदुक्तं यच्चान्यत् सर्वादिकार्यं तन्न भवति । मासेन पूर्वाय, मासपूर्वाय ।

[तृतीयासमासे । पा० १।१।३० । अस्ति तादर्थ्यात्ताच्छब्द्यम्—तृतीयासमासार्थानि पदानि तृतीयासमास इति । भाष्यम् । तृतीयासमासवाक्ययोः । स० ३।१।१६९]

**चार्थसमासे ॥१२॥**

चार्थसमासविषये सर्वादिभ्यो यदुक्तं यच्चान्यत् सर्वादिकार्यं तन्न भवति । दक्षिणोत्तरपूर्वाणाम् । समास इति किम् ? अमुष्मै च तस्मै च देहि ।

[द्वन्द्वे च । पा० १।१।३१, स० ३।१।१७०]

**शी वा ॥१३॥** [स० ३।१।१७१]

चार्थसमासविषये सर्वादिभ्यः शीभावो यस्योक्तस्तस्य वा भवति । पूर्वोत्तरे, पूर्वोत्तराः ।

[विभाषा जसि । पा० १।१।३२]

**प्रथमचरमतयायाल्पार्धनेमकतिपयात् ॥१४॥** [०येभ्यः । स० ३।१।१७२]

शीभावो यस्योक्तस्तस्य प्रथमादिभ्यो वा भवति । प्रथमे, प्रथमाः । चरमे, चरमाः । द्वितये, द्वितयाः । द्वये, द्वयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । नेमे, नेमाः । कतिपये, कतिपयाः ।

[प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । पा० १।१।३३]

**पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ च** ॥१५॥ [स० ३।१।१७३]

पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ यथास्थानं भवतः शीभावश्च वा । पूर्वस्मात्, पूर्वात् ; पूर्वस्मिन्, पूर्वे ; पूर्वे, पूर्वाः । परस्मात्, परात् ; परस्मिन्, परे ; परे, पराः । नवभ्य इति किम् ? त्यस्मात्, त्यस्मिन्, त्ये ।

[पूर्वादिभ्यो नवभ्यो वा । पा० ७।१।१६]

**स्मै च तीयात्** ॥१६॥ [स० ३।१।१७४]

स्मै स्मात्स्मिनौ च तीयान्ताद् यथास्थानं वा भवन्ति । द्वितीयस्मै, द्वितीयाय ; द्वितीयस्मात्, द्वितीयात् ; द्वितीयस्मिन्, द्वितीये ।

[वाप्रकरणे तीयस्य ङित्सुपसंख्यानम् । पा० १।१।३६।३]

**आप औतः शीः** ॥१७॥ [०शी । स० ३।१।१७५]

आबन्तात् परस्य औकारस्य शीभावो भवति । माले तिष्ठतः । माले पश्य ।

[(जसः शी । पा० ७।१।१७) औङ आपः । ७।१।१८]

**नपुंसकात्** ॥१८॥ [स० ३।१।१७६]

नपुंसकात् परस्य औतः शीभावो भवति । कुण्डे तिष्ठतः । कुण्डे पश्य । शकार आच्छीङ्गोः [५।४।३४] इति विशेषणार्थः ।

[नपुंसकाच्च । पा० ७।१।१९]

**जस्शसोः शिः** ॥१९॥ [पा० ७।१।२०, स० ३।१।१७७]

नपुंसकात् परयोर्जस्शसोः शिभावो भवति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य ।

**अष्टाभ्य औश्** ॥२०॥ [पा० ७।१।२१, स० ३।१।१७८]

अष्टन्शब्दात् परयोर्जस्शसोरौश् भवति । अष्टौ तिष्ठन्ति । अष्टौ पश्य । *आत्वनिर्देशः किम् ? अष्ट तिष्ठन्ति, अष्ट पश्य ।

* आत्वनिर्देशः – L., but see v. 4. 52.

**ष्णः संख्याया लुक् ॥२१॥** [ स० ३।१।१७९]

पकारान्ताया नकारान्तायाश्च संख्यायाः परयोर्जस्शसोर्लुग् भवति। षट् तिष्ठन्ति, षट् पश्य। पञ्च तिष्ठन्ति, पञ्च पश्य।

[ षड्भ्यो लुक् । पा० ७।१।२२, ष्णान्ता षट् । इति च । १।१।२४-२५]

**कतेः ॥२२॥** [ स० ३।१।१८०]

कतिशब्दात् परयोर्जस्शसोर्लुग् भवति। कति तिष्ठन्ति ? कति पश्य।

**स्वमोर्नपुंसकात् ॥२३॥** [ पा० ७।१।२३, स० ३।१।१८१ ]

सु अम् इत्येतयोर्नपुंसकात् परयोर्लुग् भवति। जतु तिष्ठति। जतु पश्य।

**अतोऽम् ॥२४॥** [ पा० ७।१।२४, स० ३।१।१८२]

अकारान्तान् नपुंसकात् परयोः स्वमोरम् भवति। कुण्डं तिष्ठति। कुण्डं पश्य।

**डतरादिभ्यः पञ्चभ्योऽनेकतरात् तः ॥२५॥** [ स० ३।१।१८३]

डतरादिभ्यः पञ्चभ्य एकतरवर्जितेभ्यो नपुंसकलिङ्गेभ्यः परयोः स्वमोस्तकार आदेशो भवति। कतरत् तिष्ठति ? कतरत् पश्य। कतमत् तिष्ठति ? कतमत् पश्य। इतरत् तिष्ठति, इतरत् पश्य। अन्यत् तिष्ठति, अन्यत् पश्य। अन्यतरत् तिष्ठति, अन्यतरत् पश्य। पञ्चभ्य इति किम् ? पूर्वं तिष्ठति, पूर्वं पश्य। अनेकतरादिति किम् ? एकतरं तिष्ठति, एकतरं पश्य।

[ अद्ड् डतरादिभ्यः पञ्चभ्यः। पा० ७।१।२५, इतराच्छन्दसि प्रतिषेध एकतरात् सर्वत्र। ७।१।२६।१ ]

**युष्मदस्मद्भ्यां ङसोऽश् ॥ २६ ॥** [ पा० ७।१।२७, स० ३।१।१८४ ]

युष्मदस्मद्भ्या परस्य ङसोऽशादेशो भवति। तव, मम।

**ङेप्रथमयोरम् ॥२७॥** [ स० ३।१।१८५ ]

ङे इत्येतस्य सुटां च युष्मदस्मद्भ्या परेषाममादेशो भवति।

तुभ्यं दीयते, मह्यं दीयते। त्वम्, अहम्। युवाम्, आवाम्। यूयम्, वयम्। त्वाम्, माम्। युवाम्, आवाम्।

[ ङे प्रथमयोरम्। पा० ७।१।२८ ]

**शसो नः** ॥२८॥ [ स० ३।१।१८६, ०न। पा० ७।१।२९ ]

युष्मदस्मद्भ्यां परस्य शस आदेर्नकारादेशो भवति, सकारस्य च संयोगान्तलोपः। युष्मान्, अस्मान्।

**भ्यसोऽभ्यम्** ॥२९॥ [ पा० ७।१।३०, स० ३।१।१८७ ]

युष्मदस्मद्भ्यां परस्य भ्यसोऽभ्यम् आदेशो भवति। युष्मभ्यं दीयते, अस्मभ्यं दीयते।

**ङसेश्चात्** ॥३०॥

ङसेस्तत्सहचरितस्य च भ्यसोऽदादेशो भवति। त्वत्, मत्। युष्मत्, अस्मत्।

[ पञ्चम्या अत्। एकवचनस्य च। पा० ७।१।३१-३२, पञ्चम्या अत्। ङसेश्च। स० ३।१।१८८-१८९. Bhoja wisely refrains from following Candra who secures brevity at the cost of ambiguity.]

**आम आकम्** ॥३१॥ [ स० ३।१।१९०, पा० ७।१।३३ (साम०) ]

युष्मदस्मद्भ्यां परस्याम आकमादेशो भवति। युष्माकम्, अस्माकम्।

**ह्रस्वापो नुट्** ॥३२॥ [ स० ३।१।१९१ ]

ह्रस्वान्तादाबन्ताच्च परस्यामो नुड् भवति। पटूनाम्, वृक्षाणाम्। खट्वानाम्।

[ ह्रस्वनद्यापो नुट्। पा० ७।१।५४ ]

**संख्याया अनतः** ॥३३॥ [ स० ३।१।१९५ ]

*अच्छन्दान्तवर्जिताया संख्याया परस्यामो नुड् भवति। चतुर्णाम्, पञ्चानाम्, षण्णाम्। अनत इति किम्? त्रिंशताम्, तावताम्।

[ षट्चतुर्भ्यश्च। पा० ७।१।५५ ]

**त्रयाणाम्** ॥३४॥

---

* Hṛdaya has अच्छन्दवर्जितायाः.

त्रिशब्दस्यामन्तस्य त्रयाणामिति निपात्यते ।

[ त्रेस्त्रयः । पा० ७।१।५३, त्रेस्त्रयश्च । स० ३।१।१९६ ]

**स्त्रीयूभ्याम्** ॥३५॥ [ स० ३।१।१९२]

स्त्रियां य ईकार ऊकारश्च ताभ्यां परस्यामो नुड् भवति । कुमारीणाम् , ब्रह्मबन्धूनाम् । स्त्रीग्रहणं किम् ? ग्रामण्याम् , खलप्वाम् । यूभ्यामिति किम् ? शरदाम् ।

[ ह्रस्वनद्यापो नुट् । पा० ७।१।५४, यूस्त्र्याख्यौ नदी । पा० १।४।३ ]

**सेयुवो वा** ॥३६॥

इयुवौ ययोर्विद्यते ताभ्यां परस्यामो नुड् वा भवति । श्रियाम्, श्रीणाम् । श्रीणामिति व्यवस्थितविभाषया छन्दस्यच । भ्रुवाम् , भ्रूणाम् ।

[ नेयङुवङ्स्थानावस्त्री । वामि । पा० १।४।४-५ इयुवुस्थानिभ्यां वा । स० ३।१।१९३ श्रीग्रामण्योश्छन्दसि । पा० ७।१।५६। इह तावत् श्रीणामुदारो धरुणो रयीणाम् [ऋ० सं० १०।४५।५] । विभाषामि नदीसंज्ञा, सा छन्दसि व्यवस्थितविभाषा भविष्यति । भाष्यम् । श्रियामित्येवं लोक इष्यते, श्रीणामिति छन्दस्येव, व्यवस्थितविभाषयेत्येके । कातन्त्र २।२।४ टीका. Our Vṛtti appears to have misunderstood the Bhāṣya. ]

**स्त्रीणाम्** ॥३७॥

स्त्रीणामित्यामन्तो निपात्यते ।

[ नित्यं स्त्रियाः । स० ३।१।१९४ । For P. see under 35.]

**सुपोऽसंख्याल्लुक्** ॥३८॥

अविद्यमानसंख्यात् परस्य सुपो लुग् भवति । उच्चः, नीचैः । अस्मादेव लिङ्गादसंख्यादपि सुबुत्पत्तिरनुमीयते ।

[ अव्ययादाप्सुपः । पा० २।४।८२, अनुपसर्जनाव्ययात् । स० ३।१।१९८]

**ऐकार्थ्ये** ॥३९॥ [ सुपो लुग ० । म० ३।१।१९७]

एकार्थीभावे सुपो लुग् भवति । पुत्रीयति । राजपुरुषः । औपगवः ।

[सुपो धातुप्रातिपदिकयोः । पा० २।४।७१, अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । कृत्तद्धितसमासाश्च । पा० १।२।४५-४६]

**ततः प्राक् कारकात् ॥४०॥**

प्राक् कारकसंशब्दनाद् [२।२।१६] यदेकार्थ्यं ततः सुपो लुग् भवति। उपाग्नि। प्राक् कारकादिति किम्? कष्टश्रितः।

[ अव्ययीभावश्च। स्वरादिनिपातमव्ययम्। पा० १।१।४१, ३७, लुङ्मु-स्वरयोरव्ययीभावः। अनुपसर्जनाव्ययात्। स० १।१।१८८, ३।१।१९८]

**नातोऽमपञ्चम्याः ॥४१॥**

प्राक् कारकादेकार्थादकारान्तात् परस्य सुपो लुग् न भवति, अम् तु भवत्यपञ्चम्याः। उपकुम्भम्। अपञ्चम्या इति किम्। उपकुम्भादानय।

[ नाव्ययीभावादतोऽम् त्वपञ्चम्याः। पा० २।४।८३, नाव्ययीभावादतोऽपञ्चम्यास्त्वम्। म० ३।१।१९९]

**तृतीयासप्तम्योर्वा ॥४२॥** [स० ३।१।२००]

प्राक् कारकादेकार्थादकारान्तात् परयोस्तृतीयासप्तम्योर्वाम् भवति। उपकुम्भं कृतम्, उपकुम्भेन कृतम्। उपकुम्भं निधेहि, उपकुम्भे निधेहि।

[ तृतीयासप्तम्योर्बहुलम्। पा० २।४।८४]

**क्रियाप्ये द्वितीया ॥ ४३ ॥**

क्रियाया व्याप्ये द्वितीया विभक्तिर्भवति। कटं करोति। ओदनं पचति। आदित्यं पश्यति। ओदनः पच्यत इत्योदनशब्दाद् व्याप्यता न गम्यते। किं तर्हि? तिङन्तात्। कटं करोति विपुलं दर्शनीयमिति गुणयुक्तस्य व्याप्यतास्त्येव। ईप्सितेऽपि व्याप्यत्वाद् द्वितीया सिद्धा। गां दोग्धि पयः। पौरवं गां याचते। गामवरुणद्धि व्रजम्। माणवकं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते। माणवकं धर्ममनुशास्ति†। एवमनी-

---

* किम् is used in the sense of कुतः.

† The Supadma-makaranda says: चन्द्रस्तु प्रहिमुचोरप्युदाहरति। तदेव प्रभृतिशब्देनोट्टङ्कितम्। तद् यथा शतं गृह्णाति ग्रामम्। गां गोष्ठं

प्सितेऽपि। अहिं लङ्घयति। विषं भक्षयति। यन्नवेप्सितं नाप्यनीप्सितं तत्रापि भवति। ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीति।

[कर्तुरीप्सिततमं कर्म। तथायुक्तं चानीप्सितम्। अकथितं च। पा० १।४।४९-५१, स० १।१।३८-४०। कर्मणि द्वितीया। पा० २।३।२, स० ३।१।२०२]

**गतिबोधाहारशब्दार्थानाप्यानां प्रयोज्ये ॥ ४४ ॥**

गत्यर्थानां बोधार्थानामाहारार्थानां शब्दार्थानामनाप्यानां च प्रयोज्य कर्तरि द्वितीया विभक्ति र्भवति। सामर्थ्याच्च प्रयोजकव्यापारेणैवास्य व्याप्यता भवतीति गम्यते। गमयति माणवकं ग्रामम्; यापयति माणवकं ग्रामम्। बोधयति माणवकं श्लोकम्; वेदयति माणवकं धर्मम्। भोजयति माणवकम् ओदनम्; आशयति माणवकमोदनम्। अध्यापयति माणवकं वेदम्। पाठयति माणवकं वेदम्। आसयति देवदत्तम्; शाययति देवदत्तम्; एतेपामेवेति* किम्? पाचयत्योदनं देवदत्तेन। प्रयोज्य इति किम्? गच्छति देवदत्तः। यदा तर्हि गमयति देवदत्तं यज्ञदत्तस्तमपरः प्रयुङ्क्ते, तदा गमयति देवदत्तं यज्ञदत्तेनेति भवितव्यम्, गमयतेरगत्यर्थत्वात्।

[गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ। पा० १।४।५२, गतिज्ञानप्रत्यवसानार्थशब्दक्रियाकर्मकश्रुदृशीनामणि कर्ता णौ। स० १।१।४२]

**हृक्रोर्वा ॥ ४५ ॥** [स० १।१।४३]

हृञः कृञश्च प्रयोज्ये कर्तरि द्वितीया वा भवति। हारयति भारं देवदत्तं देवदत्तेनेति वा। अभ्यवहारयति सक्तुं देवदत्तं देवदत्तेनेति वा। कारयति कटं देवदत्त देवदत्तेनेति वा।

[हृक्रोरन्यतरस्याम्। पा० १।४।५३]

**दृशभिवाद्योरात्मने ॥ ४६ ॥**

---

मुञ्चति। Again about शब्दकर्मक roots it says: जल्पालापसम्भाषाणां याचञ्ञासम्बन्धसान्त्वनेष्विति वाच्यम्। यदाह चन्द्रः—एते शब्दा याच्ञार्थसंवाज्जल्पादीनामुपसंख्यानम्। These things are not found in our Vṛtti.

* Read: एतेषामिति।

दृशेरभिवादेश्च प्रयोज्ये कर्तरि तङानविषये प्रयोगे द्वितीया वा भवति। दर्शयते राजा भृत्यान् भृत्यैरिति वा। अभिवादयते गुरुं देवदत्तं देवदत्तेनेति वा। तङाने* इति किम् ? दर्शयति चित्रं देवदत्तेन। अभिवादयति गुरुं माणवकेन †।

[ हृक्रोर्वाविचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम्। पा० १।४।५३।१, दृश्यभिवाद्योरात्मनेपदे। स० ११।१।४४ ]

**न नीखाद्यदिह्वाशब्दायक्रन्दः ॥ ४७ ॥**

नयत्यादीनां प्रयोज्ये कर्तरि द्वितीया न भवति। नाययति देवदत्तेन। खादयति देवदत्तेन। आदयति देवदत्तेन। आह्वाययति देवदत्तेन। शब्दाययति देवदत्तेन। क्रन्दयति देवदत्तेन।

[ अदिखादिनीवहीनां प्रतिषेधः, शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधः। १।४।५२।५, ६ ; न नीखाद्यादिह्वायशब्दायक्रन्दाम्। स० २।१।४५ ]

**वहेरनियन्तृके ॥ ४८ ॥**

वहेः प्रयोज्ये कर्तरि नियन्तृरहिते द्वितीया न भवति। वाहयति भारं देवदत्तेन। अनियन्तृक इति किम् ? वाहयति बलीवर्दान्।

[ वहेरनियन्तृकर्तृकस्य। पा० १।४।५२।६, स० ११।१।४६ ]

**भक्षेरहिंसायाम् ॥ ४९ ॥**

भक्षरहिंसार्थस्य प्रयोज्य कर्तरि द्वितीया न भवति। भक्षयति पिण्डीं देवदत्तेन। अहिंसायामिति किम् ? भक्षयति बलीवर्दान् सस्यम्। ग्राममधिशेत इति व्याप्यविवक्षैव। एवं ग्राममधितिष्ठति, वृक्षमध्यास्ते, धर्ममभिनिविशते, त्रिरात्रमुपवसति, ग्राममनुवसति, पर्वतमधिवसति, आवसथमावसतीति। क्वचिदाधारविवक्षा। संज्ञा संज्ञिन्य-

---

* तङान—I.. † आत्मनेपद इति किम् ? दर्शयति चैत्रं मैत्रमपरः। अत्र प्राप्तविकल्पत्वाद् द्वितीयैव। चान्द्रास्तु कर्तरि तृतीयां प्रत्युदाहरन्ति। अभिवादयति गुरुं माणवकेन। अप्राप्तविकल्पत्वात् तृतीयैव। कातन्त्रविस्तरः।

भिनिविशते। अक्षैर्दीव्यतीति करणविवक्षा, अक्षान् दीव्यतीति व्याप्यविवक्षा, अक्षेषु दीव्यतीत्याधारविवक्षा। विवक्षातो हि कारकाणि भवन्ति *। तद् यथा, बलाहको विद्योतते विद्युतम्। बलाहकं विद्योतते विद्युत्। बलाहकाय विद्योतते विद्युत्। बलाहकाद् विद्योतते विद्युत्। बलाहके विद्योतते। बलाहकेन विद्योतत † इति।

[ भक्षेरहिंसार्थस्य। पा० १।४।५२।७, स० १।१।४७, अधिशीङ्स्थासां कर्म। (वसेरश्यर्थस्य प्रतिषेधः। वा० १) अभिनिविशश्च। उपान्वध्याङ्वसः। दिवः कर्म च। पा० १।४।४६-४८, ४३, अधिशीङ्स्थासामाधारः। उपान्वध्याङ्वसः। उपवसेरभोजनार्थस्य कालः। अभिनिविशो वा। दिवः करणम्। स० १।१।४८-५२ ]

**समयानिकषाहाधिगन्तरान्तरेण युक्तात्॥ ५०॥**

समयादिभिर्युक्ताद् द्वितीया स्यात्। समया ग्रामम्। हा देवदत्तम्! धिग् देवदत्तम्! अन्तरा गार्हपत्यमाहवनीयं च वेदिः। अन्तराशब्दस्य मध्यार्थवाचित्वाद् वेदिर्नान्तराशब्देन युक्तेति ततो न द्वितीया। अन्तरेण धर्मं सुखं न भवति। इह कथं न भवति—किं ते केशवार्जुनयोरन्तरेण गतेनेति? लाक्षणिकत्वाद् अस्य ग्रहणं न भवति। बुभुक्षितं न प्रतिभाति किञ्चिदिति बुभुक्षितं प्रति न प्रकाशते किञ्चिदित्यर्थः। सम्बन्धे तु षष्ठी। देवदत्तस्य न प्रतिभाति।

[ समयानिकषाहायोगेषूपसंख्यानम्। पा० २।३।२।१, अन्तरान्तरेण युक्ते। पा० २।३।४, समयानिकषाहाधिगन्तरान्तरेणयेनतेनयुक्तात्। स० ३।१।२०३

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥ २।३।२ भाष्यम्।

* धातोरस्य सकर्मकत्वात् अक्षान् दीव्यतीत्यत्र अक्षा दीव्यन्त इति भवत्येव, न तु भावप्रयोगे अक्षैर्दीव्यत इति, माण्यक्षैर्द्यूत इति कर्तरि क्तः। चन्द्रस्त्वेवंविधं कार्यमनालोच्य योगमम् प्रत्याचक्षाणस्याधिकस्वातन्त्र्यम्। गोपीचन्द्रः (५१८)।

† सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम्। तयोः पर्यायेण वचनम्। ..वचनाश्रया च संज्ञा भविष्यति। तद् यथा बलाहकाद् विद्योतते विद्युत्। बलाहके विद्योतते। बलाहको विद्योतत इति। महाभाष्यम् १।४।२३।

ततोऽन्यत्रापि दृश्यते। न देवदत्तं प्रतिभाति किञ्चित्। बुभुक्षितं न प्रतिभाति किञ्चित्। ाष्यम् २।३।२। षष्ठ्यर्थे द्वितीया वा प्रतिभः। कातन्त्रपरिशिष्टम्। ३।२४ ]

**द्वित्वेऽधयादिभिः** ॥ ५१ ॥ [ स० ३।१।२०४ ]

अध्यादिभिर्योगे तेषामेव द्वित्वे द्वितीया स्यात्। अध्युपर्यधसां सामीप्ये* [ ६।३।३ ] सूत्रेण द्वित्वम्। अध्यधि ग्रामम्, उपर्युपरि ग्रामम्, अधोऽधो ग्रामम्। द्वित्व इति किम्? हर्म्यस्योपरि प्रासादः। मासमधीते, क्रोशमधीत इति क्रियाप्य एव द्वितीया। तथा क्रोशं कुटिला नदीति भवतेर्गम्यमानत्वात्। कालभावाध्वनां च सर्वक्रियाभिर्व्याप्यत्वात्। मासेनानुवाकोऽधीत इति करण एव तृतीया। मासमधीतोऽनुवाको न चानेन गृहीत इति नात्र करणत्वम् असाधकतमत्वात्। अद्य भुक्त्वा देवदत्तो द्व्यहाद् भोक्तेति क्रियावधेरेव पञ्चमी। द्व्यहे भोक्तेत्याधार एव सप्तमी। इहस्थोऽयमिष्वासः क्रोशाल्लक्ष्यं विध्यतीत्यवधेरेव पञ्चमी। क्रोशे लक्ष्यं विध्यतीत्याधार एव सप्तमी।

[ द्वितीयाविधानेऽभितःपरितःसमयानिकषाध्यधिधिग्योगेषूपसंख्यानम्। पा० २।३।२ भाष्यम्। कालाध्वनोरत्यन्तसंयोगे। अपवर्गे तृतीया। सप्तमीपञ्चम्यौ कारकमध्ये। पा० २।३।५-७ कालाध्वभ्यां कारकमध्ये सप्तमी च। द्वितीयात्यन्तसंयोगे। अपवर्गे तृतीया। स० ३।१।२१२-२१४ ]

**सर्वाभिपर्युभयात् तसा** ॥ ५२ ॥ [ ० भयेभ्यस्तसा। स० ३।१।२०५ ]

सर्वादिभिस्तसन्तैर्युक्ताद् द्वितीया स्यात्। सर्वतो ग्रामम्, अभितो ग्रामम्, परितो ग्रामम्, उभयतो ग्रामम्।

**एनपा** ॥ ५३ ॥ [ स० ३।१।२०६ ]

एनपा योगे द्वितीया स्यात्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्।
[ एनपा द्वितीया। पा० २।३।३१ ]

---

* इति appears to have been dropped here

**लक्षणवीप्सेत्थंभूतेष्वभिना ॥ ५४ ॥**

लक्षणादिष्वर्थेष्वभिना योगे द्वितीया स्यात्। वृक्षमभि विद्योतते। वृक्षं वृक्षमभि तिष्ठति। साधुर्देवदत्तो मातरमभि।

[लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः। अभिरभागे। पा० १।४।९०-९१, स० १।१।१६६-७; कर्मप्रवचनीययुक्ते द्वितीया। पा० २।३।८।९, कर्मप्रवचनीयैः। स० ३।१।२०७]

**प्रतिपरिभ्यां भागे च ॥५५॥**

प्रतिपरिभ्यां युक्ताल्लक्षणादिषु भागे चार्थे द्वितीया स्यात्। वृक्षं प्रति विद्योतते। वृक्षं वृक्षं प्रति तिष्ठति। साधुर्देवदत्तो मातरं प्रति। यदत्र मां प्रति स्यात्। वृक्षं परि विद्योतते। वृक्षं वृक्षं परि तिष्ठति। साधुर्देवदत्तो मातरं परि। यदत्र मां परि स्यात्।

[See under 54]

**अनुना ॥५६॥**

लक्षणादिष्वर्थेषु भागे चार्थेऽनुना युक्ताद् द्वितीया स्यात्। वृक्षमनु विद्योतते। शाकल्यस्य संहितामनु प्रावर्षत्। हेतुरपि हि लक्षणं भवति। वृक्षं वृक्षमनु तिष्ठति। साधुर्देवदत्तो मातरमनु। यदत्र मामनु स्यात्।

[अनुर्हेतुलक्षणे। स० १।१।१६०]

**सहार्थे ॥५७॥** [स० १।१।१६१]

सहार्थेऽनुना युक्ताद् द्वितीया स्यात्। नदीमन्ववसिता सेना। नद्या सहेत्यर्थः।

[तृतीयार्थे। पा० १।४।८५]

**हीने ॥५८॥** [पा० १।४।८६, स० १।१।१६२]

*हीनेऽर्थेऽनुना युक्ताद् द्वितीया स्यात्। अन्वर्जुनं योद्धारः।*

**उपेन ॥५९॥**

हीनेऽर्थे उपेन युक्ताद् द्वितीया स्यात्। उपार्जुनं योद्धारः।

[उपोऽधिके च। पा० १।४।८७, स० १।१।१६३]

**सप्तम्याधिक्ये** ॥६०॥

आधिक्येऽर्थे उपेन युक्ता सप्तमी भवति। उप खार्यां द्रोणः।

[सप्तम्याधिक्यस्वाम्ययोः। स० ३।१।२०८]

**स्वाम्येऽधिना** ॥६१॥

स्वाम्यऽर्थे अधिना युक्तात् सप्तमी भवति। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः।

[अधिरीश्वरे। पा० १।४।९७, स० १।१।१७; यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। पा० २।३।९, सप्तम्याधिक्यस्वाम्ययोः। स० ३।१।२०८]

**कर्तरि तृतीया** ॥६२॥

कर्तरि कारके तृतीया विभक्तिर्भवति। चैत्रेण कृतम्।

[कर्तृकरणयोस्तृतीया। पा० २।३।१८, कर्तृकरणयोश्च। स० ३।१।२१५]

**करणे** ॥६३॥

करणे कारके तृतीया स्यात्। दात्रेण लुनाति। परशुना छिनत्ति। प्रकृत्याभिरूपकः, प्रायेण याज्ञिकः, गोत्रेण गार्ग्य इति भवतेः सर्वत्र सम्भवात् करण एव तृतीया। तथा, समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति।

[See under 59. तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम्। २।३।१८।१, प्रकृतिप्रायगोत्रनामजातिजनुःपुमासमादिभ्यो गम्यमानक्रियायाम्। व्यक्षकार्त्स्न्यादिभ्यः क्रियाविशेषणे। सुखदुःखादिभ्यो वा। समविषमादिभ्योऽधिकरणे। द्विद्रोणपञ्चकादिभ्यः कर्मणि वीप्सायाम्। स० ३।१।२१६-२२०]

**परिक्रियश्चतुर्थी च** ॥६४॥

परिक्रीणातेः करणे कारके चतुर्थी भवति, तृतीया च। शताय परिक्रीतोऽनुब्रूहि। शतेन परिक्रीतोऽनुब्रूहि।

[परिक्रयणे सम्प्रदानमन्यतरस्याम्। पा० १।४।४४, परिक्रियः करणे वा। स० ३।१।२३५]

**सहार्थेन** ॥६५॥

सहशब्दार्थेन योगे तृतीया स्यात्। पुत्रेण सहागतः। पुत्रेण सार्धमागतः। तृतीयापि षष्ठीवदप्रधान एव भवति।

[सहयुक्तेऽप्रधाने । पा० २।३।१९, विनापि सहशब्देन भवति । वृद्धो यूनेति निदर्शनात् । काशिका । सहार्थयोगे । स० ३।१।२२१]

**लक्षणे ॥६६॥**

लक्षणे वर्तमानात् तृतीया स्यात् । कमण्डलुना छात्रमद्राक्षीत् । अक्ष्णा काणः । तेन ह्यङ्गेनाङ्गिनो विकृतिर्लक्ष्यते ।

[इत्थम्भूतलक्षणे । पा० २।३।२१, ०लक्षणात् । स० ३।१।२२५। विशेषण एव तृतीयेति चन्द्रगोमी । यदाह—तेन ह्यङ्गेनाङ्गिनो विकृतिर्लक्ष्यत इति । कातन्त्रविस्तरः ]

**संज्ञो व्याप्ये वा ॥६७॥**

संजानातेर्यद् व्याप्यं ततस्तृतीया वा भवति । मात्रा संजानीते । मातरं संजानीते ।

[संज्ञोऽन्यतरस्यां कर्मणि । पा० २।३।२२, संज्ञश्च । स० ३।१।२२१]

**हेतौ ॥६८॥** [पा० २।३।२३, स० ३।१।२२७]

तत्क्रियायोग्ये तृतीया स्यात् । अन्नेन वसति । विद्यया यशः ।

**ऋणे पञ्चमी ॥६९॥** [स० ३।१।२२८]

ऋणे हेतौ पञ्चमी भवति । शताद् बद्धः । कथं शतेन बन्धित इति ? कर्तरि तृतीयात्र भविष्यति ।

[अकर्तर्यृणे पञ्चमी । पा० २।३।२४]

**गुणे वा ॥७०॥** [स० ३।१।२२९]

पराङ्गभूते हेतौ पञ्चमी वा भवति । जाड्याद् बद्धः, जाड्येन बद्धः । उपलब्धेः सन्, उपलब्ध्या सन् । व्यवस्थितविभाषया क्वचित् तृतीयैव । बुद्ध्या मुक्तः, प्रज्ञया मुक्तः ।

[विभाषा गुणेऽस्त्रियाम् । पा० २।३।२५]

**षष्ठी हेतुना ॥७१॥**

हेतुशब्देन योगे हेतौ षष्ठी भवति । अन्नस्य हेतोर्वसति ।

[षष्ठी हेतुप्रयोगे । पा० २।३।२६, षष्ठी हेतोः प्रयोगे । स० ३।१।२३२]

**सर्वाः सर्वादिभ्यो हेत्वर्थैः** ॥७२॥

हेत्वर्थैः शब्दैर्योगे सर्वादिभ्यः सर्वा विभक्तयो भवन्ति। [* को हेतुः ? कं हेतुम् ? ] केन हेतुना ? कस्मै हेतवे ? कस्माद्धेतोः ? कस्य हेतोः ? कस्मिन् हेतौ ? किं कारणम् ? केन कारणेन ? किं निमित्तम् ? केन निमित्तेन ? किंप्रयोजनम् ? केन प्रयोजनेन ? सर्वादिभ्य इति किम् ? अन्नस्य हेतोर्वसति। हेत्वर्थैरिति किम् ? केन कृतम् ? नामाप्रधानादिभ्यः पूर्वप्रतिषेधादेव [१०] न भवन्ति।

[सर्वनाम्नस्तृतीया च। पा० २।३।२७, निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्। पा० २।३।२३ भाष्यम्। पर्यायाणामद्वितीया सर्वनामभ्यः। स० ३।१।२३३]

**सम्प्रदाने चतुर्थी** ॥७३॥

यस्मै सम्यक् प्रदीयते तत्र चतुर्थी भवति। देवेभ्यः पुष्पं ददाति। सम्प्रदान इति किम् ? रजकस्य वस्त्रं ददाति।

[चतुर्थी संप्रदाने। पा० २।३।१३, स० ३।१।२३४]

**रुचिमति** ॥७४॥

रुचियुक्ते कारके चतुर्थी भवति। रोचते देवदत्ताय। कथम्—देवदत्ताय श्लाघते, देवदत्ताय ह्नुते, तिष्ठते कुमारी छात्रेभ्यः, देवदत्ताय शपते, पुष्पेभ्यः स्पृहयतीति ? तादर्थ्ये चतुर्थी भविष्यति। व्याप्यविवक्षायां तु देवदत्तं श्लाघते, पुष्पाणि स्पृहयतीति।

[रुच्यर्थानां प्रीयमाणः। श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः। स्पृहेरीप्सितः (०तो वा—स०)। पा० १।४।३३-३४,३६, स० १।१।५७-५८, ६०]

**धारेरुत्तमर्णे** ॥७५॥ [०र्णः। पा० १।४।३५, स० १।१।५९]

धारयतेरुत्तमर्णे* कारके चतुर्थी भवति। देवदत्ताय गां धारयति उत्तमर्ण इति किम् ? गां धारयति देवदत्तः।

**कोपस्थानेऽनाप्ये** ॥७६॥

* The commentator uses कारके after all !

कोपस्थानेऽनाप्ये चतुर्थी भवति। देवदत्ताय क्रुध्यति। चैत्राय द्रुह्यति। मैत्रायेर्ष्यति। यज्ञदत्तायासूयति। अनाप्य इति किम्? देवदत्तमभिक्रुध्यति। यज्ञदत्तमभ्यसूयति। कथम्—देवदत्ताय राध्यति, देवदत्तायेक्षते दैवमिति? तादर्थ्यचतुर्थ्या सिद्धम्। तथा देवदत्तन याचितोऽयाचितो वा देवदत्ताय प्रतिशृणोति, देवदत्तायाशृणोति।

[ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः। क्रुधद्रुहोरुपसृष्टयोः कर्म (० योः सम्प्रदानम्–स०)। राधीक्ष्योर्यस्य विप्रश्नः। पा० १।४।३७-३९, स० १।१।६१,५३, ६२। चन्द्रगोमी तु कोपस्यानेऽनाप्ये इत्येवं सूत्रं कुर्वाणोऽकर्म विषये चतुर्थीं विधत्ते। व्याप्यविवक्षायान्तु क्रुधादीनां सोपसर्गाणां निरुपसर्गाणाञ्च प्रयोगे द्वितीयां मन्यतेऽनाप्य इति वचनात्। कातन्त्रविस्तरः। ]

प्रत्यनुभ्यां गृणो व्याप्ये ॥७७॥

प्रत्यनुपूर्वस्य गृणातेर्यद् व्याप्यं तत्र चतुर्थी भवति। होत्रे प्रतिगृणाति पोत्रेऽनुगृणाति। ग्रामाय गच्छतीति तादर्थ्ये चतुर्थी *। ग्रामं गच्छतीति क्रियाप्ये द्वितीया†। मार्गभ्रष्टोऽप्राप्ताय पथे गच्छतीति तादर्थ्ये चतुर्थी। पन्थानं गच्छतीति क्रियाप्ये द्वितीया। पथा गच्छतीति करणे तृतीया। एधेभ्यो व्रजति, पाकाय व्रजति, मूत्राय कल्पते यवागूः, वाताय कपिलिका विद्युत्‡, आतपाय लोहिनी विद्यदिति तादर्थ्ये चतुर्थी।

[ अनुप्रतिगृणश्च। पा० १।४।४१, गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। अध्वन्यर्थग्रहणम्। आस्थितप्रतिषेधश्च। २।३।१२, वा १-२। क्रियार्थोपपदस्य च कर्मणि स्थानिनः। तुमर्थाच्च भाववचनात्। पा० २।३।१४-१५। क्लृपि सम्पद्यमाने। उत्पातेन ज्ञाप्यमाने। पा० २।३।१३।२-३; क्लृप्त्यर्थकर्तरि विकारे। उत्पातेन ज्ञाप्यमाने। तुमर्थाच्च भाववचनात्। तुमुनोऽप्रयुज्यमानस्य कर्मणि। गत्यर्थानां चेष्टायामनास्थिताध्वनि वा। स० ३।१।२३६-२३७, २३९-२४१ ]

नमःस्वस्तिस्वाहास्वधावषट्छक्तार्थैः ॥७८॥

---

* चन्द्रेण तादर्थ्ये सर्वमिदमुक्तम्। सुपद्मवृत्तिः २।२।२८।

† चन्द्रगोमी तु यथाविवक्षं द्वितीयाद्युत्पत्तिं मन्यते। कातन्त्रविस्तरः।

‡ वाताय कपिला विद्युदातपायातिलोहिनी। महाभाष्यम्।

नमआदिभिः शक्तार्थैश्च योगे चतुर्थी भवति। नमो देवेभ्यः। स्वाहा देवेभ्य.। स्वधा पितृभ्यः। वषड् रुद्रेभ्यः। अलं मल्लो मल्लाय। समर्थो मल्लो मल्लाय।

[ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च। पा० २।३।१६, ० वषट्पर्याप्त्यर्थे। स० ३।१।२४४ ]

**तादर्थ्ये** ॥७९॥ [ स० ३।१।२३८ ]

तस्मा इद तदर्थम्। तदर्थस्य भावे द्योत्ये चतुर्थी भवति। यूपाय दारु। श्राद्धाय निगर्हते। युद्धाय संनह्यते। पत्ये शेते।

[ चतुर्थीविधाने तादर्थ्य उपसंख्यानम्। पा० २।३।१३।१ ]

**मन्याप्ये कुत्सायामनावादौ वा** ॥८०॥

मन्यतेर्यद् व्याप्यं तस्मिन् नावादिवर्जिते कुत्सायां गम्यमानायां चतुर्थी वा भवति। न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये; न त्वा शुने मन्ये, न त्वा श्वानं मन्ये। मन्यतेरिति किम्? न त्वा तृणं चिन्तयामि। श्यना निर्देशः किम्? न त्वा तृणं मन्वे। कुत्सायामिति किम्? अश्मानं दृषदं मन्य, मन्ये काष्ठमुलूखलम्*। अनावादाविति किम्? न त्वा नावं मन्य। न त्वान्नं मन्ये। न त्वा शृगालं मन्य। युष्मदः कस्मान्न भवति? यदि स्यात् कुत्सा न गम्येत।

[मन्यकर्मण्यनादरे विभाषाप्राणिषु। पा० २।३।१७, यदेतदप्राणिष्वित्येतदनावादिष्विति वक्ष्यामि। भाष्यम्। मन्यकर्मणि प्रकृष्य कुत्सितग्रहणम्। २।३।१७।१ ; मन्यतेः प्रतिकृष्य कुत्सायामुपमानेभ्यः। न नावन्नकाकशुकशृगालेभ्यः। स० ३।१।२४२-२४३। कथं तर्हि हरिमप्यमंसत तृणाय [ शिशु० १५।६१ ], तृणाय मत्वा ताः सर्वाः [ भट्टि० ८।९९ ], तृणाय मत्वा रघुनन्दनोऽसौ [भट्टि० २।४५] ? प्रतिकृष्य कुत्साया अभावादसाधव एवैते। अत एव चन्द्रादिषु सप्रतिषेधमुदाहृतम्। केचित्तु कुत्सायामेव मन्यन्ते। तच्च भाष्यवार्तिकविरुद्धम्, यदाह — मन्यकर्मणि प्रतिकृष्य कुत्साग्रहणं कर्तव्यमिति। कातन्त्रविस्तरः। ]

**अवधेः पञ्चमी** ॥८१॥

---

* अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति—इत्युत्तरार्धम्।

पदार्थावधः पञ्चमी भवति। ग्रामाद् गच्छति। चौरेभ्यो बिभेति। चौरेभ्यस्त्रायते। अध्ययनात् पराजयते। यवेभ्यो गां वारयति। यवेभ्यो गां निषेधयति। उपाध्यायादन्तर्धत्ते। उपाध्यायादधीते। नटस्य शृणोतीति सम्बन्धो विवक्षितः। शृङ्गाच्छरो जायते। हिमवतो गङ्गा प्रभवति। अधर्माज्जुगुप्सते। अधर्माद् विरमति। अधर्मात् प्रमाद्यति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। व्यतिरिक्तो देवदत्तात्। आराद् देवदत्तात्। इतरो देवदत्तात्। पूर्वो ग्रामात्। प्राग् ग्रामात्। दक्षिणा ग्रामात्। दक्षिणाहि ग्रामात्। सम्बन्धविवक्षायां षष्ठी न निवार्यते। पुरो ग्रामस्य, दक्षिणतो ग्रामस्य। उपरि शैलस्य, उपरि ग्रामस्य। अवधिविवक्षायां तसर्थैरपि योगे पञ्चमी भवत्येव। ततः पश्चात्, तत उपरिष्टात्*। प्रासादमारुह्य प्रेक्षते, प्रासादात् प्रेक्षत इत्यवधेरेव पञ्चमी। एवमासन उपविश्य प्रेक्षते, आसनात् प्रेक्षते। एवं प्रश्नाख्यानयोरपि। कुतो भवान्? पाटलिपुत्रादिति। तथा देशकालमानेऽपि। पाटलिपुत्राद् राजगृहं सप्त योजनानि, सप्तसु योजनेष्विति वा। एवं कार्त्तिक्या आग्रहायणी मास इति।

[ ध्रुवमपायेऽपादानम्। भीत्रार्थानां भयहेतुः। पराजेरसोढः। वारणार्थानामीप्सितः। अन्तर्द्धौ येनादर्शनमिच्छति। आख्यातोपयोगे। जनिकर्तुः प्रकृतिः। भुवः प्रभवः। अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। पा० १।४।२४-३१, २।३।२९, स० १।१।६५, ६७-७३, प्रभृत्यन्यार्थारादितरदिक्० ।३।१।२२८। ल्यब्लोपे कर्मण्यधिकरणे च। जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्। १।४।२४।१, जुगुप्साविरामप्रमादार्थानाम्। स० १।१।६६, पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्। अधिकरणे च। प्रश्नाख्यानयोश्च। यतश्चाध्वकालनिर्माणम्। तद्युक्तात् काले सप्तमी। अध्वनः प्रथमा च। पा० २।३।२८।१-३ ल्यब्लोपे कर्माधिकरणयोः। प्रश्नाख्यानयोश्च। कालाध्वपरिच्छेदमूलात् पञ्चमी। तेन योगे कालात् सप्तमी। अध्वनः प्रथमा च। स० ३।१।२४६-२४७, २४९-२५१, २५३-२५५]

---

* चन्द्रगोमी त्वाह—अवधिविवक्षायामतसर्थैरपि पञ्चमी भवत्येवेति। ततः पश्चात्, तत उपरिष्टादित्येवमाह। कातन्त्रविस्तरः।

प्रत्याख्यातुमिहाख्यातमिति तन्त्रान्तरोदितम् ।
स्वीकर्तुमथवास्माकं पक्षपातो न विद्यते ॥
किञ्च, तन्त्रान्तरप्रणीतानां सूत्राणां परमाग्रहात् ।
प्रत्याख्यानेन यत्नस्य द्वैगुण्यमुपजायते ॥ कातन्त्रविस्तरः ।

**पर्युपाभ्यां वर्जने ॥८२॥**

वर्जने वर्तमानाभ्यां पर्युपाभ्यां योगे पञ्चमी भवति। परि त्रिगर्तेभ्यो वृष्टो देवः। अप त्रिगर्तेभ्यो वृष्टो देवः। त्रिगर्तान् वर्जयित्वेत्यर्थः। वर्जन इति किम्? वृक्षं परि विद्योतते। आ पाटलिपुत्राद् वृष्टो देव इति मर्यादिभिविध्योरवधेरेव पञ्चमी। विना पाटलिपुत्रेण सह वेति शेषः।

[ पञ्चम्यपाङ्परिभिः। पा० २।३।१०, अपपरी वर्जने। आङ् मर्यादावचने। पा० १।४।८८-८९, पञ्चम्यपाङ्भ्याम्। परिणा वर्जने। स० ३।१। २०९-२१० ]

**प्रतिना प्रतिनिधिप्रतिदानयोः ॥८३॥** [स० ३।१।२११]

प्रतिनिधौ प्रतिदाने च वर्तमानेन प्रतिना योगे पञ्चमी भवति। अभिमन्युरर्जुनतः प्रति। माषानस्मै तिलेभ्यः प्रति प्रयच्छति। प्रतिनिधिप्रतिदानयोरिति किम्? वृक्षं प्रति विद्योतते विद्युत्। कुतोऽध्यागच्छति? कुतः पर्यागच्छतीत्यवधेरेव पञ्चमी।

[ प्रतिः प्रतिनिधिप्रतिदानयोः। अधिपरी अनर्थकौ। पा० १।४।९२-९३, स० १।१।१६८-१६९, प्रतिनिधिप्रतिदाने च यस्मात्। पा० २।३।११ ],

**ऋते द्वितीया च ॥८४॥** [ स० ३।१।२४९ ]

ऋतेशब्देन योगे द्वितीया भवति पञ्चमी च। ऋते पार्थम्, ऋते पार्थात्।

[ अन्यारादितरर्ते०। पा० २।३।२९. Candra, following in the footsteps of Devanandin, prescribes the Accusative also in connexion with ऋते. Pāṇini and Sarvavarman prescribe the Ablative alone. ऋतेति योगविभागः कर्तव्य ऋतेयोगे द्वितीयार्थम्। तथाच चान्द्रं सूत्रम्—ऋते द्वितीया च। दुर्घटः २।३।२ ]

**विना तृतीया च ॥८५॥** [स० ३।१।१५० ]

विनाशब्देन योगे तृतीयापञ्चम्यौ भवतः, द्वितीया च। विना वातेन, विना वातात्, विना वातम्।

**पृथग्नानाभ्याम्** ॥८६॥ [ स० ३।१।२५१ ]

एताभ्यां योगे तृतीयापञ्चम्यौ भवतः। पृथग् देवदत्तेन, पृथग् देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्।

[ पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। पा० २।३।३२ ]

**स्तोकाल्पकृच्छ्रकतिपयाद् असत्त्वार्थात् करणे** ॥८७॥

स्तोकादिभ्योऽसत्त्ववचनेभ्यः करणे कारके तृतीयापञ्चम्यौ भवतः। स्तोकेन मुक्तः, स्तोकान्मुक्तः। अल्पेन मुक्तः, अल्पान्मुक्तः। कृच्छ्रेण मुक्तः, कृच्छ्रान्मुक्तः। कतिपयेन मुक्तः, कतिपयान्मुक्तः। असत्त्वार्थादिति किम्? स्तोकेन विषेण हतः। करण इति किम्? स्तोकं चलति। दूरं ग्रामात्, अन्तिकं ग्रामाद् इत्यवधेरेव पञ्चमी। दूरं ग्रामस्य; अन्तिकं ग्रामस्येति सम्बन्धे षष्ठी। दूरं गतः, अन्तिकं गत इति क्रियाप्ये द्वितीया। दूरेण गतः, अन्तिकेन गत इति करणे तृतीया। दूरादागतः, अन्तिकादागतः, दूरेण तिष्ठति, अन्तिकेन तिष्ठति, दूरे तिष्ठति, अन्तिके तिष्ठतीति स्वार्थेष्वेव विभक्तयः। दूरं पन्थाः, अन्तिकं पन्था इति क्रियाविशेषणम्, भवतेर्गम्यमानत्वात्।

[करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्। दूरान्तिकार्थेभ्यो द्वितीया च। सप्तम्यधिकरणे च। पा० २।३।३३-३६, स्तोकाल्पकृच्छ्रकतिपयेभ्योऽसत्त्वार्थेभ्यः करणे। षष्ठ्यतसर्थैः। दूरान्तिकार्थबहिर्भिः पञ्चमी च। दूरान्तिकार्थेभ्योऽसत्त्ववचनेभ्यो द्वितीयातृतीयासप्तम्यश्च। स० ३।१।२५२, २५६-२५८ ]

**सप्तम्याधारे** ॥ ८८ ॥

आधारे सप्तमी विभक्तिर्भवति। कट आस्ते। आकाशे शकुनयः। तिलेषु तैलम्। गङ्गायां गावः। अधीती व्याकरण इत्याधार एव सप्तमी।

[ आधारोऽधिकरणम्। पा० १।४।४५, सप्तम्यधिकरणे च। पा० २।३।

३६, कर्तृकर्मान्तरितक्रियाधारोऽधिकरणम् । स० १।१।७४, अधिकरणे सप्तमी । स० ३।१।२५९ । सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । पा० २।३। ३६।१, क्तस्येन्विषयस्य कर्मणि । स० ३।१।२६० ]

**निमित्ताद् व्याप्येन ॥ ८९ ॥**

व्याप्येन योगे प्रयोजनात् सप्तमी भवति ।

चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥ [महाभाष्यम्] ।

[ निमित्तात् कर्मसंयोगे । पा० २।३।३६।६, स० ३।१।२६१ । चर्मणि बुद्धिं निधाय पुरुषो द्वीपिनं हन्तीत्यधिकरणत्वं विवक्षितमिति केचित् । चन्द्रगोमिना तु नेदं प्रत्याख्यातम् । तथाचाह—निमित्ताद्व्याप्येनेति । कातन्त्रविस्तरः ।]

**यत्क्रिया क्रियाचिह्नम् ॥ ९० ॥**

यस्य क्रिया क्रियान्तरस्य चिह्नं भवति, ततः सप्तमी । गोषु दुह्यमानासु गतः, दुग्धास्वागतः । ब्राह्मणेषु भुञ्जानेषु वृषला आसते । वृषलेष्वासीनेषु ब्राह्मणा भुञ्जते । वृषलेषु भुञ्जानेषु ब्राह्मणा आसते । ब्राह्मणेष्वासीनेषु वृषला भुञ्जते । क्रियेति किम् ? यो जटाभिः स भुङ्क्ते । क्रियाचिह्नमिति किम् ? यो भुङ्क्ते स देवदत्तः ।

[यस्य च भावेन भावलक्षणम् । पा० २।३।३७, स० ३।२।२६८, कारकार्हाणां च (क्रियार्हेभ्यः—स०) कारकत्वे । अकारकार्हाणां (क्रियार्हेभ्यः—स०) चाकारकत्वे । तद्विपर्यासे च । पा० २।३।३६।३-५, स० ३।१।२६५-२६७]

**षष्ठी चानादरे ॥ ९१ ॥** [ पा० २।३।३८, स० ३।१।२६९ ]

यस्य क्रिया क्रियान्तरस्य चिह्नं भवति ततः षष्ठी भवति सप्तमी च, अनादरे गम्यमाने । क्रोशतः प्राव्राजीत् । क्रोशति प्राव्राजीत् । गवां स्वामीति सम्बन्धे षष्ठी, गोषु स्वामीति विषयसप्तमी । एवम्, गवामीश्वरः, गोष्वीश्वरः । गवामधिपतिः, गोष्वधिपतिः । गवां दायादः, गोषु दायादः । गवां साक्षी, गोषु साक्षी । गवां प्रतिभूः, गोषु प्रतिभूः । गवां प्रसूतः, गोषु प्रसूतः । आयुक्तः कटकरणस्य, आयुक्तः कटकरणे । कुशलः कटकरणस्य, कुशलः कटकरणे ।

[ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । पा० २।३।३९, स० ३।१।२७०.]

**यतो निर्धारणम् ॥ ९२ ॥** [ स० ३।१।२७२ ]

जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। यतस्तत् क्रियते ततः षष्ठीसप्तम्यौ भवतः। शालयः शूकधान्यानां पथ्यतमाः ; शालयः शूकधान्येषु पथ्यतमाः। कृष्णा गवां सम्पन्नक्षीरतमाः, कृष्णा गोषु सम्पन्नक्षीरतमाः। गच्छतां धावन्तः शीघ्रतमाः, गच्छत्सु धावन्तः शीघ्रतमाः। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतरा इत्यवधेरेव पञ्चमी। मातरि साधुः, पितरि निपुण इति विषय एव सप्तमी। एवमसाधुर्मातरीति। तथा केशेषु प्रसितः, केशेषूत्सुक इति। केशैः प्रसितः, केशैरुत्सुक इति कर्तरि करणे वा तृतीया। तथा पुष्येण पायसमश्नीयादिति। पुष्ये पायसमश्नीयादित्याधार एव सप्तमी।

[ *यतश्च निर्धारणम्। पञ्चमी विभक्ते। साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः। प्रसितोत्सुकाभ्यां तृतीया च। नक्षत्रे च लुपि।* पा० २।३।४१-४५ अप्रत्यादिष्वसाधुना। साधुना च। निपुणेन चार्चायाम्। पञ्चमी विभक्तात्। प्रसितोत्सुकाभ्यामधिकरणे च। नक्षत्राच्च लुपि। स० ३।१।२६२-२६४, २७३, २७६-२७७ ]

**अर्थमात्रे प्रथमा ॥ ९३ ॥** [ स० ३।१।२७८ ]

अव्यतिरिक्ते शब्दार्थमात्रे प्रथमा विभक्तिर्भवति। वृक्षः। स्त्री, पुमान्, नपुंसकमिति लिङ्गमपि शब्दार्थ एव। तथा द्रोणः, खारी, आढक इति परिमाणमपि शब्दार्थ एव। एको द्वौ बहव इति, संख्यापि शब्दार्थ एव।

[ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा। पा० २।३।४६ ]

**सम्बोधने ॥ ९४ ॥** [ ० च। पा० २।३।४७, स० ३।१।२७९ ]

सम्बोधने प्रथमा विभक्तिर्भवति। हे देवदत्त! हा देवदत्त! धिग् देवदत्त!

**षष्ठी सम्बन्धे ॥ ९५ ॥**

सम्बन्धे षष्ठी विभक्तिर्भवति। राज्ञः पुरुषः। सर्पिषो जानीते। भ्रान्तिज्ञानऽपि* सर्पिषोऽसतः करणत्वाभावात्। करणविवक्षायां तु, स्वरेण पुत्रं जानाति। मातुः स्मरति, सर्पिषो दयते, लोकस्येष्टे। व्याप्यविवक्षायां तु द्वितीयैव। मातरं स्मरति, पृथिवीं दयते, लोकमीष्टे। एधोदकस्योपस्कुरुते। व्याप्यविवक्षायाम्, एधोदकमुपस्कुरुते। एवं चौरस्य रुजति, चौरं रुजति। ज्वरिसन्ताप्योरपि सम्बन्धविवक्षायां षष्ठी भवत्येव। चौरस्य ज्वरयति, चौरस्य सन्तापयति। व्याप्यविवक्षायां तु, चौरं ज्वरयति, चौरं सन्तापयति। सर्पिषो नाथते; माणवकमुपनाथति। चौरस्योज्जासयति, चौरमुज्जासयति। चौरस्य निहन्ति, चौरं निहन्ति। चौरस्य प्रहन्ति। चौरं प्रहन्ति। चौरस्य निप्रहन्ति, चौरं निप्रहन्ति। चौरस्य प्रणिहन्ति, चौरं प्रणिहन्ति। चौरस्योन्नाटयति, चौरमुन्नाटयति। चौरस्योत्क्राथयति, चौरमुत्क्राथयति। घटादित्वात् क्रथयतीति प्राप्नोति। क्रथनं क्राथः, क्राथं करोति† क्राथयति। चौरस्य पिनष्टि, चौरं पिनष्टि। अहिंसायामपि। धानाः पिनष्टि, धानानां पिनष्टि। न ह्यत्र सम्बन्धे षष्ठी प्रतिषिद्धा, तिङन्तेनापि सम्बन्धो भवत्येव। रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददाति, ब्राह्मणस्य ददातीति। तथा शतस्य व्यवहरति, शतस्य पणते शतस्य दीव्यति। व्याप्यविवक्षायां सर्वत्र द्वितीया। अक्षैर्दीव्यतीति करणे, अक्षान् दीव्यतीति व्याप्ये, अक्षेषु दीव्यतीत्याधारे, अक्षाणां दीव्यतीति सम्बन्धे। एवं शतस्य प्रदीव्यति, शतं प्रदीव्यति, शतेन प्रदीव्यति, शते प्रदीव्यतीति। पञ्चकृत्वोऽह्नो भङ्क्त इति सम्बन्धे, द्विरहनि भुङ्क्त इत्याधारे, द्विरह्ना भङ्क्त इति करणे। भवत आसिका, अपां स्रष्टेति सम्बन्धे षष्ठी। तथा चिकीर्षा देवदत्तस्य कटस्य, भद्रिका यज्ञदत्तस्य काष्ठानाम्, शोभना

* Should we read भ्रान्तिज्ञाने हि ?

† उत्क्रथनम् उत्क्राथः, तं करोतीति चान्द्राः, अन्यथा मानुबन्धत्वाद्ध्रस्वः स्यात् तच्च नातीव हृदयङ्गमम्। कातन्त्रविस्तरः। See S'abdakaustubha.

पाणिनेः सूत्रस्य कृतिरिति। शोभना सूत्रस्य कृतिः पाणिनिनेति कर्तरि तृतीया। तथा, आश्चर्यो गवां दोहोऽगोपालकेन। आश्चर्यो गवां दोहोऽगोपालकस्येति सम्बन्धे षष्ठी। तथा राज्ञां मतः, इदमेषामासितम्, हसितं छात्रस्य शोभनमिति। हसितं छात्रेण शोभनमिति कर्तरि तृतीया। ओदनं पचन्, ओदनं पचमान इति व्याप्ये द्वितीया। एवं कटं चिकीर्षुः, आगामुकं वाराणसीं रक्ष आहुः, कटं कृत्वा ग्रामं गतः, ग्रामं गतवान्, कतीह कवचं पर्यस्यमानाः? अधीयन् पारायणम्, कर्ता कटानिति। सम्बन्धविवक्षायां तु दास्याः कामुकः। ईषत्करः कटो भवतेति कर्तरि तृतीया। सम्बन्धे तु षष्ठ्या भवितव्यमेव। एवं चौरस्य द्विषन्। चौरं द्विषन्निति व्याप्ये द्वितीया। तथा कटं कारको व्रजति, ग्रामं गमी, शतं दायीति। वर्षशतस्य पूरकः, पुत्रपौत्रस्य दर्शकः, शतस्य दायीति सम्बन्धे षष्ठी। एवं भवतः कटः कर्तव्यः। भवता कटः कर्तव्य इति कर्तरि तृतीया। एवं ग्रामं स्रष्टव्या शाखा देवदत्तेनेति। ग्रामं स्रष्टव्या शाखा देवदत्तस्येति सम्बन्धे षष्ठी।

[षष्ठी शेषे। ज्ञोऽविदर्थस्य करणे। अधीगर्थदयेशां कर्मणि। कृञः प्रतियत्ने। रुजार्थानां भाववचनानामज्वरेः। (अज्वरिसन्ताप्योरिति वक्तव्यम्। भाष्यम्।) आशिषि नाथः। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्। व्यवहृपणोः समर्थयोः। दिवस्तदर्थस्य। विभाषोपसर्गे। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। कर्तृकर्मणोः कृति। उभयप्राप्तौ कर्मणि। (उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः। वा १) क्तस्य च वर्तमाने। अधिकरणवाचिनश्च। न लोकाव्ययनिष्ठाखलर्थतृनाम्। (उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः। द्विषः शतुर्वावचनम्। वा ६-७)। अकेनोर्भविष्यदाधमर्ण्ययोः। कृत्यानां कर्तरि वा। पा० २।३।५०-५९, ६४-७१। षष्ठी शेषे। स्मृत्यर्थदयेशां कर्मणि। कृञः प्रतियत्ने। रुजार्थानां भावकर्तृकाणाम्। न ज्वरिसन्ताप्योः। आशिषि नाथः। जासिनाटिक्राथिपिषां हिंसायाम्। हनः प्रनिभ्याम्। व्यवहृपणोर्विनिमये। द्यूते च। दिवस्तदर्थस्य। वोपसर्गात्। ज्ञोऽविदर्थस्य करणे। कृत्वोऽर्थप्रयोगे कालेभ्योऽधिकरणे। कर्तृकर्मणोः कृति। उभयहेतावस्त्र्यकाकारे कर्तरि वा। द्विषः शतरि। न लादेशातुन्नुकन्ताव्ययक्तिकिन्खलर्थेषु। अकमेरकञि।

अभत्याद्यर्थाधिकरणे निष्ठायाम् । भावे वा । अके भविष्यति । इन्याधमर्ण्ये च । कृत्येषु कर्तरि वा । नोभयप्राप्तौ । स० ३।१।२८०-३०४ ।

चन्द्रगोमी समस्तानि सूत्राण्येतानि सर्वथा ।
निरास्यद् विविधव्यक्तविवक्षाबलमास्थितः ॥ कातन्त्रविस्तरः ।

विविधा नानाप्रकारा व्यक्ताः स्फुटाः विवक्षाः कल्पनाः तासां ता एव वा बलमास्थित इति ।]

तुल्यार्थैस्तृतीया वा ॥९६॥

तुल्यार्थैः शब्दैर्योगे षष्ठी भवति, तृतीया वा । तुल्यो देवदत्तस्य, तुल्यो देवदत्तेन । सदृशो देवदत्तस्य, सदृशो देवदत्तेन । इह कस्मात् तृतीया न भवति—अर्जुनस्य तुला नास्ति केशवस्योपमा न चेति ? नैतौ तुल्यार्थौ । किं तर्हि ? तुल्ययोगौपम्यार्थौ * ।

[तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । पा० २।३।७२, तुल्यार्थैरतुलोपमाभ्यां तृतीया च । स० ३।१।३०५ । तुलोपमाभ्यामपीह स्यादेव—तुलां यदारोहति दन्तवाससा [ कु० स० ५।३४ ], गिरिणोपमामुपदधे गजता । चान्द्रेऽपि तुलोपमयोरिहाप्रतिषेध एव । कातन्त्रपरिशिष्टम् ३।४६ । S'ripati was evidently not acquainted with the Vṛtti on Candra's Grammar. This would show that S'ripati was anterior to Vardhamāna.]

हितसुखाभ्यां चतुर्थी च ॥९७॥ [स० ३।१।३०६]

हितसुखाभ्यां योगे चतुर्थी भवति षष्ठी च । हितं देवदत्ताय, हितं देवदत्तस्य । सुखं देवदत्ताय, सुखं देवदत्तस्य ।

[चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । पा० २।३।६३ । वार्तिके तु हितयोगे षष्ठी न प्रमाणम्, चान्द्रे तु षष्ठीचतुर्थ्यौ विहिते । शिष्टप्रयोगास्तु तन्मतमनुगृह्णन्ति । राज्ञो सुखम् । राज्ञः सुखम् । कातन्त्रपरिशिष्टम् ३।३७ । चान्द्रे तु षष्ठीचतुर्थ्यौ विहिते, तन्मते—धर्म एव हितो नित्यमिहामुत्र च भूभुजाम्, ग्रामाद्यद् गुणिनां हिते [भट्टि० १७।३९] इति च प्रयोगः । मकरन्दः ।]

---

* कथं तुला देवदत्तस्य नास्ति, उपमा हरस्य नास्तीति ? नैतौ तुल्यार्थौ । किं तर्हि ? तुल्ययोगौपम्यार्थौ । कातन्त्रविस्तरः । तुल्यार्थौ सदृशरूपधर्मार्थौ । तुल्ययोगौपम्यार्थौ । तुल्ययोर्योगः सम्बन्धः । तदौपम्यम् उपमाभावः, तदर्थः ययोस्तौ । कातन्त्रविस्तरटीका ।

**आशिष्यायुष्यभद्रार्थकुशलार्थैश्च ॥९८॥**

आयुष्याद्यर्थैर्हितसुखार्थैश्च योगे षष्ठीचतुर्थ्यौ भवतः, आशिषि गम्यमानायाम्। आयुष्यं देवदत्तस्य, आयुष्यं देवदत्ताय। एवम्—चिरं जीवितम्; भद्रम्, मद्रम्; अर्थः, प्रयोजनम्; कुशलम्, अनामयम्; हितम्, पथ्यम्; सुखम्, शर्म भूयादिति।

[चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। पा० २।३।७२। अत्रायुष्यादीनामर्थग्रहणं कर्तव्यम्। काशिका। आशिष्यायुष्यभद्रार्थकुशलार्थैश्च। स० ३।१।३०७]

इति चान्द्रे व्याकरणे द्वितीयस्य प्रथमः पादः समाप्तः।

---

**सुप् सुपैकार्थम् ॥१॥**

सुबन्तं सुबन्तेन सहैकार्थं भवतीत्येतदधिकृतं वेदितव्यम्। स च पृथगर्थानामेकार्थीभावः समास इत्युच्यते।

[सह सुपा। पा० २।१।४, सुप् सुपा सहैकार्थीभावे समासः। स० ३।२।१]

**असंख्यं विभक्तिसमीपाभावख्यातिपश्चाद्यथायुगपत्सम्पत्साकल्यार्थे ॥२॥**

असंख्यं सुबन्तं विभक्त्यादीनामर्थे वर्तमानं सुबन्तेन सहकार्थं भवति। तत्र विभक्त्यर्थे तावत्, स्त्रीषु कथा प्रवृत्ता, अधिस्त्रि। समीपे, कुम्भस्य समीपम्, उपकुम्भम्। अभावः सम्बन्धिभेदाद् बहुविधः। तत्र ऋद्ध्यभावे, विगता ऋद्धिर्यवनानाम्, दुर्यवनम्। अर्थाभावे, अभावो मक्षिकाणाम्, निर्मक्षिकम्। निर्मशकम्। अतिक्रमाभावे, अतिगतानि तृणानि, निस्तृणम्। सम्प्रत्यभावे, अतितैसृकमाच्छादनम्। ख्यातौ, पाणिनेः ख्यातिः, इतिपाणिनि। तत्पाणिनि। पश्चादर्थे, अनुरथं पादातम्। यथार्थोऽनेकप्रकारः। तत्र योग्यतायाम्, अनुरूपं सरूपो भवति*। वीप्सायाम्, प्रत्यर्थं शब्दा अभिनिविशन्ते†।

---

* स्वरूपो...MS. सुरूपो पहति—v. l.  † महाभाष्यम् १।२।६४।

अर्थानतिवृत्तौ, यथाशक्ति। सादृश्ये, सदृशः किख्या, सकिखि। आनुपूर्व्ये, यथावृद्धम्, अनुज्येष्ठम्। यौगपद्ये, सचक्रं निधेहि। युगपच्चक्राणि निधेहीत्यर्थः। सम्पद् द्विधा, आत्मभावसम्पत्तिः समृद्धिश्च। सम्पन्नं ब्रह्म, सब्रह्म बाभ्रवाणाम्। समृद्धिर्मद्राणाम्, सुमद्रम्। साकल्ये, सतृणमभ्यवहरति। साग्न्यधीते।

[अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्-यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु। पा० २।१।६, अव्ययं विभक्त्यर्थे। समीपसमृद्ध्योश्च। असमृद्ध्यर्थाभावात्ययासम्प्रतिषु। ख्याति-पश्चादर्थयोः। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यसदृशेषु। यौगपद्यानुपूर्व्यसम्पत्ति-साकल्यान्तवचनेषु। स० ३।२।९-१४]

**यथा न तुल्ये ॥३॥**

यथाशब्दस्तुल्यार्थे सुबन्तेन सहैकार्थो न भवति। यथा देवदत्तस्तथा यज्ञदत्तः।

[यथासादृश्ये। पा० २।१।७, स० ३।२।१५]

**यावदियत्त्वे ॥४॥** [स० ३।२।१६]

यावच्छब्द इयत्तायां सुबन्तेन सहैकार्थो भवति। यावदमत्रं ब्राह्मणान् आमन्त्रयस्व। इयत्त्व इति किम्? यावद् दत्तं तावद् भुक्तम्*।

[यावदवधारणे। पा० २।१।८]

**प्रतिना मात्रार्थे ॥५॥** [स० ३।२।१७]

सुबन्तं प्रतिना मात्रार्थेन सहैकार्थं भवति। सूपप्रति, शाकप्रति। मात्रार्थ इति किम्? वृक्षं प्रति विद्योतते विद्युत्।

[सुप् प्रतिना मात्रार्थे। पा० २।१।९]

**संख्याक्षशलाकाः परिणा द्यूतेऽन्यथावृत्तौ ॥६॥** [स० ३।२।१८]

संख्यादयः शब्दाः परिणा सहैकार्था भवन्ति द्यूते विषये, यथापूर्वं

* भुङ्क्ताम्—पाठान्तरम्।

ततोऽन्यथावृत्तौ गम्यमानायाम् । पञ्चभिः शलाकाभिर्द्यूते यदा सर्वा उत्ताना अवाङ्मुखा वा पतन्ति, तदा पातयिता जयति । ततोऽन्यथावृत्तौ । एकया शलाकया न तथा वृत्तं यथा पूर्वम्, एकपरि । एवं द्विपरि, त्रिपरि, चतुष्परि । द्वाभ्यामक्षाभ्यां द्यूते एकेनाक्षेण न तथा वृत्तं यथा पूर्वम्, अक्षपरि । एकया शलाकया न तथा वृत्तं यथा पूर्वम्, शलाकापरि । द्यूत इति किम् ? एकेन शरेण न तथा वृत्तं यथा पूर्वम् । अन्यथावृत्ताविति किम् ? अक्षेण तथा वृत्तं यथा पूर्वम् ।

[अक्षशलाकासंख्याः परिणा । पा० २।१।१० ।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥ श्लोकवार्त्तिकम् ]

**पर्यपाङ्बहिरञ्चवः पञ्चम्या वा** ॥७॥ [स० ३।२।१९]

पर्यादयः शब्दाः पञ्चम्यन्तेन सहैकार्था वा भवन्ति । परित्रिगर्तं वृष्टो देवः ; परि त्रिगर्तेभ्यो वृष्टो देवः । अपत्रिगर्तं वृष्टो देवः ; अप त्रिगर्तेभ्यो वृष्टो देवः । आपाटलिपुत्रं वृष्टो देवः ; आ पाटलिपुत्राद् वृष्टो देवः । बहिर्ग्रामम्, बहिर्ग्रामात् । वेत्यधिकारः ।

[ विभाषा । अपपरिबहिरञ्चवः पञ्चम्या । पा० २।१।११-१२ ]

**लक्षणेनाभिप्रती** ॥८॥

अभिप्रती लक्षणेन सहैकार्थौ भवतः । अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि शलभाः पतन्ति । लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः । अभिप्रती इति किम् ? येनाग्निस्तेन गतः । अन्यपदार्थेऽपि वचनान्तरेण भवति । अभ्यङ्का गाव इति ।

[ लक्षणेनाभिप्रती आभिमुख्ये । पा० २।१।१४, स० ३।२।२० ]

**अनुः सामीप्यायामयोः** ॥९॥ [स० ३।२।२१]

अनुशब्दः सामीप्य आयामे च वर्तमानः सुबन्तेन सहैकार्थो भवति । अनुवनमशनिर्गता । अनुगङ्गं वाराणसी । सामीप्यायामयोरिति किम् ? वृक्षमनु विद्योतते विद्युत् ।

[ अनुर्यत्समया । यस्य चायामः । पा० २।१।१५-१६ ]

**तिष्ठद्ग्वादीनि** ॥१०॥

तिष्ठद्गुप्रभृतीन्येकार्थीभावविषये निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले, तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्।* लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। समंभूमि। समंपदाति†। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। संप्रति। असंप्रति। पापसमम्। पुण्यसमम्। इच्।

[ तिष्ठद्गुप्रभृतीनि च। पा० २।१।१७। तिष्ठद्गुवहद्ग्वायतीगवानि कालविशेषे, न चान्यसमासः। लूनलूयमानपूतपूयमाना यवेन, न च व्यतिरेकविभक्तिः। खलेसंहृतसंह्रियमाणा बुसेन च। सुविनिर्दुरपरायतिपापपुण्यानि समया। समं भूमिपदातिभ्यामन्यपदार्थे। प्रोऽह्नरथमृगदक्षिणाभिः। सम्प्रत्यसम्प्रत्यप्रदक्षिणानि वर्तमानावर्तमानवामेषु। स०३।२।२२–२८]

**पारेमध्ये षष्ठ्या वा** ॥११॥ [पा० २।१।१८]

पारे मध्ये इत्येतौ शब्दौ षष्ठ्यन्तेन सहैकार्थौ वा भवतः। एकारान्तत्वं निपातनात्। पारेगङ्गम्, मध्येगङ्गम्। पुनर्वावचनाद् गङ्गापारम्, गङ्गामध्यम्। मध्यन्दिनमिति मध्यस्य दिने [५।२।८३] इति नुम्विधानात्‡।

[ पारेमध्येऽग्रेऽन्तः षष्ठ्या वा। स० ३।२।२९]

**संख्या वंश्येन** ॥१२॥ [पा० २।१।१९, स० ३।२।३०]

संख्याशब्दा वंशभवैः सुबन्तैः सहैकार्था भवन्ति वा। द्वौ मुनी व्याकरणस्य वंश्यौ। द्विमुनि व्याकरणस्य, द्विमुनि व्याकरणमिति वा।

---

* खलेबुसम् occurs here in the Kās'ikā.

† समभूमि, समपदाति are found in the Kās'ikā, समंभूमि, समंपदाति in the Hṛdayahāriṇī and both pairs in Haima (iii. i. 36), Saṁkṣiptasāra (vii.81) etc.

‡ इति पृषोदरादित्वात्। पाठान्तरम्।

**नदीभिः ॥१३॥**

नदीशब्दैः सह संख्याशब्दा एकार्था भवन्ति। द्वियमुनम्, त्रियमुनम्।

[ नदीभिश्च। पा० २।१।२०, नदीभिः समाहारे। स० ३।२।३१ ]

**अन्यार्थे नाम्नि ॥१४॥**

अन्यपदार्थे नदीशब्दैः सह सुबन्तं संज्ञायामेकार्थीभवति। उन्मत्तगङ्गम्। तूष्णींगङ्गम्। अन्यार्थ इति किम्? कृष्णवेण्णा नाम नदी। नाम्नीति किम्? शीघ्रगङ्गो देशः।

[ अन्यपदार्थे च संज्ञायाम्। पा० २।१।२१, अन्यपदार्थे संज्ञायाम्। स० ३।२।३२ ]

**तन्नपुंसकम् ॥१५॥**

यदेतद् अतिक्रान्तं तन्नपुंसकलिङ्गं वेदितव्यम्। तथाचैवोदाहृतम्।

[ स नपुंसकम्। पा० २।४।१७, अव्ययीभावश्च। पा० २।४।१८, अव्ययीभावो नपुंसकम्। स० ३।३।११८]

**कारकं बहुलम् ॥१६॥**

कारकं सुबन्तं सुबन्तेन सह बहुलमेकार्थीभवति। कष्टं श्रितः, कष्टश्रितः। कान्तारातीतः। श्वभ्रं पतितः, श्वभ्रपतितः। ग्रामं गतः ग्रामगतः। तरङ्गात्यस्तः, सुखप्राप्तः, सुखापन्नः, दुःखापन्नः, ग्रामगमी, ग्रामगामी*। ओदनं बुभुक्षुः, ओदनबुभुक्षुः। क्वचिद् वृत्तिरेव। कुम्भकारः, श्वपचः। खट्वारूढ इति क्षेपे। क्वचिद् वाक्यमेव। ओदनं भुक्तवान्। स्वयंधौतौ पादौ; आत्मनेत्यर्थः। तच्च कारकमेव। सामिकृतमित्यर्धकृतमित्यर्थः। तच्च विशेषणम् [२।२।१८] इत्येव सिद्धम्। अहरतिसृताः कालाः, रात्रिसक्रान्ताः। सर्वरात्रकल्याणी। गिरिणा काणः, गिरिकाणः। धान्येनार्थः, धान्यार्थः। मासेन पूर्वः, मासपूर्वः। मासावरः, मासविकलः, मासोनः। असिना कलहः, असिकलहः। वाग्निपुणः, गुडमिश्रः वाक्कलक्षण। सर्वेरियं तृतीया कारकलक्षणा, काणादिभावे गिर्यादीनां करणत्वात्, करोतौ वा कर्तृत्वात्। कथं पितृसदृशः पितृसम

* ग्रामगामी in L. appears to be a misprint.

इति ? षष्ठ्या भविष्यति, यथा पितृतुल्यमिति। राज्ञा हतः, राजहतः। असिना छिन्नः,असिच्छिन्नः। इह वृत्तिरेव—पादाभ्यां ह्रियते पादहारकः, पार्श्वेन शेते पार्श्वशयः। इह वाक्यमेव—दात्रेण लूनवान्, परशुना छिन्नवान्। तव्यादिभिरधिकार्थवचने। श्वलेह्यः कूपः, काकपेया नदी। अन्यत्र न भवति। काकैः पातव्या। क्वचिद् भवति। बुसोपेन्ध्यम्, घनघात्यम्। दध्ना उपसिक्त ओदनः, दध्योदनः। गुडेन मिश्रा धानाः, गुडधानाः। वृत्तिपदेनैव क्रियायाः प्रख्यापनात् नास्त्यसामर्थ्यम्। देवेभ्यो देयम्, देवदेयं पुष्पम्। ब्राह्मणदेयं धनम्। वरप्रदेया कन्या। इह न भवति। ब्राह्मणाय दातव्यम्। वृकाद् भयम्, वृकभयम्। वृकभीतः, वृकभीतिः, वृकभीः। ग्रामनिर्गतः, अधर्मजुगुप्सुः, शाखापेतः, पादापोढः, चक्रमुक्तः, मञ्चपतितः, तरङ्गापत्रस्तः। इह न भवति। प्रासादात् पतितः। अक्षेषु शौण्डः, अक्षशौण्डः। अक्षधूर्तः, अक्षकितवः। काम्पिल्ये सिद्धः, काम्पिल्यसिद्धः। छायाशुष्कः, कुम्भीपक्वः, चरकबन्धः। तीर्थध्वाङ्क्षः, तीर्थकाकः, तीर्थवायस इति ध्वाङ्क्षादिभिः क्षेप एव। इह न भवति। तीर्थे काकः। मासे देयम् ऋणम्, मासदेयम्। पूर्वाह्णे गेयं साम, पूर्वाह्णगेयम्। इह न भवति। मासे देया भिक्षा। अरण्येतिलकाः, अरण्येमाषका इत्येवमादीनां संज्ञायामलुक्। पूर्वाह्णे कृतम्, पूर्वाह्णेकृतम्। तत्रकृतम्। एवमवतप्तेनकुलस्थितमित्यादि। पात्रेसमितादीनामपि येषामलुक् तानि वाक्यानि,न चैषां समासान्तरमस्तीति पृथगर्थतायामदोषः। उदुम्बरमशकादीनामप्यनेनैव सिद्धम्। क्वचिद् वृत्तिरेव। उपसरजः, स्वादुंकारं भुङ्क्ते, संपन्नंकारं भुङ्क्ते। क्वचिद् वाक्यमेव। अग्रे भुक्त्वा, अग्र भोजम्।

[ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः। श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्। वा १। स्वयं क्तेन। खट्वा क्षेपे। सामि। कालाः। अत्यन्तसंयोगे च। तृतीया तत्कृतार्थेन गुणवचनेन। पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः। कर्तृकरणे कृता बहुलम्। कृत्यैरधिकार्थवचने। कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते। वा १। साधनं कृतेति वा पादहारकाद्यर्थम्। वा २।

अन्नेन व्यञ्जनम्। भक्ष्येण मिश्रीकरणम्। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः पञ्चमी भयेन। भयभीतभीतिभीभिरिति वक्तव्यम्। भा०। भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्। भा०। अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन। सप्तमी शौण्डैः। सिद्धशुष्कपक्वबन्धैश्च। ध्वाङ्क्षेण क्षेपे। ध्वाङ्क्षेणेत्यर्थग्रहणम्। वा १। कृत्यैर्ऋणे। कृत्यैर्नियोगे यद्ग्रहणम्। वा १। संज्ञायाम्। क्तेनाहोरात्रावयवाः। तत्र क्षेपे। पात्रेसमितादयश्च। पा० २।१।२४-४८, द्वितीया श्रितातीतपतितगतात्यस्तगमिगामिबुभुक्षादिभिः। प्राप्तापन्नाभ्यां तौ च द्वितीयया पुंवच्च। स्वयंसामी क्तेन। खट्वा क्षेपे। कालाः। अत्यन्तसंयोगे। तृतीया तत्कृतेन गुणवचनेन। अर्थादिसदृशसमतुल्याधिकैश्च। अर्धं चतसृभिः। एकं नविंशत्यादिभिः। कर्तृकरणे कृता बहुलम्। कृत्यैरधिकार्थवचने। भक्ष्यान्नयानपात्रैर्मिश्रीकरणव्यञ्जनपुण्यपूरणानि मिश्रोपसिक्तयुक्तपूर्णाद्यप्रयोगे। चतुर्थी यता। सुखहिताभ्याम्। तादर्थ्ये प्रकृत्या। बलिरक्षितधासमुराविधादिभिश्च। नित्यमर्थेनेदमर्थे। पञ्चमी भीतभीतिभीभयभीरुभीलुकजुगुप्सुभिः। अपेतापोढनिर्गतमुक्तपतितापत्रस्तैरसर्वा। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन। शतसहस्रौ परेण। सप्तमी सिद्धशुष्कपक्वबन्धादिभिः। शौण्डधूर्तकितवव्याडसंवीतपटुपण्डितकुशलनिपुणचपलान्तरादिभिः प्रसक्ताद्यप्रयोगे। ध्वाङ्क्षकाकवायसबकादिभिः क्षेपे। सिंहव्याघ्रवासवयुधिष्ठिरादिभिः पूजायाम्। यतावश्यके। संज्ञायाम्। ऋणमधमोत्तमाभ्याम्। क्तेनाहोरात्रावयवाः। तत्र। सगतिकारकेणापि क्षेपे। पात्रमवधारणे समितबहुलाभ्यां न चान्यसमासः। गेहगोष्ठौ शूरक्ष्वेडितर्दिविजितव्याडपटुपण्डितप्रगल्भैः। उदुम्बरः कृमिमशकाभ्यामुपमायाम्। अवटकूपौ कच्छपमण्डूकाभ्याम्। नगरं काकादिभिः। गेहेमेहिपिण्डीशूरौ निरीहतायाम्। पितरिशूरमातरिपुरुषौ क्रियायाम्। गर्भः सुहिततृप्तदृप्तैरनौचित्ये। कर्णेटिरिटिराचुरुचुराभ्याम्। स० ३।२।३४-७४]

चतुर्थी प्रकृत्या ॥ १७ ॥

चतुर्थ्यन्तं सुबन्त प्रकृतिवाचिना सुबन्तेन सहैकार्थं भवति। यूपाय दारु, यूपदारु। प्रकृत्येति किम्? रन्धनाय स्थाली। कथं तदर्थम्, मात्रर्थमिति? अन्यपदार्थे भविष्यति। कथम्—कुबेरबलिः, गोहितम्, गोमुखम्, गोरक्षितमिति? षष्ठ्या सिद्धम्।

[चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः। पा० २।१।३६, विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम्। वा ७। तादर्थ्ये प्रकृत्या। स० ३।२।४९ ff.]

**विशेषणमेकार्थेन ॥ १८ ॥**

विशेषणं सुबन्तं विशेष्येण सुबन्तेन समानाधिकरणेन सहैकार्थं भवति। नीलं च तदुत्पलं च, नीलोत्पलम्। बहुलाधिकारात् क्वचिद् वाक्यमेव भवति। दीर्घश्चारायणः, लोहितस्तक्षकः। क्वचिद् वृत्तिरेव। कृष्णसर्पः, लोहितशालिः। विशेषणमिति किम्? तक्षकः सर्पः। एकार्थेनेति किम्? कृष्णादन्यः। कथं छिन्नप्ररूढमिति? विशेषणमित्येव सिद्धम्। एवमेकपुरुषः, सर्वान्नम्, जरद्धस्ती, पुराणधान्यम्, *नवौदनम्, केवलान्नम्; पूर्वेषुकामशमी, सप्तर्षयः, पञ्चकपालं हविः, पञ्चगवधनम्, पञ्चपूली; याज्ञिककितवः, पापकुलालः, अणकनापितः। क्वचिद् विशेषणमुपमानभूतं भवति। शस्त्रीव श्यामा, शस्त्रीश्यामा। शरकाण्डगौरी। क्वचिद् विशेषणमुपमानभूतं परं भवति। पुरुषोऽयं व्याघ्र इव, पुरुषव्याघ्रः। पुरुषसिंहः। एवमन्येऽपि व्याघ्रादयः पठिताश्चापठिताश्च योज्याः। पूर्वपुरुषः, अपरपुरुषः, प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः। अश्रेणयः श्रेणयः कृताः, श्रेणिकृताः। एवमन्येऽपि श्रेण्यादयः कृतादिभिः पठितैश्चापठितैश्च योज्याः। कृताकृतम्, कृतापकृतम्, भुक्ताभुक्तम्, भुक्तविभुक्तम्; गतप्रत्यागतम्, यातानुयातम्, अशितानशितम्, क्लिष्टाक्लिशितम्, क्रयाक्रयिका, पुटापुटिका, फलाफलिका, मानोन्मानिका; सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्तमपुरुषः। पुरुषोत्तम इति बहुलाधिकाराद् विशेषणं परं भवति। उत्कृष्टपुरुषः, गोवृन्दारकः, पुरुषनागः, पुरुषकुञ्जरः। कतरकठः? कतमकठः? किंराजा यो न रक्षति, किंगौर्यो न वहति। किंपुरुषः, किन्नरः। †इभ्यपोटा, †इभ्ययुवतिः, अग्निस्तोक इति विशेषणं परं भवति, बहुलाधिकारात्। एवं दधिकतिपयम्, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोबष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्या-

* नवोदकम्—v. l.

† इभ्य०—MSS., Durga, Jumara, Hc. इभ०—Kās'.

पकः, कठधूर्तः ; गोप्रकाण्डम्, अश्वमतल्लिका। युवखलतिः, युवखलती। युवपलितः, युवपलिता। युववलिनः, युववलिना। युवजरन्, युवजरती। भोज्योष्णम्, तुल्यश्वेतः, सदृशकृष्णः। शुक्लकृष्णः, कृष्णशुक्लः। कुमारश्रमणा, गोगर्भिणी। मयूरस्येव विगतावंसावस्य, मयूरव्यंसकः। अथवा विगतावंसावस्य व्यंसकः, मयूर इव व्यंसको मयूरव्यंसकः। एवं छात्रव्यंसकः। कम्बोज इव मण्डः, कम्बोजमुण्डः। एवं यवनमुण्डः। उच्चं च तदवचं चेत्युच्चावचम्। एवमुच्चनीचम्। न किञ्चन, नास्य वा किञ्चन अस्तीत्यकिञ्चनम्। *आचोपचादीनि पृषोदरादिषु [५।२।१२७] द्रष्टव्यानि। स्नात्वा कालक इत्येवमादीनि तु वाक्यानि। एहिवाणिजाशब्दोऽत्रास्तीत्यर्शआदित्वात् [४।२।१४७] अच्। एहिवाणिजा क्रिया। एवमुत्पतनिपता इत्यादि। पूर्वश्चासौ कायश्चेति पूर्वकायः, कायैकदेशे कायशब्दः। इह कस्मान्न भवति—कायस्य पूर्वमर्धमिति ? सापेक्षत्वात्। एवमपरकायः, अधरकायः, उत्तरकायः, मध्यमकायः, मध्याह्नः; सायाह्नः। अर्धं च तत् पिप्पली च, अर्धपिप्पली, पिप्पल्यर्धमिति षष्ठीसमासः। दृश्यते च †वेद्यर्धं दक्षिणं मेरोः, स्वरार्धम्, कायार्धम्, चूलिकार्धम् ‡ एकान्नत्रिंशदिति समप्रविभागे प्रयोगः; असमप्रविभागेऽपि—¶न हीदमर्धजरतीयं लभ्यमिति। द्वितीया चासौ भिक्षा चेति द्वितीयभिक्षा। भिक्षाद्वितीयमिति षष्ठीसमासः। एवं तृतीयभिक्षा, भिक्षातृतीयम्। चतुर्थभिक्षा, भिक्षाचतुर्थम्। तुर्यभिक्षा, भिक्षातुर्यम्। तुरीयभिक्षा, भिक्षातुरीयम्। पूरणेन [२।२।२३] इति प्रतिषेधो न भवति, बहुलाधिकारात्।

* अचो०—L.

† चेद्यर्धं दक्षिणं मेरोः। दुर्गः।

‡ एकान्नत्रिंशत् has been misplaced here. Something about अर्धचतस्रः also appears to have been dropped. Cf. SK. iii.2.42-43.

¶ न चेदानीमर्धजरतीयं लभ्यम्—वृद्धिर्मे भविष्यति स्वरो नेति। तद् यथार्धं जरत्याः कामयतेऽर्धं नेति। महाभाष्यम् ४।१।७८।

देव-कण्ठ-श्रवण-भूत-वदान्याध्यापक-ब्राह्मण-क्षत्रिय-पटु-पण्डित-कुशल-चपल-निपुणाश्चप्रथमे कृत-मत-मितोक्त-भूत-समाजातानाताख्यात-सम्भावितावधारितावकल्पित-कलित-निराकृतापकृतापाकृतोदाहृतोदीरितोदित-दृष्ट-विश्रुतादिभिः। शाकपार्थिवाजातोल्वलि-कुतपसौश्रुत-स्मृतरोढ्योदनपाणिन्याणिमाण्डव्य-वलाका-कौशिक-विदर्भिकौण्डिन्य-परशुरामादयः प्रियाविलोपे। अधिकान्ता संख्या संख्ययाधिकलोपश्च। भागांशादिभिः पूरणान्ता लुक् च वा। मयूरव्यंसकाश्रो व्यंसकेनोयमायान्न चानेन समासः। कम्बोजयवनौ मुण्डेन। एहीडायवाभ्यामन्यपदार्थे नपुंसकत्वं च। अपेहि च वाणिजा-स्वागत-द्वितीय-विघस-प्रघसादिभिः क्रियायाम्। प्रेहिस्वागत-वाणिजाभ्याम्। प्रोह कटकर्दमाभ्यां द्वितीयया। छिन्धिभिन्ध्युद्धमविचक्षण-लवण-चूडादिभिः। आहर चेलवसनवनितादिभिः। आख्यातमाख्यातेन सातत्ये। उद्धरोत्सृजावसृजाभ्याम्। पचपतवपान्युदस्तैर्नैः। उन्मृजावमृजने। इहद्वितीयेह-पञ्चम्येहिरेयाहिराहोपुरुषिकाहंपूर्विकाहंप्रथमिकाहमहमिका-विचप्रचानिश्चप्रवादयः। जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तरि। स्नात्वाकालक-पीत्वास्थिरक-भुक्त्वासुहित-प्रोष्यपापीय-उत्पत्यपाकला-निपत्यरोहिणी-निपद्यश्यामादयः। आचोपचोच्चनीचाच-पराचोच्चावचाकिञ्चनाकुतोभयानि। पूर्वापरावरोत्तराण्येकदेशिनैकाधिकरणेन। सायाह्न-मध्याह्न-मध्यन्दिन-मध्यरात्रादयः। अर्धं समप्रविभागे वा। अर्धजरतीयार्धवैशसार्धोक्तादयः। द्वितीयतृतीयचतुर्थतुर्यतुरीयतलाग्रादयश्च। स० ३।२।७५-१२६]

प्राप्तापन्नौ द्वितीययात्वं च ॥ १९ ॥

प्राप्तापन्नौ द्वितीयान्तेन सहैकार्थौ भवतः, अत्वं चानयोरन्त्यस्य भवति। प्राप्तो जीविकाम्, प्राप्तजीविकः। प्राप्ता जीविकाम्, प्राप्तजीविका। आपन्नो जीविकाम्, आपन्नजीविकः, आपन्ना जीविकाम् आपन्नजीविका। मासो जातोऽस्य, मासजातः। जातिकालसुखादिभ्यश्च क्तान्तस्य परनिपात इष्यत एव। षष्ठीसमासो विशेषणेनानर्थक्यान् न भविष्यति।

[प्राप्तापन्ने च द्वितीयया। २।२।४, प्राप्तापन्ने द्वितीयार्थेन समस्येते, अत्वं च भवति प्राप्तापन्नयोरिति। भाष्यम्। प्राप्तापन्नाभ्यां तौ च द्वितीयया पुंवच्च। स० ३।२।३५]

नञ् ॥ २० ॥ [पा० २।२।६, स० ३।२।१२८]

नञ् इत्येतत् सुबन्तेन सहैकार्थं भवति। न ब्राह्मणः, अब्राह्मणः

बहुलाधिकारादसमर्थैरपि कैश्चिद् भवति। असूर्यम्पश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी [ ब्राह्मणः ]।

**ईषद् गुणेन** ॥ २१ ॥ [ स० ३।२।१३२ ]

ईषच्छब्दो गुणेनैकार्थो भवति। ईषत्कडारः, ईषत्पिङ्गलः। गुणेनेति किम्? ईषद् भोक्तव्यम्।

[ ईषदकृता। पा० २।२।७, ईषद् गुणवचनेन। २।२।७।१ ]

**षष्ठी** ॥ २२ ॥ [ पा० २।२।८, स० ३।२।१३२ ]

षष्ठ्यन्तं सुबन्तं सुबन्तेन सहैकार्थं भवति। राज्ञः पुरुषः, राजपुरुषः।

**न लनिर्धार्यपूरणभावतृप्तार्थैः** ॥ २३ ॥

लादेशेन निर्धार्यमाणार्थेन पूरणार्थेन भावार्थेन तृप्तार्थैश्च षष्ठ्यन्तमेकार्थं न भवति। मातुः स्मरन्। सर्पिषो दयमानः। गवां कृष्णाः सम्पन्नक्षीरतमाः। छात्राणां पञ्चमः। पटस्य शुक्लता, पटस्य शुक्लत्वम्, पटस्य शौक्ल्यम्। बहुलाधिकारात् क्वचिद् भवति। वर्तमानसामीप्यम्। कथं ब्राह्मणस्य शुक्ला दन्ता इति? सापेक्षत्वान् न भविष्यति। इह तु भवत्येव। चन्दनगन्धः, नदीघोषः, कन्यारूपम्, स्तनस्पर्शः, फलरस इति। फलानां तृप्तः, फलानां सुहितः, फलानामाशितः। ब्राह्मणस्योच्चैर्गृहमिति सापेक्षत्वान्न भविष्यति। ब्राह्मणस्य कर्तव्यम्। ब्राह्मणकर्तव्यमिति वृत्तिरपीष्यते। राज्ञः पाटलिपुत्रकस्य धनमिति धनसम्बन्धे षष्ठी, सम्बन्धाभावान्न भविष्यति। राज्ञो गौश्चाश्वश्च पुरुषश्चेति पृथगर्थतायां वाक्यमेव। राज्ञो गोऽश्वपुरुषाः, राजगोऽश्वपुरुषा इति वृत्तिरेकार्थीभावे। सर्पिषो ज्ञानमिति सम्बन्धषष्ठ्याः समासो भवत्येव—सर्पिर्ज्ञानमिति। तथा च मातृस्मरणम्, सुरेश्वरः, इध्मप्रव्रश्चनः, पलाशशातन इत्यादि दृश्यते। राज्ञां मतः, राज्ञां बुद्धः, राज्ञां पूजितः; इदमेषामासितम्; आश्चर्यो गवां दोहोऽगोपालकेनेति। भवत आसिका, अपां स्रष्टा, ओदनस्य पाचक इति सम्बन्धषष्ठ्याः समासो भवत्येव; स प्रतिषेधो नास्त्येव। तथा

ब्राह्मणयाजकः, गुरुपूजक इति याजकादिभिरिष्यत एव। क्रीडायां जीविकायां च *रूढत्वान् नित्यसमासः। उद्दालपुष्पभञ्जिका; †दन्तलेखकः, नखलेखकः।

[पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन। न निर्धारणे। पा० २।२। ११, १०, प्रतिपदविधाना च। २।२।१०।९, स० ३।२।१३९-१४१ कृद्योगा च। तत्स्थैश्च गुणैः। न तु तद्विशेषणैः। पा० २।२।८।१-३, याजकादिभिश्च। क्तेन च पूजायाम्। अधिकरणवाचिना च। कर्मणि च। तृजकाभ्यां कर्तरि। कर्तरि च। नित्यं क्रीडाजीविकयोः। पा० २।२।९,१२-१६। कृद्योगा। याजक-पूजक-परिचारक-परिवेषक-स्नापकाध्यापकोत्सादकोन्मादकोद्वर्तक-होतृ-भर्त्रादिभिश्च। रथपत्ती गणकेन। गुणात्तरेण तरलोपश्च। सर्वपश्चात्प्रभृतीनि च। तत्स्थैश्च गुणैः। मत्याधिकरणक्तेन। कर्तृकर्महेतुना कर्मणि। कर्तर्यकेन। कर्तृतृजकाभ्याम्। नित्यं क्रीडाजीविकयोः। स० ३।२।१३३-१३८, १४१-१४६]

## कुगादयोऽसुब्विधौ नित्यम् ॥२४॥

कुशब्दः प्रादयश्च सुबन्तेन सह नित्यमेकार्था भवन्ति, सुब्विधिविषयादन्यत्र। कुब्राह्मणः, कोष्णम्। प्रणायकः, अभिषेकः; प्रकृत्य, प्रकृतम्; दुष्पुरुषः, दुष्कृतम्; सुपुरुषः, सुकृतम्; अतिस्तुतम्, अभिष्टुतम्; आकडारः, आबद्धः। प्रादयो गताद्यर्थे प्रथमया [पा० २।२। १८ भा०, स० ३।२।१५३]। प्रगत आचार्यः, प्राचार्यः। प्रान्तेवासी। अत्यादयः क्रान्ताद्यर्थे द्वितीयया [पा० २।२।१८ भा०, स० ३।२।१५४]। अतिक्रान्तः खट्वाम्, अतिखट्वः। अतिमालः। अवादयः क्रुष्टाद्यर्थे तृतीयया [पा० २।२।१८ भा०, स० ३।२।१५५]। अवक्रुष्टं कोकिलया वनम्, अवकोकिलम्। अवमयूरम्। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या [पा० २।२।१८ भा०, स० ३।२।१५६]। परिग्लानोऽध्ययनाय, पर्यध्ययनः। निरादयः क्रान्ताद्यर्थे पञ्चम्या [पा० २।२।१८ भा०, स० ३।२।१५७]। निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः। असुब्-

* रूढिरवान्—L.

† दण्ड०—L.

विधाविति किम्? वृक्षं प्रति विद्योतते। रोदसी इवेति वाक्यमेव। तथा पुनःप्रवृद्धादयः। अन्यपदार्थे, सुप्सुपेति वा।

[कुगतिप्रादयः। पा० २।२।१८, अव्ययं प्रवृद्धादिभिः। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च। उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम्। भाष्यम्॥ गतयः। कुः पापेपदर्थयोः। दुर्निन्दाकृच्छ्राकृच्छ्रार्थयोः। स्वती पूजायाम्। अतिशयातिक्रमणयोश्च। आङीषदर्थाभिव्याप्त्योः। अन्वादयस्तिङोदात्तवता गतिमता च। स० ३।२।१४७-१५२, १५८]

ऊर्यादिकारिकाच्विडाचः क्रियार्थैः॥२५॥

ऊर्यादयः शब्दाः कारिकाशब्दश्च्व्यन्तो डाजन्तश्च क्रियार्थैः सुबन्तैरेकार्था भवन्ति। ऊरीकृत्य, ऊरीकृतम्। उररीकृत्य, उररीकृतम्। ऊरी। उररी। उरसी। *पाम्पी। ताली। आताली। वेताली। धूली। धूपी। शलाका। संकला†। ध्वंसकला। भ्रंशकला। गुलुगुहा। सजूस्। फलूस्। फाली। विक्ली। आक्ली। अलम्बी। केवाली। सेवाली। वार्दाली। मसमसा। समसमा। श्रौषट्। वौषट्। वषट्। स्वाहा। स्वधा। प्रादुस्। श्रत्। आविस्। कारिकाकृत्य। शुक्लीकृत्य। पटपटाकृत्य।

[गतिश्च। पा० १।४।६०, कारिकाशब्दस्य। १।४।६०।१, ऊर्यादिच्विडाचश्च। १।४।६१; गतयः। स० ३।२।१४७। श्रद्दधाती। अन्तर्गतत्वाद्क्विविधिषु। गतयश्च। कारिकाच्विडाचश्च। ऊर्युररी चाङ्गीकारे। पाम्पी धूसी साल्याताली वेताली च विस्तारे। वार्दाली सेवाली केवाली कौपारवाताोष्टी शकला श्रंसकला ध्वंसकला भ्रंसकला मस्मसा मसमसा च हिंसायाम्। गुलुगुधा पीडायाम्। आक्ली विक्ली फली फलू विकारे। सजूः सहार्थे। वषट् वौषट् श्रौषट् स्वाहा स्वधा सम्प्रदाने। प्रादुराविषी प्राकाश्ये। स० १।१।१२९-१४० ]

अनुकरणम्॥२६॥

---

* पाली—MSS, पापी—L. from Kās'ikā, Hc., S K. and Vardhamāna have पाम्पी.

† The correct reading would appear to be शकला as shown by Kramadīs'vara (iii. 463) and Hemacandra (iii. I.2 वृ० वृ०).

अनुकरणशब्दः क्रियार्थैः सुबन्तैरेकार्थो भवति। खाट्कृत्य। कथम्—खाड् इति कृत्वा निरष्ठीवदिति ? इतिशब्देन व्यवधानान्न भविष्यति।

[अनुकरणं चानितिपरम्। पा० १।४।६२, स० १।१।१४१]

भूषणादरानादरेष्वलंसदसतः ॥२७॥

भूषणादिष्वर्थेष्वलमादयः शब्दाः क्रियार्थैः सुबन्तैरेकार्था भवन्ति। अलंकृत्य, सत्कृत्य, असत्कृत्य। भूषणादिष्विति किम् ? अलं भुक्त्वा गतः। सत् कृत्वा गतः, असत् कृत्वा गतः।

[आदरानादरयोः सदसती। भूषणेऽलम्। पा० १।४।६३-६४, स० १।१।१४२-१४३]

अग्रहेऽन्तः ॥२८॥

अन्तःशब्दोऽग्रहणे क्रियार्थैः सुबन्तैरेकार्थो भवति। अन्तर्हत्य। अग्रह इति किम् ? अन्तर्हत्वा मूषिकां गतः। गृहीत्वा गत इत्यर्थः।

[अन्तरपरिग्रहे। पा० १।४।६५, स० १।१।१४४]

कणेमनसी तृप्तौ ॥२९॥

कणे मनस् इत्येतौ तृप्तौ गम्यमानायां क्रियार्थैः सुबन्तैरेकार्थौ भवतः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावत् तृप्त इत्यर्थः। तृप्ताविति किम् ? कणे हत्वा, मनो हत्वा गतः।

[कणेमनसी श्रद्धाप्रतिघाते। पा० १।४।६६, स० १।१।१४५]

पुरोऽस्तमसंख्यम् ॥३०॥

पुरस् अस्तमित्येतौ शब्दावविद्यमानसंख्यौ क्रियार्थैः सुबन्तैरेकार्थौ भवतः। पुरस्कृत्य, अस्तंकृत्य। असंख्यमिति किम् ? तिस्रः पुरः कृत्वा गतः। अस्तं कृत्वा काण्डं गतः।

[पुरोऽव्ययम्। अस्तं च। पा० १।४।६७ ६८, पुरोऽस्तमव्यये। स० १।१।१४६]

अच्छ गत्यर्थवदिभिः ॥३१॥ [स० १।१।१४७]

अच्छशब्दो गत्यर्थवंदिना च सुबन्तैरेकार्थो भवति। अच्छगत्य, अच्छव्रज्य; अच्छोद्य।

[अच्छ गत्यर्थवदेषु। पा० १।४।६९]

**अदोऽनुपदेशे** ॥३२॥ [पा० १।४।७०, स० १।१।१४८]

अदःशब्दोऽनुपदेशे वर्तमानः क्रियार्थैः सुबन्तैरेकार्थो भवति। अदःकृत्य चिन्तयति। अनुपदेश इति किम्? अदः कृत्वा गतः।

**तिरोऽन्तर्धौ** ॥३३॥ [पा० १।४।७१, स० १।१।१४९]

तिरःशब्दोऽन्तर्धाने क्रियार्थैः सुबन्तैरेकार्थो भवति। तिरोभूय। अन्तर्धाविति किम्? तिरो हृत्वा मूषिकां गतः।

**कृञः वा** ॥३४॥

तिरःशब्दः करोतिना सुबन्तेन सहैकार्थो वा भवति। तिरस्कृत्य, तिरःकृत्वा।

[विभाषा कृञि। पा० १।४।७२, कृञो वा। स० १।१।१५०]

**उपाजेऽन्वाजे** ॥३५॥ [पा० १।४।७३]

उपाजेऽन्वाजे इत्येतौ शब्दौ कृञा सुबन्तेन सहैकार्थौ वा भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा।

[उपाजेऽन्वाजे सामर्थ्याधाने। स० १।१।१५१]

**साक्षाद्दादीनि** ॥३६॥

साक्षादित्येवमादीनि करोतिना सुबन्तैर्नैकार्थानि वा भवन्ति। साक्षात्कृत्य, साक्षात् कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा। साक्षात्। मिथ्या। चिन्ता। भद्रा। लोचना। आर्या। *आस्था। प्राजर्या। प्राजरुहा। बीजरुहा। संसर्या। अर्थे। लवणम्। उष्णम्। †शीतम्। उदकम्। आर्द्रम्। नमस्।

[साक्षात्प्रभृतीनि च। पा० १।४।७४, साक्षान्मिथ्याचिन्ताभद्रारोचनामास्थान्याप्राजर्यप्राजरुहाबीजरुहासंसर्यादन्यर्थे। अर्थेऽग्नौ यदो-विकल्पने-विहसने-प्रतपने-शीतं-लवणमुष्णमुदकमार्द्र-प्रादुराविर्नमसश्च। स० १।१।१५२-१५३]

---

* अस्था-L., but H. has आस्था. † शीतलम्—पाः।

**अनत्याधान उरसिमनसिमध्येपदेनिवचने** ॥ ३७ ॥ [स० १।१।१५४]

उपर्याधानाद् अन्यत्रोरस्यादयः शब्दाः करोतिना सुबन्तेनैकार्था वा भवन्ति। उरसिकृत्य, उरसि कृत्वा। मनसिकृत्य, मनसि कृत्वा। मध्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा। निवचनेकृत्य, निवचने कृत्वा। अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते। हस्तिनः पदे कृत्वा शिरः शेते।

[ अनत्याधान उरसिमनसी। मध्ये पदे निवचने च। पा० १।४।७५-७६ ]

**नित्यं हस्तेपाणावुद्वाहे** ॥ ३८ ॥

हस्ते पाणावित्येतौ शब्दावुद्वाहे करोतिना सुबन्तेन नित्यमेकार्थौ भवतः। हस्तेकृत्य, पाणौकृत्य। उद्वाह इति किम्? हस्ते कृत्वा कार्षापणं गतः।

[ नित्यं हस्ते पाणावुपयमने। पा० १।४।७७, स० १।१।१५५ ]

**प्राध्वं वन्धे** ॥ ३९ ॥ [ ० वन्धने। पा० १।४।७८ ]

प्राध्वंशब्दो वन्धने करोतिना सुबन्तेन नित्यमेकार्थो भवति। प्राध्वंकृत्य। वन्ध इति किम्? प्राध्वं कृत्वा शकटं गतः।

[ प्राध्वं बन्धनानुकूल्ये। स० १।१।१५६ ]

**जीविकोपनिषदावौपम्ये** ॥४०॥ [पा० १।४।७५, स० १।१।१५७]

एतौ शब्दावौपम्ये करोतिना सुबन्तेन नित्यमेकार्थौ भवतः। जीविकाकृत्य, उपनिषत्कृत्य। औपम्य इति किम्? जीविकां कृत्वा गतः।

**असत्यं वानभिप्रेताख्याने क्त्वा** ॥ ४१ ॥

असत्यं सुबन्तं करोतिना क्त्वान्तेनकार्यं वा भवति, अनभिप्रेतं चेदाख्यानं भवति। ब्राह्मण, पुत्रस्ते जात.। किं तर्हि वृषल नीचैः कृत्वाचक्षे? नीचैःकृत्य? उच्चैर्नाम प्रियमाख्येयम्। अनभिप्रेताख्यान इति किम्? उच्चैः कृत्वा।

[ अव्ययेऽयथाभिप्रेताख्याने कृञ्. क्त्वाणमुलौ । पा० ३।४।५९ । समासार्थं वचनम् । काशिका । अव्ययेऽनभिप्रेताख्याने कृञः क्त्वा च । स० २।४।२७६]

**तिर्यक् समाप्तौ** ॥ ४२ ॥

तिर्यक्शब्दः समाप्तौ करोतिना क्त्वान्तेनकार्थो वा भवति। तिर्यक्कृत्य, तिर्यक् कृत्वा। समाप्ताविति किम्? तिर्यक् कृत्वा काण्डं गतः।

[ तिर्यच्यपवर्गे । पा० ३।४।६०, स० २।४।२७७ ]

**स्वाङ्गात् तस्नाधार्थे भुवा च** ॥ ४३ ॥

स्वाङ्गाद् यस्तस् तदन्तं नार्थं धार्थं च करोतिना भवतिना च क्त्वान्तेनैकार्थं वा भवति। मुखतःकृत्याचष्टे, मुखतः कृत्वा। मुखतोभूय, मुखतो भूत्वा। नानाकृत्य, नाना कृत्वा। नानाभूय, नाना भूत्वा। द्विधाकृत्य, द्विधा कृत्वा। द्विधाभूय, द्विधा भूत्वा। ऐकध्यंकृत्य, ऐकध्यं कृत्वा। ऐकध्यंभूय, ऐकध्यं भूत्वा। तसादीनामन्योन्यसाहचर्यादिह न भवति। मुखे तस्यति, मुखतः कृत्वा; पृथक् कृत्वा। यदा नानैव सदन्यथा क्रियते, तदा कस्मान्न भवति? करोतेः श्रुतेनैवाभिसम्बन्धात्।

[ स्वाङ्गे तस्प्रत्यये कृभ्वोः। नाधार्थप्रत्यये च्व्यर्थे। पा० ३।४।६१-६२, स्वाङ्गतस्नाधार्थे भुवश्च। स० २।४।२७८ ]

**तूष्णीम्** ॥ ४४ ॥

तूष्णीमित्येतद् भवतिना क्त्वान्तेनैकार्थं वा भवति। तूष्णीभूय, तूष्णीं भूत्वा।

[ तूष्णीमि भुवः। पा० ३।४।६३, तूष्णीमि च। २।४।२७९ ]

**अन्वगानुकूल्ये** ॥ ४५ ॥

अन्वगित्येतद् भवतिना क्त्वान्तेनैकार्थं वा भवति, आनुकूल्ये गम्यमाने। अन्वग्भूयास्ते, अन्वग् भूत्वा। आनुकूल्य इति किम्? अन्वग् भूत्वा तिष्ठति शत्रुः।

[ अन्वच्यानुलोम्ये पा० ३।४।६४, स० २।४।२८० ]

**अनेकमन्यार्थे** ॥ ४६ ॥

अनेकं सुवन्तमन्यस्य पदस्य सुवन्तस्यार्थे वर्तमानमेकार्थं भवति। चित्रा गावो यस्य सः, चित्रगुः। मत्ता बहवो मातङ्गा यस्मिन् वने तद् वनं मत्तबहुमातङ्गम्। आरूढो वानरो यं वृक्षं सः, आरूढवानरः। पूजिता अतिथयो येन सः, पूजितातिथिः। उपहृतः पशुरस्मै, उपहृतपशुः। तः परो यस्मात् सोऽयं तपरः। उपगता दश एषाम्, उपदशाः। आसन्नदशाः, अदूरदशाः, अधिकदशाः। *त्रिर्दश परिमाणमेषाम्, त्रिदशाः। कथं दशशब्दः संख्याने वर्तते? परिमाणशब्दसान्निध्यात्। यथा पञ्च परिमाणमेषाम्, पञ्चकाः शकुनय इति। द्वौ वा त्रयो वा परिमाणमेषाम्, द्वित्राः। वाशब्दस्यार्थे वा। द्वौ वा त्रयो वा, द्वित्राः शकुनयः। दक्षिणस्याश्च पूर्वस्याश्च †दिशो यदन्तरालम्, दक्षिणपूर्वा दिक्। दक्षिणा चासौ पूर्वा चेति वा दक्षिणपूर्वा दिक्। सह पुत्रेणागतः, सपुत्र आगतः। सलोमकः; विद्यमानलोमक इत्यर्थः। एवं सपक्षकः। अस्तिक्षीरा ब्राह्मणीत्यस्तिशब्दोऽसंख्यः। क्वचिद् गतार्थत्वात् पदान्तराणामप्रयोगः। कण्ठेस्थाः काला अस्य, कण्ठेकालः। उष्ट्रमुखमिव मुखमस्य, उष्ट्रमुखः। केशसंघातश्चूडा अस्य, केशचूडः। सुवर्णविकारोऽलङ्कारोऽस्य, सुवर्णालङ्कारः। प्रपतितं पर्णमस्य, प्रपतितपर्णः। प्रगतं पर्णमस्य, प्रपर्णः। अविद्यमानाः पुत्रा अस्य, अविद्यमानपुत्रः। न सन्ति पुत्रा अस्य, अपुत्रः। क्वचिन्न भवति। पञ्चभिर्भुक्तमस्य, भ्रातुः पुत्रोऽस्यास्तीति‡, बहुलाधिकारात्।

[शेषो बहुव्रीहिः। अनेकमन्यपदार्थे। संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये। दिङ्नामान्यन्तराले। तेन सहेति तुल्ययोगे। पा० २।२।२३, २६-२८, बहुव्रीहिः समानाधिकरणानाम्। अव्ययानां च। सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च। समुदायविकारषष्ठ्याश्च। प्रादिभ्यो धातुजस्य वा। नञोऽस्त्यर्थानाम्। अर्थनियमे मत्वर्थग्रहणम्। सुबधिकारेऽस्तिक्षीरादिवचनम्।

* त्रिदश—L.

† यत्, though found in the Kās'ika also, is superfluous. Read दिशोरन्तरालं.

‡ Omit अस्तीति.

२।२।२४।१०-१५, १७,२१ । शेषो बहुव्रीहिः । अदूराधिकासन्नाः संख्यया संख्येये । संख्या सुजर्थे । वार्थे च । अव्ययम् । अन्यपदार्थे । अस्तिक्षीरादयः । उपमानमुपमेयसरूपोत्तरपदलोपश्च । सप्तमी पूर्वं समानाधिकरणम् । समुदायविकारषष्ठीसमस्तम् । प्रादिभ्यो धातुजं वा चोत्तरपदलोपश्च । नञोऽस्त्यर्थम् । अनेकं मतुपोऽर्थे । कर्तृकर्म प्रवचनमप्रथमायाः । दिङ्नामान्यन्तराले । सह तृतीया तुल्ययोगे । क्वचिद्विद्यमानार्थे । स० ३।३।१-१५, १७-१८ ]

तत्र गृहीत्वा तेन प्रहृत्य युद्धे सरूपम् ॥ ४७ ॥

सप्तम्यन्तं तृतीयान्तं च समानरूपमनेकं तत्र गृहीत्वा तेन प्रहृत्येत्यनयोरर्थयोर्युद्धे इत्यन्यपदार्थ एकार्थं वा भवति । केशेषु च केशेषु च गृहीत्वा युद्धं वृत्तम्, केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्य युद्धं वृत्तम्, दण्डादण्डि । मुष्टामुष्टि । इज् व्यतिहारे [ ४।४।११६ ] इतीच् । इचि [ ५।२।४८] इत्यात्वम् । तत्र तेनेति किम् ? काये च काये च प्रहृत्य युद्धं वृत्तम् । गृहीत्वा प्रहृत्येति किम् ? रथे च रथे च स्थित्वा युद्धं वृत्तम् । युद्ध इति किम् ? हस्ते च हस्ते च गृहीत्वा सख्यं वृत्तम् । सरूपमिति किम् ? दण्डैश्च मुसलैश्च प्रहृत्य युद्धं वृत्तम् ।

[ तत्र तेनेदमिति सरूपे । पा० २।२।२७, तत्र गृहीत्वा तेन प्रहृत्येति सरूपे युधि क्रियाव्यतीहारे । स० ३।३।१६ ]

चार्थे ॥ ४८ ॥

अनेकं सुबन्तं चार्थे एकार्थं वा भवति । चार्था बहवः, समुच्चयोऽन्वाचय इतरेतरयोगः समाहारश्चेति । तत्रेतरेतरयोगे समाहारे चैकार्थीभावः सम्भवति, न समुच्चये नाप्यन्वाचये । अश्वश्च बलीवर्दश्च, अश्वबलीवर्दौ । अश्वबलीवर्दम् । एतस्मिन्नेकार्थीभावकाण्डे यदेव पूर्वमुक्तं तदेव पूर्वं निपतति, क्रमव्यतिक्रमे प्रयोजनाभावात् । क्वचिद् विपर्ययोऽपि दृश्यते, बहुलाधिकारात् । दन्तानां राजा, राजदन्तः । क्वचित् क्रमं प्रत्यनादरात् पूर्वकालस्यापि परनिपातः । लिप्तवासितः, नग्नमुषितः, सिक्तसम्मृष्टः, भृष्टलुञ्चितः, अवक्लिन्नपक्वः, अर्पितोतः, उप्तगाढः । चार्थे यदेकार्थ्यं तत्र क्वचिदिदुदन्तं पूर्वं निपतति । अग्निवातौ,

पटुगुप्तौ। क्वचित् परं निपतति। चित्रास्वाती, भार्यापती, जम्पती, दम्पती, पुत्रपती, पुत्रपशू, केशश्मश्रु, शिरोविजु*। क्वचिदनियमः। सर्पिर्मधुनी, मधुसर्पिषी। अन्तादी, आद्यन्तौ। गुणवृद्धी, वृद्धिगुणौ। पटुमृदुशुक्लाः, पटशुक्लमृदवः। क्वचिदजाद्यदन्तं पूर्वं निपतति। अश्वखरम्, उष्ट्रखरम्। क्वचिद् विपर्ययोऽपि दृश्यते, शूद्रार्यम्, आर्यशूद्रम्। अवन्त्यश्मकम्। विष्वक्सेनार्जुनौ। क्वचिदनियमः। धर्मार्थौ, अर्थधर्मौ। शब्दार्थौ, अर्थशब्दौ। कामार्थौ, अर्थकामौ। चन्द्रार्कौ, अर्कचन्द्रौ। इन्द्राग्नी, अग्नीन्द्रौ। चन्द्रार्केन्द्राः, अर्कचन्द्रेन्द्राः, इन्द्रार्कचन्द्राः। क्वचिदल्पाक्षरं पूर्वं निपतति। प्लक्षन्यग्रोधौ, धवखदिरौ। क्वचिद् विपर्ययः, उलूखल-मुसले, तण्डुलकिण्वम्, चित्ररथबाह्लीकौ, स्नातकराजानौ, अक्षिभ्रुवम्, दारगवम्। क्वचिदनियमः। धनपतिरामकेशवाः। विपूयविनीयजित्या मुञ्जकल्कहलिषु [पा० ३।१।११७]। ऋतुनक्षत्राणामानुपूर्व्येण तुल्याचाम्। हेमन्तशिशिरौ, कृत्तिका-रोहिण्यौ। अतुल्याचामल्पाचः पूर्वनिपातः, ग्रीष्मवसन्तौ। तदयुक्त-मन्यथापि दर्शनात्। शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् [चरक-संहिता, सूत्र० २७।२२६]। श्रवणाधनिष्ठाश्विनीषु यायान्† नरः फलोपचयकामः। संख्याभ्रातृवर्णानामपि क्रमात् पूर्वनिपातमिच्छन्ति। पञ्च च षट् च, पञ्चषट्। युधिष्ठिरार्जुनौ। ब्राह्मणक्षत्रियवैश्यशूद्राः। तदप्ययुक्तं व्यभिचारदर्शनात्। द्व्येकयोर्द्विवचनैकवचने [पा० १।४।२२] निद्विदृष्टिविवर्जिता। अर्जुनभीमसेनौ। शूद्रविट्क्षत्रियविप्राणाम्।

* शिरोविदु—L. from MSS, but the following passage from the Aitareya-Āraṇyaka conclusively shows that the correct reading is शिरोविजु. अथातः शिरः, तद् गायत्रीषु भवति,..अथातो विजवः, ता विराजो भवन्ति। Viju is "that part of a bird's body on which the wings grow" (M. W.) ग्रीवाया अधस्तना अस्थिविशेषाः. Sāyaṇa. कृकाटिकाप्रदेशः. He.Nyasa iii.1 115. शिरश्च विजुश्च शिरोविजु। विजु ग्रीवा स्कन्धो वा। Gaṇaratna ii,80. Vṛtti.

† यजेन्—दुर्गटीका।

लघ्वक्षरं पूर्वं निपतति। कुशकाशम्। तदपि सव्यभिचारम्, काशकुशावलम्बनमिति दर्शनात्। अभ्यर्हितं पूर्वं निपतति। वासुदेवार्जुनौ। तत्रापि नरनारायणाविति दृश्यते व्यभिचारः। *नागृहीतविशेषण विशेष्ये बुद्धिः प्रवर्तत इति विशेषणं पूर्वं निपतति। नीलोत्पलम्, चित्रगु.। सर्वादीनामपि विशेषणत्वादेव पूर्वनिपातः। सर्वश्वेतः, सर्वकृष्णः। तथा संख्याया., पञ्चरक्तः, सप्तोन्नतः, द्व्यन्यः, त्र्यन्यः। सप्तम्यन्तस्यापि विशेषणत्वादेव पूर्वनिपातः। कण्ठेकालः, वहेगडुः। कथं गडुकण्ठः, गडुशिराः, वज्रपाणिरिति? गडूपलक्षितः कण्ठोऽस्य, गडुकण्ठः। अन्यथा कण्ठेगडुः। एवं गडुशिराः, शिरसिगडुः। वज्रपाणिः, पाणिवज्रः। क्तान्तस्यापि विशेषणत्वादेव पूर्वनिपातः। कृतकटः, भिक्षितभिक्षः। कटे कृतमनेनेति विग्रहे कामचारः, महाहवरिपुस्कन्धघृष्टचक्राय चक्रिण इति दर्शनात्। उद्यतासिः, अस्युद्यत इति विशेषणविशेष्ययोर्यथेष्टत्वादुभयमपि सम्भवति। एवमाहिताग्निः,अग्न्याहितः। जातदन्तः, दन्तजातः। जातपुत्रः, पुत्रजातः। जातश्मश्रुः, श्मश्रुजातः। पीततैलः, तैलपीतः। पीतघृतः, घृतपीतः। ऊढभार्यः, भार्योढः। एवमन्यत्रापि। तथा जातिकालसुखादिभ्यः। सारङ्गजग्धी, जग्धसारङ्गी। पलाण्डुभक्षितः, भक्षितपलाण्डुः। मासजातः, जातमासः। मुखहीना, हीनमुखा। एवं गुडप्रियः, प्रियगुडः। एवमुत्तरपदार्थेऽपि। कडारजैमिनि, जैमिनिकडारः। गडुलकाणः, काणगडुलः। †खञ्जकुण्ठः, कुण्ठखञ्जः। खोडखलतिः, खलतिखोडः। गौरवृद्धः, वृद्धगौरः। भिक्षुपिङ्गलः, पिङ्गलभिक्षुः। तनुवठरः, वठरतनुः। कृष्णश्वेतः, श्वेतकृष्ण इत्यादि।

[चार्थे द्वन्द्वः। पा० २।२।२९, चार्थे युगपदधिकरणवचनतायां द्वन्द्वः। स०

---

* The Nyāya is generally read thus: नागृहीतविशेषणा बुद्धिर्विशेष्ये प्रवर्तते or विशेष्ये चोपजायते।

† खञ्जकुण्ठः, कुण्ठखञ्जः। खञ्जकुण्ठः, कुण्ठखञ्जः। MSS.

‡ प्रथमानिर्दिष्टमुपसर्जनम् इत्युत्तरम्। हृदयहारिणी ३।३।५८।

३।३।१९, प्रथमानिर्दिष्टं समास उपसर्जनम्*। पा० १।२।४३, उपसर्जनं पूर्वम्। पा० २।२।३०। स० ३।३।५८, राजदन्तादिषु परम्। पा० २।२।३१। राजदन्त-लिप्तवासित-सिक्तसंमृष्ट-भृष्टलुञ्चित-नग्नमुषितावक्लिन्नपक्वार्पितोतोप्तगाढाध-मणो त्तमर्ण-परःशत-परःसहस्रादिषु परम्। बिम्बोष्ठ-बिम्बाधर-पुरुषोत्तमादिषु वा। स० ३।३।५९-६०। द्वन्द्वे घि। अजाद्यदन्तम्। अल्पाच्तरम्। पा० २।२।३२-३४। अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु। ऋतुनक्षत्राणामानु-पूर्व्येण समानाक्षराणाम्। अभ्यर्हितम्। लघ्वक्षरम्। (अपर आह—सर्वत एवाभ्यर्हितं पूर्वं निपततीति वक्तव्यम्, लघ्वक्षरादपीति। भाष्यम्।) वर्णानामानुपूर्व्येण। भ्रातुश्च ज्यायसः। संख्याया अल्पीयसः। धर्मादिषूभयम्। २।२।३४।२-९। इदुद् द्वन्द्वे। न स्वातितिष्यश्रायाः। पतिर्भार्यायाः। जायाया जं दं च वा। पशुश्च पुंसात्। श्मश्रु केशात्। जानुविजु† शिरसः। सर्पिर्मधु-दीर्घलघु-गुणवृद्ध्यादिषु वा। अजाद्यदन्तम्। न शूद्रार्यावन्त्यश्मक-विष्वक्सेनार्जुनादिषु। धर्मार्थ-कामार्थ-शब्दार्थाद्यग्नाग्नीन्द्र-चन्द्रार्कादिषु वा। अल्पाच्तरम्। नोलूखलमुसल-तण्डुलकिण्व-चित्ररथबाह्लिक-स्नातकराजन्यक्षिभ्रुव-दारगवोशीरबीजादिषु। शमीरणाग्न्या॰दत्या-चन्द्र-पाणिनीयरौढीयादिषु वा। लघ्वक्षरम्। न श्रद्धातपसादिषु। शकृन्मूत्र-कुशकाशादिषु वा। अभ्यर्हितम्। न नरनारायणादिषु। तपःश्रुतादिषु वा। मासर्तुनक्षत्राण्यानुपूर्व्येण। न पुष्यपुनर्वस्वादिषु। वसन्तग्रीष्मादिषु वा। ज्यायान् भ्रातृणाम्। न पाण्डुधृतराष्ट्रादिषु। भीमसेनार्जुनादिषु वा। वर्णानां च। बहुपूर्वमश्च। संख्यानामल्पीयः। स० ३।३।६१-८९। सप्तमीविशेषणे बहुव्रीहौ। पा० २।२।३५, बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्। वा प्रियस्य। सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्। २।२।३५।१-३। निष्ठा। २।२।३६, निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्। प्रहरणार्थेभ्यश्च। द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन। उभाभ्यामल्पाच्तरम्। २।२।३६, वा १, ४-६ वाहिता-ग्न्यादिषु। कडाराः कर्मधारये।२।२।३७-३८। बहुव्रीहौ च। सर्वनाम च सर्वतः। विशेषणम्। प्रियो वा। सप्तमी। ग ड्वादिभ्यो वा। नेन्द्वादिभ्यः। प्रहरणार्थेभ्यश्च। क्तान्तं वा। नित्यं शेषे। आहिताग्नि-जातपुत्र-जातदन्त-जातश्मश्रु-पीतघृत-पीततैल-पीतमद्य-पीतविवोढभार्य-गतार्थ-च्छिन्नशीर्षादिषु वा। जातिकालसुखादिभ्यश्च। *कडार-गडुल-काण-खञ्ज-कुण्ठ-खोड-खलति-गौर-पिङ्गल-बुड-भिक्षुक- बटर-तनवः* कर्मधारये। स० ३।३।९०-१०२]

* Foot-note ‡ on the previous page.

† MSS. have ०विद्रु and ०विषु, but the correct reading should be ०विजु as pointed out by Vardhamāna: भोजस्तु शिरोविजू इत्याह.

**समाहारे नपुंसकम्** ॥४९॥

चार्थे समाहारे यदेकार्थं तन्नपुंसकं भवति। तथाचैवोदाहृतमुदाहरिष्यते च।

[स नपुंसकम्। पा० २।४।१७, द्वन्द्वः समाहार एकवच्च। स० ३।३।११९]

**अनुवादे चरणानां स्थेणोर्लुङि** ॥५०॥ [स० ३।३।३१-०चरणाः ०]

चरणानामनुवादविषये समाहार एवैकार्थ्यं भवति, स्थेणोर्लुङ्-परयोः प्रयोग सति। प्रत्यष्ठात् कठकौथुमम्, उदगात् कठकालापम्। एषामुदयप्रतिष्ठयोः प्रमाणान्तरावगतयोः शब्देनाभिधानमनुवादः। अन्यत्र उदगुः कठकालापाः। चरणानामिति किम्? उदगुर्मीमांसकवैयाकरणाः। स्थणोरिति किम्? अगमन् कठकालापाः। लुङीति किम्? अतिष्ठन् कठकालापाः।

[अनुवादे चरणानाम्। स्थेणोः। अद्यतन्यां च। पा० २।४।३, वा० १-२]

**अध्वर्युक्रतूनामनपुंसकानाम्** ॥५१॥

यजुर्वेदविहितानां क्रतूनामनपुंसकलिङ्गानां समाहार ऐकार्थ्यं भवति। अर्काश्वमेधम्। अध्वर्युग्रहणं किम्? पञ्चौदनदशौदनौ। क्रतूनामिति किम्? दर्शपौर्णमासौ। ससोमको हि यागः क्रतुः। अनपुंसकानामिति किम्? वाजपेयराजसूये।

[अध्वर्युक्रतुरनपुंसकम्। पा० २।४।४, अनपुंसकान्यध्वर्युक्रतवः। स० ३।३।३२]

**सन्निकृष्टपाठानाम्** ॥५२॥

अविप्रकृष्टाध्ययनानां समाहार ऐकार्थ्यं भवति। पदकक्रमकम्। सन्निकृष्टग्रहणं किम्? याज्ञिकवैयाकरणौ। पाठग्रहणं किम्? पितापुत्रौ।

[अध्ययनतोऽविप्रकृष्टाख्यानाम्। पा० २।४।५, अध्ययनतः सन्निकृष्टानि स० ३।३।३०

**अप्राणिजातीनाम् ॥५३॥**

अप्राणिविषयाणां सामान्यशब्दानां समाहार ऐकार्थ्यं भवति। आराशस्त्रि, धानाशष्कुलि। अप्राणिग्रहणं किम्? ब्राह्मणक्षत्रियौ। प्राणिसदृशग्रहणादद्रव्यजातेर्न भवति। रूपरसगन्धस्पर्शाः। जातीनामिति किम्? नन्दकपाञ्चजन्यौ।

[ जातिरप्राणिनाम्। पा० २।४।६, अप्राणिनि जातयः। स० ३।३।३४ ]

**नदीदेशनगराणां भिन्नलिङ्गानाम् ॥५४॥**

नदीनां देशानां नगराणां च नानालिङ्गानां समाहार ऐकार्थ्यं भवति। गङ्गाशोणम्। कुरुकुरुक्षेत्रम्। मथुरापाटलिपुत्रम्*। देशानामिति सिद्धे नियमार्थं वचनम्। नगराणामेव यथा स्यात्, ग्रामाणां मा भूत्। जाम्बवशालूकिन्यौ। इह कथम्—शौर्यं च नगरं केतवता† च ग्रामः, शौर्यकेतवतम्? नगराश्रयो हि विधिरस्ति, ग्रामाश्रयः प्रतिषेधो नास्ति। नदीदेशनगराणामिति किम्? कुक्कुटमयूर्यौ। देशग्रहणेन जनपदस्य ग्रहणम्, पृथग् नदीग्रहणात्। गौरीकैलासौ। भिन्नलिङ्गानामिति किम्? गङ्गायमुने, मद्रकेकयौ, मथुरातक्षशिले।

[ विशिष्टलिङ्गो नदीदेशोऽग्रामाः। पा० २।४।७, नदीदेशनगराणि भिन्नलिङ्गानि। स० ३।३।३५ ]

**‡ नित्यवैराणाम् ॥५५॥**

नित्यानुबद्धवैराणां§ समाहार ऐकार्थ्यं भवति। अहिनकुलम्, अश्वमहिषम्, काकोलूकम्। नित्यग्रहणं किम्? गोपालकशालङ्कायनाः¶।

[ येषां च विरोधः शाश्वतिकः। पा० २।४।९, नित्यवैराः। स० ३।३।३६ ]

**कारूणाम् ॥५६॥**

कारूणां समाहार ऐकार्थ्यं भवति। तक्षायस्कारम्, रजकतन्तुवायम्।

[ शूद्राणामनिरवसितानाम्। पा० २।४।१०, कारवः। स० ३।३।३७ ]

---

* मथुरा०—MSS.
† केतवा. .केतवम्—दुर्घटीका।
‡ नित्यं वैरिणाम्—MSS.
§ ०वैरि० L.
¶ गोपालशालङ्कायनाः—v. l.

**गवाश्वादीनाम्** ॥५७॥

गवाश्वादीनां समाहार ऐकार्थ्य भवति । गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । कुब्जवामनम् । कुब्जकैरातम् । पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । शाटीपुच्छकम् । उष्ट्रखरम् । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदस्* । मांसशोणितम् । दर्भशरम् । दर्भपूतिकम् । अर्जुनपुरुषम् । तृणोलपम् । दासीदासम् । कुटीकुटम् । †भगवतीभागवतम् । अवङादेशनिर्देशः किम् ? गोऽश्वम्, गोऽश्वौ ।

[गवाश्वप्रभृतीनि च । पा० २।४।११, गवाश्व-गवाविक-गवैडकाजाविकाजैडकानि । कुब्जवामन-कुब्जकिरात-पुत्रपौत्र-श्वचण्डाल-स्त्रीकुमार-दासीदास-दासीमाणवकोष्ट्रशश–भागवतीभागवतानि । शाटीप्रच्छद-कुटीकुट-मूत्रशकृन्-मूत्रपुरीष-यकृन्मेदो-मांसशोणित-दर्भशर-दर्भपूतीकार्जुनपुरुष-तृणोलपानि । स० ३।३। ३८-४० ]

**प्राणितूर्याङ्गानाम्** ॥५८॥ [ ०ङ्गानि । स० ३।३।४१ ]

प्राण्यङ्गानां तूर्याङ्गानां च समाहार ऐकार्थ्य भवति । पाणिपादम् । मार्दङ्गिकपाणविकम् ।

[ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । पा० २।४।२ ]

**सेनाङ्गानां बहुत्वे** ॥५९॥ [ सेनाङ्गानि० । स० ३।३।४२ ]

सेनाङ्गानां बहुत्वे वर्तमानानां समाहार एकार्थ्यं भवति। हस्तिनश्चाश्वाश्च, हस्त्यश्वम् । बहुत्व इति किम् ? हस्ती चाश्वश्च, हस्त्यश्वौ ।

[ बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम् । पा० २।४।१२।१ ]

**क्षुद्रजन्तूनाम्** ॥६०॥

क्षुद्रजन्तूनां समाहार ऐकार्थ्यं भवति । यूकालिक्षम् । बहुत्व इत्येव । यूका च लिक्षा च, यूकालिक्षे ।

---

* यकृन्मेदम्–MSS. शकृन्मेदः—जुमरः (७।३५५)

† भागवतीभागवतम् SK.

क्षुद्रजन्तुरनस्थिः स्याद् अथवा क्षुद्र एव यः ।
शतं वा प्रसृतौ* येषां केचिदा नकुलादपि ॥ [ काशिका ]

[ क्षुद्रजन्तवः । पा० २।४।८, स० ३।३।४३ ]

क्षुद्रजन्तुरकङ्कालो येषां स्वं नास्ति शोणितम् ।
नाञ्जलिर्यत् सहस्रेण केचिदा नकुलादपि ॥ हेमन्यासः ।

क्षुद्रजन्तव इत्युच्यते । के पुनः क्षुद्रजन्तवः । क्षोत्तव्या जन्तवः । यद्येवं यूकालिक्षम् कीटपिपीलिकमिति न सिध्यति । एवं तर्ह्यनस्थिकाः क्षुद्रजन्तवः । अथवा येषामा सहस्रादञ्जलिर्न पूर्यते ते क्षुद्रजन्तवः । अथवा येषां गोचर्ममात्रं राशिं हत्वा न पतितो भवति ते क्षुद्रजन्तवः, अथवा नकुलपर्यन्ताः क्षुद्रजन्तवः । भाष्यम् । २।४।८ ]

**फलानाम्** ॥६१॥ [ फलानि । स० २।४।१२ ]

फलानां समाहार ऐकार्थ्यं भवति । बदरामलकम् । बहुत्व इत्येव । बदरं चामलकं च, बदरामलके ।

[ जातिरप्राणिनाम् । पा० २।४।६, बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम् । २।४।१२।१ ]

**वा वृक्षतृणधान्यमृगशकुनिविशेषाणाम्** ॥६२॥

*वृक्षादिविशेषाणां बहुत्व एव वर्तमानानां समाहार ऐकार्थ्यं भवति ।* प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । कुशकाशम् , कुशकाशाः । तिलमाषम् , तिलमाषाः । रुरुपृषतम्, रुरुपृषताः । हंसचक्रवाकम् , हंसचक्रवाकाः । बहुत्व इत्येव । प्लक्षश्च न्यग्रोधश्च, प्लक्षन्यग्रोधौ । अप्राणिजातीनाम् [ ५३ ] इति समाहारे कस्मान्न भवति ? द्रव्यवचनत्वात् ।

[ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । पा० २।४।१२, वा वृक्षमृगतृणधान्यशकुनिविशेषाः । स० ३।३।४५ ]

**व्यञ्जनानाम्** ॥६३॥ [व्यञ्जनानि । स० ३।३।४६ ]

व्यञ्जनविशेषाणां समाहार ऐकार्थ्यं भवति वा । दधिघृतम्, दधिघृते । सूपशाकम्, सूपशाके । अप्राणिजातीनाम् [ ५३ ] इति नित्ये प्राप्त आरम्भः ।

---

* प्रसृतौ—MSS.

अश्ववडवौ ॥६४॥

अश्ववडवयोः समाहार ऐकार्थ्यं वा भवति। चार्थे [४८] इत्येव सिद्धम्, इतरेतरयोगे तु पुंवल्लिङ्गं निपात्यते। अश्ववडवम्। अश्ववडवौ। अस्मादेव ज्ञापकादन्यत्र चार्थैकार्थ्ये परवल्लिङ्गं भवति। कुक्कुटमयूर्यौ।

[पा० २।४।१२, शेषमुभयोः। स० ३।३।४८, पूर्ववदश्ववडवौ। पा० २।४।२७, स० ३।३।१४०]

विरोधिनामद्रव्याणाम् ॥६५॥

विरोधिनामद्रव्यवाचिनां समाहार ऐकार्थ्यं वा भवति। सुखदुःखम्, सुखदुःखे। विरोधिनामिति किम्? कामक्रोधौ। अद्रव्याणामिति किम्? सुखदुःखाविमौ ग्रामौ।

[विप्रतिषिद्धं चानधिकरणवाचि। पा० २।४।१३, विरोधीन्यद्रव्याणि। स० ३।३।४७]

न दधिपयआदीनाम् ॥६६॥ [० दीनि। पा० २।४।१४]

दधिपयआदीनां समाहार ऐकार्थ्यं न भवति। दधिपयसी। सर्पिर्मधुनी। मधुसर्पिषी। ब्रह्मप्रजापती। शिववैश्रवणौ। *स्कन्दविशाखौ। †परिव्रज्याकौशिकौ। प्रवर्ग्योपसदौ‡। याज्यानुवाक्ये। शुक्लकृष्णे। इध्माबर्हिषी। निपातनाद् दीर्घत्वम्। दीक्षातपसी। मेधातपसी। उदूखलमुसले। आद्यवसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे। दशेमे मार्दङ्गिकपाणविका इति गणनायां भेदेनार्थस्य विवक्षितत्वाद् दिशामिव समाहारो नास्ति। संख्यासामीप्यविवक्षायां तु भेदेनाभेदेन वा विवक्षा न विरुध्यत इति भवति पक्षे समाहारः। उपदशं पाणिपादम्,

---

* स्कन्दविशाखौ—MSS.

† परिव्राजकौशिकौ—MSS. वशिष्ठकौशिकौ—K.P. परिव्रज्या-कौशिकौ Hrdaya. परिव्राट्कौशिकौ—Kās'ikā, S'K. परिव्राजककौशिकौ—Kās'ikā MS. हरिकौशिकौ—Jumara. परिव्राजकौशिकौ—Hc. (परिव्रजा सही कौशिकस्य पर्वः। Hc. Nyāsa).

‡ प्रवर्ग्योपसदौ—MSS.

उपदशाः पाणिपादाः । अश्ववलीवर्दम्, अश्ववलीवर्दौ ; अधरोत्तरम्, अधरोत्तरे ; पूर्वापरम्, पूर्वापरे इति चार्थे [४८] इत्येव सिद्धम् ।

[दधिसर्पिर्मधूनि पयोमधसर्पिर्भिरितरेतरयोगे। इध्मावागुचौ वर्हिर्मनःसामभिः। आदिरवसानेन। शुक्लः कृष्णेन। श्रद्धा मेधया। मेधादीक्षाश्रुताध्ययनानि च तपसा। याज्याप्रजर्य्योलखलान्यनुवाक्योरसन्नुशलैः। हरिब्रह्मशिवस्कन्दपरिवज्याद्या चात्तवप्रजापतिवैश्रवणविशाखकौशिकादिभिः। स० ३।३।२०-२७। अधिकरणैतावत्त्वे च। विभाषा समीपे। पा० २।४।१५-१६, अधिकरणैतावत्त्वे। समीपे वा। स० ३।३।२८-२९]

**नाम्नि षष्ठ्याः कन्थोशीनरेषु** ॥६७॥

षष्ठ्याः परा या कन्था सैकार्थ्यो* उशीनरदेशे नपुंसकलिङ्गं भवति, संज्ञायां विषये। सौशमिकन्थम्। नाम्नीति किम्? वीरणकन्था। उशीनरेष्विति किम्? दाक्षिकन्था।

[संज्ञायां कन्थोशीनरेषु। पा० २।४।२०, षष्ठ्याः कन्थोशीनरेषु तत्पुरुषः संज्ञायाम्। स० ३।३।१२५]

**उपज्ञोपक्रमं तदादित्वे** ॥६८॥ [स० ३।३।१२६]

षष्ठ्याः परा उपज्ञा उपक्रमश्च ऐकार्थ्यो तदादित्वे गम्यमाने नपुंसकं भवति। पाणिन्युपज्ञमकालकं† व्याकरणम्। ‡चन्द्रोपज्ञमसंज्ञकं व्याकरणम्। नन्दोपक्रमाणि मानानि। तदादित्व इति किम्? देवदत्तोपज्ञा मृन्मयप्राकाराः। षष्ठ्या इत्येव। अनुपज्ञा। सदुपज्ञा। प्रधानलिङ्गे प्राप्त आरम्भः।

[उपज्ञोपक्रमं तदाद्याचिख्यासायाम्। पा० २।४।२१]

**ईश्वरार्थादराजः सभा** ॥ ६९ ॥ [स० ३।३।१२७]

षष्ठ्यन्ताद् ईश्वरार्थाद् राजवर्जितात् परा या सभा ¶सैकार्थ्या

---

* ऐकार्थ्ये—MSS.

† पाणिनोपज्ञम्—MSS. but Kās'ikā has पाणिन्युपज्ञम्.

‡ This would show that the author of the Vṛtti is different from that of the Sūtras.

¶ ऐकार्थ्ये—L. from MSS.

नपुंसकं भवति। इनसभम्, ईश्वरसभम्। अराज्ञ इति किम्? राजसभा। कथं चन्द्रगुप्तसभा? नायमीश्वरार्थः, अन्यत्रापि दर्शनात्। पष्ठ्या इत्येव। ईश्वरसभा।

[सभा राजामनुष्यपूर्वा। पा० २।४।२३, जित्पर्यायस्यैव राजाद्यर्थम्। २।१।६८।७]

अमनुष्यात् ॥ ७० ॥

मनुष्याद् अन्यस्माद् या पष्ठ्यन्तात् परा सभा सैकार्थ्ये* नपुंसकं भवति। पिशाचसभम्, राक्षससभम्। अमनुष्यादिति किम्? देवदत्तसभा। मनुष्यसदृशस्य ग्रहणादिह न भवति। काष्ठसभा।

[यक्षराक्षसपिशाचादिभ्यश्च। स० ३।३।१२४]

अशाला ॥ ७१ ॥ [स० ३।३।१२९, ०च। पा० २।४।२४]

अशालारूपा या सभा पष्ठ्यन्तात् परा सैकार्थ्ये* नपुंसकं भवति। गोपालसभम्। गोपालसमूह इत्यर्थः।

सेनासुराशालानिशा वा ॥ ७२ ॥ [स० ३।३।१३०]

सेनादयः पष्ठ्यन्तात् परा ऐकार्थ्ये नपुंसकलिङ्गा भवन्ति वा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। गोशालम्, गोशाला। श्वनिशम्, श्वनिशा†। पष्ठ्या इत्येव। परमसेना।

[विभाषा सेनासुराच्छायाशालानिशानाम्। पा० २।४।२५]

छाया ॥ ७३ ॥ [स० ३।३।१३१]

पष्ठ्यन्तात् परा छायैकार्थ्ये नपुंसकं वा भवति। कुड्यच्छायम्, कुड्यच्छाया।

बाहुल्ये ॥ ७४ ॥ [नित्यं ०। स० ३।३।१३२]

बाहुल्ये गम्यमाने पष्ठ्यन्तात् परा छायैकार्थ्ये नपुंसकं भवति, नित्यं पुनर्विधानात्। इषुच्छायम्, शलभच्छायम्। बाहुल्य इति किम्? वृक्षच्छायम्, वृक्षच्छाया।

* ऐकार्थ्ये—L.

† पुनर्वसुरस्यामुपवसतः पञ्चामः, श्वेनादिष्टम्याम्। शाबरभाष्यम्। ६।१।४

[ छाया बाहुल्ये । पा० २।४।२२ ]

**पथोऽसंख्यात् ॥ ७५ ॥**

असंख्यात् परः पथशब्द ऐकार्थ्ये नपुंसकं भवति । अपथम्, उत्पथम् । असंख्यादिति किम् ? राजपथः । प्रधानलिङ्गान्यथात्वप्रस्तावादन्यपदार्थे न भवति । अपथा नगरी, उत्पथो देशः ।

[ अपथं नपुंसकम् । पथः संख्याव्ययादेः । पा० २।४।३०, वा १, पथोऽव्ययात् । स० ३।३।१३३ ]

**संख्यादिः समाहारे ॥ ७६ ॥**

संख्यादिः समाहार ऐकार्थ्ये नपुंसकं भवति । पञ्चगवम्, चतुष्पथम् । समाहारस्यैकत्वादेकवचनम् । संख्यादिरिति किम् ? धवखदिरम् । परेण [ ७७ ] स्त्री न भवति । समाहार इति किम् ? पञ्चकपालः पुरोडाशः । त्रिपुत्रः ।

[ द्विगुश्च । पा० २।४।३०।२, स० ३।३।१२० ]

**अः स्त्री ॥ ७७ ॥** [ अदन्तः स्त्री । स० ३।३।१२१ ]

अकारान्तः संख्यादि. समाहार ऐकार्थ्ये स्त्रीलिङ्गो भवति । पञ्चपूली । समाहार इत्येव । पञ्चकपालः पुरोडाशः ।

[ अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम् । पा० २।४।३०, भाष्यम् ]

**वाप् ॥ ७८ ॥**

आबन्तः संख्यादिः समाहारे स्त्रीलिङ्गो वा भवति । पञ्चखट्वम्, पञ्चखट्वी । समाहार इत्येव । पञ्च खट्वाः ।

[ वाबन्तः । पा० २।४।३०।३, स० ३।३।१२२ ]

**अनो लोपः ॥ ७९ ॥**

अनन्तस्य संख्यादेः समाहारे ऐकार्थ्ये अन्त्यस्य लोपो भवति, वा च स्त्री भवति । पञ्चतक्षम्, पञ्चतक्षी । समाहार इत्येव । बहुराजा देशः ।

[ अनो नलोपश्च वा च स्त्रियां भाष्यत इति वक्तव्यम् । पा० २।४।३० भाष्यम् । अनो नलोपश्च । स० ३।३।१२३ ]

**न पात्रादयः ॥ ८० ॥**

पात्रादयः शब्दाः स्त्रीलिङ्गा न भवन्ति। द्विपात्रम्। चतुर्युगम्। त्रिभुवनम्।

[ पात्रादिभ्यः प्रतिषेधो वक्तव्यः। पा० २।४।३० भाष्यम्। पात्रपथयुग-भुवनाद्यन्तो नपुंसकम्। स० ३।३।१२४ ]

**रात्राह्नवाकाः पुंसि ॥ ८१ ॥** [ स० ३।३।१३४ ]

रात्राह्नवाकान्ताः शब्दाः पुंलिङ्गा भवन्ति। अहोरात्रः, सर्वरात्रः। पूर्वाह्णः। अनुवाकः, सूक्तवाकः।

[ रात्राह्नाहाः पुंसि। अनुवाकादयः पुंसि। पा० २।४।२९, वा १ ]

**अहोऽसुदिनपुण्यात्॥ ८२ ॥** [ ० पुण्याभ्याम्। स० ३।३।१३५ ]

अहशब्दः सुदिनपुण्याभ्यामन्यस्मात् परः पुंसि भवति। एकाहः, द्व्यहः, त्र्यहः। असुदिनपुण्यादिति किम्? सुदिनाहम्, पुण्याहम्।

[ रात्राह्नाहाः पुंसि। पा० २।४।३०। पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम्। भाष्यम् ]

**नपुंसके चार्धर्चादयः ॥ ८३ ॥**

नपुसके पुंसि चार्धर्चादयो वर्तन्ते। अर्धर्चम्, अर्धर्चः। शतमानम्, शतमानः। वारवाणम्, वारवाणः। अष्टापदम्, अष्टापदः। समासलिङ्गाख्याने गोमयादयो न वक्तव्याः, तद्वदेव वा स्त्रीपुंलिङ्गा अपि गौरिपुरशनिर्योनिरित्येवमादयः, स्त्रीनपुंसकलिङ्गाश्च अर्चिरादयः, सर्वलिङ्गाश्च तटशृङ्खलादयः, एकैकलिङ्गाश्च वृक्षखट्वाकुण्डादयः, अलिङ्गाश्च युष्मदस्मदादयः, सर्व एव वाच्याः स्युः। अथ तेषां लोकतो लिङ्गानुशासनतो वा सिद्धिरिष्टा, तद्वदेव गोमयादीनामपि भविष्यति। कानि पुनस्तानि स्त्रीपुनपुंसकानि?

इयमयमिदमिति येषु प्रसिद्धिरर्थेषु भवति लोकस्य।
स्त्रीपुनपुंसकानि प्रोच्यन्ते तानि लोकेन ॥

[ अर्धर्चाः पुंसि च। पा० २।४।३१, अर्धर्चादय इति वक्तव्यम्। अर्धर्चम् अर्धर्चः। कार्षापणम्, कार्षापणः। गोमयम् गोमयः। सारम् सारः। २।४।३१

भाष्यम् । नपुंसके चार्धर्चाष्टापदसुवर्णशतमानकार्षापणवारबाणगन्धमादनान्धकारा-
पराह्णपूर्वाह्णपर्वांतनिर्यासविमानग्रीवप्रयालवाजनेयराजसूयप्रतिसरादयः । स० ३।३।१३६ ]

**सुपि ह्रस्वः ॥ ८४ ॥**

नपुंसके वर्तमानस्य शब्दस्य सुपि परतो ह्रस्वा भवति । रै । अतिरि । कण्ठतालव्यस्य स्थाने कण्ठतालव्य-इकारः । नौ । अतिनु । कण्ठोष्ठ्यस्य स्थाने कण्ठोष्ठ्य एव उकारः । सुपीति किम् ? काण्डे, कुड्ये ।

[ ह्रस्वो नपुंसके प्रातिपदिकस्य । पा० १।२।४७, स० ३।३।१४१ ]

**गोरप्रधानस्यान्त्यस्य ॥ ८५ ॥**

गोशब्दस्योपसर्जनस्यान्ते वर्तमानस्य सुपि परतो ह्रस्वो भवति । चित्रगुः । अप्रधानस्येति किम् ? सुगौः । अन्त्यस्येति किम् ? गोकुलम् ।

[ गोस्त्रियोरुपसर्जनस्य । पा० १।२।४८, गोरुपसर्जनान्त्यस्य । स० ३।३।१४२ ]

**ङ्यादीनाम् ॥ ८६ ॥**

ङीबाद्यन्तस्याप्रधानस्य ह्रस्वो भवति । निष्कौशाम्बिः, बहुखट्वः, अतिवामोरुः । अप्रधानस्यैव । राजकुमारी, ब्रह्मबन्धूः । अन्त्यस्यैव । कुमारीप्रियः । कथं बहुश्रेयसीति ? ईयस ईत्वं* वक्ष्यति [४।४।१४५] ।

[ पा० १।२।४८ ; टाबादीनां च । स० ३।३।१४३ ]

**लुगणादिलुक्यगोण्यादीनाम् ॥ ८७ ॥**

अणादिलुकि सति ङ्यादीनां लुग् भवति, न तु गोण्यादीनाम् । पञ्चेन्द्राण्यो देवता अस्य, पञ्चेन्द्रः । अणादिग्रहणं किम् ? बहुनाडिः । लुकीति किम् ? बहुपत्नीकः । अगोण्यादीनामिति किम् ? पञ्चभिर्गोणीभिः क्रीतः, पञ्चगोणिः । पञ्चसूचिः । अप्रधानस्येत्येव । परमावन्ती । अन्त्यस्येत्येव । अवन्तीकुलम् । वरणा इति नगरस्यापि संज्ञा, पञ्चाला

---

* ईत्व—L.

इति जनपदस्यापि। पञ्चालमथुरे इति विभक्तेरश्रवणे नामार्थसंख्यायामेव द्विवचनम्। हरीतक्याः फलानीति फलेष्वपि स्त्रीलिङ्ग एव शब्दो वर्तते। खलतिकं वनानीति तेषां वनानामेकवचनान्तमेव नामधेयम्। दृश्यते हि शब्दानामेकार्थेऽपि लिङ्गवचनभेदः। आपो जलम्, दाराः कलत्रं भार्येति। वध्रिका दर्शनीयो मनुष्य इति मनुष्यस्य विशेषणं न वध्रिकायाः, पञ्चाला बह्वन्ना बहुक्षीरघृता इति पञ्चालानाम्, पञ्चाला जनपदो बहुमाल्यफल इति जनपदस्य। सम्पन्नो यव इति जातावेकवचनम्, सम्पन्ना यवा इति व्यक्तिभेदेषु बहुवचनम्। वयमिति बाह्याध्यात्मिकेषु भेदेषु, यथा गुरुषु; अहमिति पुनरभेदविवक्षायामेकवचनम्। कदा पूर्वे *फल्गुन्याविति तारकयोर्द्वित्वे द्विवचनम्। कदा पूर्वाः *फल्गुन्य इति चन्द्रमसा सह बहुत्वसम्भवे बहुवचनम्। एवं कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदा इति। तिष्यपुनर्वसू इति नक्षत्रद्वित्वे द्विवचनम्, तिष्यपुनर्वस्विति समाहारे एकवचनम्। तारकाभेदविवक्षायां नक्षत्रसंख्याभेदविवक्षायाः† अभावान् नास्त्येव बहुवचनम्॥ ‡शब्दस्यानेकार्थत्वादेकशेषानर्थक्यम्। एकोऽपि हि शब्दोऽनेकस्यार्थस्याभिधायको भवति, यथा रोदसीशब्दो द्यावापृथिव्योः। भिन्नजातीयानामपि चार्थानामेकेनाभिधानं भवति, यथा अक्षाः पादा माषा इति, किं पुनः सजातीयानाम्। गार्ग्यायणस्यापि गार्ग्यत्वमस्तीत्यभेदविवक्षायां गार्ग्यौ। वैदवैदाविति भेदविवक्षायाम्, अभेदविवक्षायां तु वैदाविति भवितव्यमेव, तदा प्रतिषेधाभावात्। गार्ग्या अपि गार्ग्यत्वमस्तीति गार्गी च गार्ग्यायणश्च गार्ग्यौ। कुक्कुट्या अपि कुक्कुटत्वमस्तीति कुक्कुटी च कुक्कुटश्च कुक्कुटौ। एवं पिता च माता च पितरौ; भेदविवक्षायां तु मातापितरौ। तथा श्वशुरश्च श्वश्रूश्च, श्वशुरौ। तथा भ्राता च स्वसा च, भ्रातरौ।

---

* फाल्गु०—L. † विवक्षायाम्—L. ‡ अत्रास्माकमनादरः शब्दानां शक्तिवैचित्र्यात्। तथाच रोदसीशब्दो द्यावापृथिव्योः। चन्द्रगोमिनाप्युक्तम्—शब्दस्यानेकार्थत्वादेकशेषानर्थक्यमिति। कातन्त्रविस्तरः।

पुत्रश्च दुहिता च, पुत्रौ। नपुंसकस्य तु सर्वलिङ्गसामान्यरूपत्वात् नपुंसकानपुंसकाभिधाने तस्यैव प्रयोगः। शुक्लश्च शुक्ला च शुक्लं च, तानीमानि शुक्लानि। अभेदविवक्षायां तु तदिदं शुक्लमिति। त्यदादीनामपि सामान्यवचनत्वादन्यार्थाभिधानेऽपि प्रयोगः। स च देवदत्तश्च, तौ। गाव इमा इति स्त्रीलिङ्गत्वं तासामपनीतपुंस्कत्वात्।

[लुक् तद्धितलुकि। इद् गोण्याः। (सूच्याद्यर्थमथापि वा। श्लोकवार्त्तिकम्) लुपि युक्तवद्व्यक्तिवचने। (समास उत्तरपदस्य बहुवचनस्य लुप्. । वा ५) विशेषणानां चाजातेः। (हरीतक्यादिषु व्यक्तिः। खलतिकादिषु वचनम्। मनुष्यलुपि प्रतिषेधः। व्या० ३-५) जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्। (संख्याप्रयोगे प्रतिषेधः। वा ४) अस्मदो द्वयोश्च। फल्गुनीप्रोष्ठपदानां च नक्षत्रे। छन्दसि पुनर्वस्वोरेकवचनम्। विशाखयोश्च। तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्। सरूपाणामेकशेष एकविभक्तौ। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः। स्त्री पुंवच्च। पुमान् स्त्रिया। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्। पिता मात्रा। श्वशुरः श्वश्र्वा। त्यदादीनि सर्वैर्नित्यम्। त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि। अद्वन्द्वात् पुरुषविशेषणानाम्। वा १-२। ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री। पा० १।२।४९-५२, ५८-७३। लुक् तद्धितलुक्यगोणीसूच्योः। लुपि प्रकृतिवल्लिङ्गवचने। विशेषणानां चाजातेः। न मनुष्ये। समास उत्तरपदस्य। हरीतक्यादिषु व्यक्तिः। खलतिकादिषु वचनम्। शा० ३।३।१४४-१५०। सरूपाणामेकशेष एकविभक्तौ। स्वरभिन्नानां यस्योत्तरस्वरविधिः। विरूपाणामप्येकार्थानाम्। पौत्रादिजीवद्वंश्यादीनां तन्निमित्त एव चेद्विशेषः। स्त्री पुंवच्च। पुमान् स्त्रिया। ग्राम्यपशुसङ्घेष्वतरुणानेकशफेषु स्त्री। नपुंसकमनपुंसकेनैकवच्चास्य वा। पितृश्वशुरौ मातृश्वश्रूभ्याम्। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। सर्वैस्त्यदादीनि। तेषामद्वन्द्वतत्पुरुषविशेषणानां पुम्नपुंसकतो लिङ्गानि। तेषां मिथो यत् परम्। क्वचित् पूर्वञ्च। पुरुषाणां च। शा० ३।३। १०३-११७]

इति चान्द्रे व्याकरणे द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः।

**पादः** ॥ ७ ॥ [ स० ३।४।२० ]

पादन्तादन्यपदार्थे वर्तमानाद् वा ङीव् भवति। द्विपदी, द्विपात्। त्रिपदी, त्रिपात्। कथं त्रिपदा गायत्री, पञ्चपदा पङ्क्तिरिति? पादशब्दसमानार्थेन पदशब्देन सिद्धम्। द्विपात्, त्रिपादित्यपि तर्ह्यृचि प्राप्नोति? इष्यत एव, चतुष्पाद् ऋगिति दर्शनात्। ऋच्यपि तर्हि ङीप् प्राप्नोति? व्यवस्थितविभाषया* न भविष्यति।

[ पादोऽन्यतरस्याम्। टाबृचि। पा० ४।१।८-९ ]

**अनः** ॥ ८ ॥ [ स० ३।४।२१ ]

अनन्तादन्यपदार्थे वर्तमानाद्वा स्त्रियां ङीब् भवति। बहुराज्ञी पृथिवी; बहुराजा, बहुराजानौ, बहुराजानः। अधिराज्ञी नाम ग्राम इति ङीबन्तमेव नामधेयमिति न तेन विना प्रयोगः। अन्यार्थ इत्येव। अतिक्रान्ता राजानम्, अतिराज्ञी।

[ अन उपधालोपिनोऽन्यतरस्याम्। पा० ४।१।२८ ]

**ऊधसो नश्च** ॥ ९ ॥ [ स० ३।४।२३ ]

ऊधसोऽन्यपदार्थे स्त्रियां ङीव् भवति, नश्चान्तादेशः। कुण्डोध्नी; द्व्यूध्नी, त्र्यूध्नी; अत्यूध्नी, द्विविधोध्नी। अन्यार्थ इत्येव। प्राप्तोधाः। स्त्रियामित्येव। महोधो धेनुकम्।

[बहुव्रीहेरूधसो ङीष्। संख्याव्ययादेर्ङीप्। ऊधसोऽनङ्। पा० ४।१।२५-२६, ५।४।१३१ ]

**दाम्नः संख्यादेः** ॥ १० ॥ [ स० ३।४।२४ ]

दामन्-शब्दात् संख्यादेरन्यपदार्थे वर्तमानात् स्त्रियां ङीव् भवति। द्विदाम्नी, त्रिदाम्नी। संख्यादेरिति किम्? उद्दामा वडवा।

[ दामहायनान्ताच्च। पा० ४।१।२७ ]

**हायनाद्वयसि** ॥ ११ ॥ [ स० ३।४।२५ ]

हायनशब्दात् संख्यादेरन्यपदार्थे वर्तमानात् स्त्रियां ङीव् भवति,

---

* बहुलाधिकाराद्—पाः।

वयसि गम्यमाने। द्विहायनी, त्रिहायणी, चतुर्हायणी। त्रिचतुर्भ्यां हायनो वयसि [६।४।१०७] इति णत्वम्। वयसीति किम्? त्रिहायना शाला। संख्यादेरित्येव। अतीतहायना गौः।

[हायनो वयसि स्मृतः। पा० ४।१।२७ श्लोकवार्त्तिकम्]

**नोपान्तवतः ॥१२॥**

उपान्तवतोऽनन्तादन्यपदार्थे वर्तमानात् स्त्रियां ङीब् न भवति। सुपर्वा, सुपर्वाणौ। सुशर्मा, सुशर्माणौ। अन्यपदार्थ इत्येव। अतिपर्वणी यष्टिः।

[अनो बहुव्रीहेः। पा० ४।१।१२, नानुपधालोपिनः। स० ३।४।२६]

**मनः ॥१३॥** [पा० ४।१।११, स० ३।४।२७]

मनन्तात् स्त्रियां ङीब् न भवति। दामा, दामानौ। सीमा, सीमानौ। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति*, रूपमात्रस्य ग्रहणात्। अन्यार्थ इति निवृत्तम्, योगविभागात्। अन्यथा हि न मनुपान्तवद्भ्यामित्येवं ब्रूयात्।

**ताभ्यां डाप् ॥१४॥**

ताभ्यामनन्त-मनन्ताभ्यां स्त्रियां डाब् भवति। बहुराजा, बहुराजे। सुपर्वा, सुपर्वे। दामा, दामे। सीमा, सीमे।

[डाबुभाभ्यामन्यतरस्याम्। पा० ४।१।१३, डाप् चोभाभ्याम्। स० ३।४।२८]

**अजाद्यतः ॥१५॥**

अजादिभ्योऽदन्ताच्च स्त्रियां डाब् भवति। अजा। देवदत्ता। अत इति सिद्धे अजादिभ्यो विधानं बाधकबाधनार्थम्। अजा। एडका। कोकिला। अश्वा। चटका। मूषिकेति जातिलक्षणे ङीपि प्राप्ते डाब् भवति। बाला। होडा। पाका। वत्सा। मन्दा। विलातेति वयस्यचरमे [२।३।२२] इति ङीपि प्राप्ते। पूर्वापहाणा। अपराप-

* अनिनस्मन्ग्रहणानि चार्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। महाभाष्यम्। १।१।७२

हाणा । संप्रहाणेति टिल्लक्षणे ङीपि प्राप्ते । निपातनाच्च णत्वम् । संभस्त्राजिनशणपिण्डेभ्यः फलात्, फलान्तलक्षणे ङीपि प्राप्ते । संफला । भस्त्रफला । अजिनफला । शणफला । पिण्डफला । एतेभ्य इति किम् ? वासीफली । कथं त्रिफला ? त्रीणि फलान्यस्यामिति त्रिफला । संहतिरित्यजातित्वाद् ङीप् नास्ति, असमाहारत्वाच्च ङीब् नास्ति । सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्, पुष्पान्तलक्षणे [७२] ङीपि प्राप्ते । सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । एभ्य इति किम् ? शङ्खपुष्पी । शूद्रा चामहत्पूर्वा जातिः । शूद्रा च डावन्ता भवति अमहत्पूर्वा, जातिश्चेत् । शूद्रैव भार्या शूद्रा, न तु शूद्रस्य । अमहत्पूर्वेति किम् ? महाशूद्री, आभीरजातिः । अस्मादेव ज्ञापकात् तदन्तविधिरत्र प्रकरण भवतीति गम्यते । अतिभवती, अतिधीवरी । जातिरिति किम् ? शूद्रस्य भार्या, शूद्री । पुंयोगलक्षणो ङीष् भवत्येव । क्रुञ्चा । उष्णिहा । देवविशेति निपातनादेव लोपाभावः । अकारान्तेभ्यो वा डाब् निपातनात् । तथा चोष्णिगित्यपि सिद्धं भवति । ज्येष्ठा । कनिष्ठा । मध्यमेत्यत इत्येव डाप् भवत्येव, व्यवस्थावाचित्वाच्च वयोलक्षणो ङीब् नास्ति, अनाख्याशब्दत्वाच्च पुंयोगलक्षणो ङीष् नास्ति । मूलान् नञ इत्यपि न वाच्यम्; अमूलाया मूलान्तलक्षणो ङीप् नास्त्यजातित्वात् । डाविह कस्मान्न भवति—पञ्चाजी, दशाजीति ? नात्राजशब्दः स्त्रियां वर्तते, यश्चात्र स्त्रियां वर्तते नासावजशब्दः । तदन्तविधिना प्राप्नोति । विप्रतिषेधात् संख्यादेः [ २।३।२३ ] इति ङीब् भविष्यति । तपरकरणं किम् ? कीलालपाः, शुभंयाः । अत इत्ययमधिकारः ।

[ अजाद्यतष्टाप् । पा० ४।१।४ । संभस्त्राजिनशणपिण्डेभ्यः फलात् । मूलान्नञः । त्रिफला द्विगौ । सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । क्रुञ्चा उष्णिहा देवविशा । हलन्ताः । ज्येष्ठा कनिष्ठा मध्यमा । मूलान्नञः । गणसूत्राणि ॥ अतष्टाप् । अश्वैडककोकिलाचटकमूषिकेभ्यः । बालहोडपाकवत्समन्दविलातेभ्यश्च । पूर्वापहाणापरापहाणसंप्रहाणेभ्यो नस्य

च णः । सम्भस्त्राजिनशणपिण्डेभ्यः फलात् । त्रेश्च । सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् । मूलान्नञः । शूद्राच्चामहत्पूर्वाज्जातिः । कन्य-कनिष्ठ-ज्येष्ठ-मध्य-मध्यम-सुधेभ्यः । म्रुड् देवविड्भ्याम् । उष्णिहो वा । स० ३।४।२-१३ ]

**स्वार्थे ॥१६॥**

अतः परं स्त्रियां यदुच्यते तत् स्वार्थ वर्तमानाद् वेदितव्यम् ।

**टिड्ढाणञ्ढक्ठञ्नञ्स्नञ्कञ्क्वरप्ख्युनः ॥ १७ ॥**

[ स० ३।४।३१ ]

टिदाद्यन्तात् स्वार्थे स्त्रियां ङीव् भवति । कुरुचरी । पठिता विद्येति न भवति, तुटा सिद्धे टप्रोप्टित्करणात् । पचमानेति न भवति द्व्यनुबन्धकत्वात् । ल्युडादीनां तु भवत्येव टित्करणसामर्थ्यात् । ढस्य निरनुबन्धकस्याभावाड् * ढक्ढञोर्ग्रहणम् । योऽपि शिलाया ढश्च [ ४।३।८० ] इति ढो न तस्य स्त्रियां प्रयोगः । सौपर्णेयी, वैनतेयी ; शावलेयी । अण् । कुम्भकारी, औपगवी । अञ् । औत्सी, वैदी । ठक् । आक्षिका । ठञ् । लावणिकी । नञ्स्नञौ । स्त्रैणी, पौंस्नी । कञ् । तादृशी । क्वरप् । इत्वरी । ख्युन् । आढ्यङ्करणी । स्वार्थ इत्येव । प्रियकुरुचरा नगरी ।

[टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः । पा० ४।१।१५, ०क्वरप्ख्युनाम् । काशिका । ख्युन उपसंख्यानम् । वा ६ । अनपत्यमिवमुच्यते ख्युन इति । नञ्-स्नञ्-ईकक्-ख्युं-स्तरुण-तलुनानामुपसंख्यानम् । भाष्यम् । न लस्यान्यागमर्दितः । स० ३।४।३२]

**यञोऽपावटात् ॥१८॥** [ स० ३।४।३३ ]

यञन्तात् स्त्रियां ङीव् भवति, स चेत् पकारान्तादवटशब्दाच्च विहितो न भवति । गार्गी, वात्सी । अपावटादिति किम् ? शार्कराक्ष्या, पौतिमाष्या, गौकक्ष्या । आवट्या । अतः [ १५ ] इति डाब् भवति ।

[ यञश्च । यञश्चाप् । पाच्च यञश्चाप् । पा० ४।१।१६, ७४, वा ०१]

**प्फो वा ॥१९॥**

---

* ०स्याभावाद्—L.

अपावटादिति न वर्तते। यञन्तात् स्त्रियां ष्फो वा भवति। गार्गी, गार्ग्यायणी। वात्सी, वात्स्यायनी। शार्कराक्ष्यायणी, पौतिमाष्यायणी, गौकक्ष्यायणी। आवट्यायनी। षित्वाद् ङीष् भवति। वावचनं पावटार्थम्।

[प्राचां ष्फ तद्धितः। पा० ४।१।१७, सर्वतः ष्फो वा। स० ३।४।३४]

**लोहितादिभ्यः शकलान्तेभ्यः ॥२०॥**

लोहितप्रभृतिभ्यः शकलपर्यन्तेभ्यो यञन्तेभ्यः ष्फ एव भवति, नित्यं पुनर्विधानात्। लौहित्यायनी, सांशित्यायनी। मनायीशब्दात् मानाय्यायनी। यच्यणादौ [५।२।३२] इति पुंवद्भावो न भवति, पाठसामर्थ्यात्। मानव्यायनीति मनुशब्दपाठादेव सिद्धम्। वतण्डशब्दादनाङ्गिरसे। वातण्ड्यायनी। शिवादिपाठाद् वातण्डी। आङ्गिरसे तु यञेव, तस्य च स्त्रियां लुक्, जातेः [२।३।७१] इति ङीष्। वतण्डी। कपिशब्दादाङ्गिरस एव यञ्। काप्यायनी; अनाङ्गिरसे तु कापेयी। कात्यायनी, शाकल्यायनी। शकलान्तेभ्य इति किम्? काण्वी, काण्व्यायनी। कुरुकतानडुहौ तु लोहितात् प्राक् पठितव्यौ। न ह्यनयोर्लोहितादिकार्यमिष्यते, नापि शकलादिकार्यम्।

[सर्वत्र लोहितादिकतन्तेभ्यः। पा० ४।१।१८, लोहितादिभ्यः शकलान्तेभ्यो नित्यम्। स० ३।४।३५। See गर्गादि under P. iv. 1. 105 and Candra ii. 4. 24. SK. iv. 1. 45ff.]

**कौरव्यासुरिमाण्डूकात् ॥२१॥**

कौरव्यशब्दाण्ण्यान्तादासुरिशब्दादिञन्तान् माण्डूकशब्दादणन्तात् स्त्रियां ष्फो भवति। ङीब्डापोरपवादः। कौरव्यायणी, आसुरायणी, माण्डूकायनी। कथं कौरवी सेना? तस्येदम्* [पा० ४।३।१२०] इति सिद्धम्।

[कौरव्यमाण्डूकाभ्यां च। कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम्। पा० ४।१।१९,वा १। कौरव्यासुरिमाण्डूकेभ्यो ङित्। स० ३।४।३६]

---

* Once again the Vṛttikāra is quoting Pāṇini's rule. Candra has तस्य स्वं० iii. 3. 85.

**वयस्यचरमे** ॥२२॥ [ स० ३।४।३७ ]

अपश्चिमे वयसि वर्तमानात् स्त्रियां ङीव् भवति। कुमारी, किशोरी, वर्करी; करभी, कलभी; तरुणी, तलुनी; वधूटी, चिरिण्टी। अचरम इति किम्? स्थविरा, वृद्धा। कथं द्विवर्षा, त्रिवर्षा, उत्तानशया, लोहितपादिका, मध्या, मध्यमा, ज्येष्ठा, कनिष्ठेति? अर्थादत्र प्रथमं वयो गम्यते, न शब्दात्। कथं कन्या? कन्यायाः कनीन च [ २।४।४६ ] इति निपातनात्। कथं वृद्धकुमारी*? वृद्धशब्दादत्र पश्चिमं वयो गम्यते, न कुमारशब्दात्। अत इत्येव। शिशुः।

[ वयसि प्रथमे। पा० ४।१।२०, वयस्यचरम इति वक्तव्यम्। भाष्यम्। कुमारावनूढायां च। स० ३।४।३८। वृद्धा कुमारी वृद्धकुमारी। हृदयहारिणी ]

**संख्यादेः** ॥२३॥

संख्यापूर्वाच्छब्दादकारान्तात् स्त्रियां वर्तमानाद् ङीव् भवति। पञ्चानां पूलानां समाहारः, पञ्चपूली। दशपूली। स्वार्थ इत्येव। द्विसारीका।

[अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम्। २।४।३० भाष्यम्। द्विगोः। पा० ४।१।२१, स० ३।४।३९ ]

**परिमाणाल्लुक्यसंख्याकालविस्ताचितकम्बल्यात्** ॥२४॥

परिमाणान्तादेव संख्यादेरकारान्तात् संख्यादिवर्जिताल्लुकि ङीव् भवति। द्विकुडवी। परिमाणादिति किम्? पञ्चाश्वा। लुकीति किम्? द्विगण्या। सर्वत्र सम्भवान् सुपो लुग् न गृह्यते। असंख्याकालविस्ताचितकम्बल्यादिति किम्? द्विशता। द्विवर्षा। द्विविस्ता, द्व्याचिता, द्विकम्बल्या।

[ अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि। पा० ४।१।२२। इमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्। कथम्? एवं वक्ष्यामि—परिमाणान्तात्-

---

* पदं व्युत्पाद्य समासः। 'कुमारावनूढायां च' [ स० ३।४।३८ ] इति केचित् पठन्ति। नात्र विस्तरः।

द्वितलुकि ङीप् भवतीति। तन्नियमार्थं भविष्यति। परिमाणान्तादेव तद्धितलुकि ङीब् भवति नान्यत इति। ततो विस्ताचितकम्बल्येभ्यो नेति। तद्धितलुकीत्येव। भाष्यम्। परिमाणात् तद्धितलुक्यसंख्याकालविस्ताचितकम्बल्यात्। स० ३।४।४० ]

**काण्डादक्षेत्रे ॥२५॥** [ स० ३।४।४१ ]

काण्डान्तात् संख्यादेरक्षेत्र एव लुकि ङीब् भवति। द्विकाण्डी। अक्षेत्र इति किम्? द्विकाण्डा क्षेत्रभक्तिः। परिमाणादित्येव। द्वाभ्यां काण्डाभ्यां क्रीता, द्विकाण्डा।

[ काण्डान्तात् क्षेत्रे। पा० ४।१।२३ ]

**पुरुषाद्वा ॥२६॥** [ स० ३।४।४२ ]

संख्यादेः पुरुषान्तात् स्त्रियां वा ङीब् भवति। द्विपुरुषी यष्टिः, द्विपुरुषा वा। परिमाणादित्येव। पञ्चभिः पुरुषैः क्रीता, पञ्चपुरुषा।

[ पुरुषात् प्रमाणेऽन्यतरस्याम्। पा० ४।१।२४ ]

**केवलमामकभागधेयपापावरसमानार्यकृतसुमङ्गलभेषजान् नाम्नि ॥२७॥**

केवलादिभ्यः संज्ञायां ङीब् भवति। केवली, मामकी, भागधेयी, पापी, अवरी, समानी, आर्यकृती, सुमङ्गली, भषजी। नाम्नीति किम्? केवला, मामिका।

[ ० भेषजाच्च। पा० ४।१।३०, ०भेषजेभ्यः संज्ञायाम्। स० ३।४।४३। Durgaṭīkā ( Kāt. ii. 4. 50 ), Saṁks ( Tad. 24 ) and S'āk. ( 1. 3. 46 ) have अवर, but अपर is undoubtedly the correct reading. अत्र द्वितीयो वर्णो दन्तोष्ठ्यो न पवर्ग(?) इति हरदत्तः। इदन्तु सकलवैदिकसम्प्रदायविरुद्धम्, बह्वृचानां द्वितीयाध्यायान्त्यवर्गे पवर्गपाठस्य(?) सर्वसम्मतत्वात्। शब्दकौस्तुभः ]

**अन्तर्वत्नी गर्भिण्याम् ॥२८॥**

अन्तर्वत्नीति मतुप् निपात्यते नुक् च, गर्भिण्याम्। अन्यत्र। अन्तरस्यां शालायामस्ति।

[ अन्तर्वत्पतिवतोर्नुक्। पा० ४।१।३२, अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे। ० वा० १, नुक् चान्तर्वतो गर्भिण्याम्। स० ३।४।४४ ]

**पतिवत्नी भार्यायाम्** ॥२९॥ [०वर्तो० । स० ३।४।४५]

पतिवत्नीति मतोर्वत्वं नुक् च निपात्यते, भार्यायाम् । अन्यत्र पतिमती ।

**पत्युर्न ऊढायाम्** ॥३०॥ [स० ३।४।४६]

पतिशब्दस्य भार्यायामूढायां नकारो भवति, ङीप् च । पत्नी । ऊढायामिति किम् ? संगृहीतायां मा भूत् । भार्यायामित्य व, *अर्थेनोढायां मा भूत् ।

[पत्युर्नो यज्ञसंयोगे । पा० ४।१।३३]

**सपूर्वस्य वा** ॥३१॥ [स० ३।४।४७]

सपूर्वस्य पतिशब्दस्य स्त्रियां नकारादेशो ङीप् च वा भवति । आशापत्नी, आशापतिः ।

[विभाषा सपूर्वस्य । पा० ४।१।३४]

**अन्यार्थे** ॥३२॥

पतिशब्दस्य स्त्रियामन्यपदार्थे वर्तमानस्य नकारादेशो ङीप् च वा भवति । दृढपत्नी, दृढपतिः ।

[पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् । पा० ४।१।३४।१, बहुव्रीहौ । स० ३।४।४८]

**समानादिभ्यः** ॥३३॥

समानादिभ्यः परस्य पतिशब्दस्य स्त्रियां नकारादेशो भवति, ङीप् च नित्यं, पुनर्विधानात् । सपत्नी, एकपत्नी । सपत्न्या अपत्यं सापत्न इति ङीबभावेऽपि न निवर्तते नकारः, असंयुक्तविधानात् । समान । एक । वीर । पिण्ड । पुत्र । भ्रातृ ।

[नित्यं सपत्न्यादिषु । पा० ४।१।३५, समानैकवीरपिण्डभ्रातृपुत्रेभ्यः । स० ३।४।४९]

**श्येतैतहरितरोहितात् तो नः** ॥३४॥

---

* स्वम्येनोढायां मा भूत् । हृदयहारिणी ।

श्येतादिभ्यः स्त्रियां वा ङीव् भवति, तकारस्य च नकारः। श्येनी, श्यता। एनी, एता। हरिणी, हरिता। रोहिणी, रोहिता। कपिरिकादीनाम् [ ६।३।४६ ] इति लत्वम्। लोहिनी, लोहिता।

[वर्णादनुदात्तात् तोपधात्तो नः। पा० ४।१।३९, श्येतैतहरितरोहिताद्वा तश्च न.। स० ३।४।५० ]

**क्रोऽसितपलितात्** ॥३५॥ [ ० ताभ्याम्। स० ३।४।५१ ]

असितपलिताभ्यां स्त्रियां वा ङीव् भवति, तकारस्य च क्नादेशः। असिक्नी, असिता। पलिक्नी, पलिता।

[ असितपलितयोः प्रतिषेधः। छन्दसि क्नमेके। ४।१।३९।१-२ ]

**पितो ङीप्** ॥३६॥ [स० ३।४।५२ ]

पितः स्त्रियां ङीप् भवति। नर्तकी, खनकी, पात्री। दंष्ट्रादिषु योगविभागादनित्यत्वम्।

[ षिद्गौरादिभ्यश्च। पा० ४।१।४१ ]

**गौरादिभ्यः** ॥३७॥

गौर इत्येवमादिभ्यः स्त्रियां ङीप् भवति। गौरी, शवली, कल्माषी, सारङ्गी, पिशङ्गी, मत्सी। गौर। शवल। कल्माष। सारङ्ग। पिशङ्ग। मत्स्य। मनुष्य। शृङ्ग। गवय। हय। मुकय। ऋश्य। पुट। द्रुण। द्रोण। अरीहण। अरोप। वठर। ओकण। आमलक। कुवल। वदर। विम्ब। तर्कार। शर्कार। पुष्कण्ड। सुषव। आलिन्द। अलज। पाण्डाप। आढक। आसन्द। सृपाट। शष्कुल। सूर्य। सूच। शूर्प। दूप। यूप। घातक। वल्लक। मालत। वेतस। वृस। अतस। भृङ्ग। मह। मठ। श्वन्। अनडुह्। एषण करणे। देहल। काकादन। गवादन। तेजन। लवण। पाण। मेघ। गौतम। अयस्थूण। भौरिकि। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलम्बि। आलजि। आलब्धि। आलब्धि। कालम्बि। आरट। दोट। नाट। मूलाट। शातन। पातन। आस्तरण अधिकरणे। आग्रहायण। प्रत्यवरोहण। सेवन। सुमङ्गलात् संज्ञायाम्। मण्डल। मण्डर। पट। पिण्ड।

ऊर्द। गूर्द। सूर्द।पाण्डार। आतण्ड। कदर। कदल। कर्दम। कदल्प। वृहत्। महत्। सौधर्म। रोहिणी रेवती नक्षत्रे। विकल। निष्कल। पुष्कल। कट श्रोण्याम्। पिप्पल्यादयश्च—पिप्पली हरीतकी कोशातकी शमी करीर। पृथिवी। मातामह। पितामह। क्रोष्टु। आकृतिगणत्वाद्—नद। भप। प्लव। चर। चोर। गाह। सूद। देव। पुत्र।

[गौरशबलकल्माषसारङ्गपिशङ्गहरिणपाण्डरामरसुन्दरविकलनिष्कलपुष्कलेभ्यः। बृहन्महत्सरश्चोरतापसदासचेटविटभिक्षुकबन्धकपुत्रगाग्येभ्यः। मत्स्यमनुष्यशुकयहयगवयर्श्यद्रुणोकणक्रोष्टुतक्षश्वानडुद्भ्यः। भौरिकिभौलिकिभौलिङ्गौद्गाहमानालम्ब्यालव्यालक्षिसौधर्मायःस्थूणारट्गौतमार्पचिचकेभ्यः। बोटनाटनटपाटसूपाटमूलाटपेटपटपटलपुटकुटपाण्टसेभ्यः। धातककेतककर्कारशर्कारबदरकुवललवलामलकमालतवेतसातसाढकेभ्यः। कदरकदलगलूचवाकुचनाचमाचकुम्भकुसुम्भयूथमेथकरीरसल्लकवल्लकेभ्यः। पिप्पलहरीतककोशातकशमतमसुपवशृङ्गभृङ्गबिम्बवर्बरशष्कुण्डपिण्डमण्डलेभ्यः। यूपसूपशूर्पसूर्मम्हमठपिठरोर्वगूर्दपृथुखारकाकर्णेभ्यः। द्रोणबुसासान्दालिन्दकन्दलदेहलशष्कुलशादसचमञ्जरालजयजमन्तेभ्यः। काकादनगयादनतेजनरजनवोहनशातनपातनसेचनकार्दनपाटनपेषणास्तरणास्थानाधिकरणप्रत्यवरोहणाप्रहासणेभ्यः। एषणात् करणे। सुमङ्गलात् संज्ञायाम्। पीनाच्च। रेवद्रोहिणाभ्यां नक्षत्रे। कटाच्छ्रोण्याम्। कुस्माण्डादयश्च। स० ३।४।५३-६९]

भाजगोणनागस्थलकुण्डकालकुशकामुककवरात् पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुकेशवेशेषु ॥३८॥ [० कवरेभ्यः ०। स० ३।४।७०]

भाजादिभ्यः पक्वादिष्वर्थेषु स्त्रियां ङीप् भवति। भाजी भवति पक्वा चेत्; भाजान्या। गोणी भवति, आवपनं चेत्; गोणान्या। नागी भवति, स्थूला चेत्; नागान्या। जातौ तु नागैव, तस्याः स्थौल्याभावात्। स्थली भवति, अकृत्रिमा चेत्, स्थलान्या। कुण्डी भवति, अमत्रं चेत्; कुण्डान्या। काली भवति, कृष्णा चेत्; कालान्या। कुशी भवति, आयसी चेत्; कुशान्या। कामुकी भवति, रिरंसुश्चेत्; कामुकान्या। कवरी भवति, केशवेशश्चेत्; कवरान्या।

[जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबराद् वृत्त्यम-

श्रायपनाक्रन्निमाश्राणा-स्थौल्य-चर्णानाच्छादनायोविकार-मैथुनेच्छा-केश-वेशेषु । पा० ४।१।४२ ]

**नालात् प्राण्योपधयोः ॥३९॥** [ स० ३।४।७२ ]

नीलात् प्राणिन्योपधौ च स्त्रियां ङीप् भवति । नीली वडवा, नीली ओषधिः । प्राण्योपध्योरिति किम् ? नीला शाटी ।

[ नीलादोपधौ । प्राणिनि च । पा० ४।१।४२।१-२ ]

**वा नाम्नि ॥४०॥**

नीलात् संज्ञायां ङीप् वा भवति । नीली, नीला ।

[ वा संज्ञायाम् । पा० ४।१।४२।३, स० ३।४।७३ ]

**शोणादिभ्यः ॥४१॥**

शोण इत्येवमादिभ्यः स्त्रियां ङीप् वा भवति । शोणी, शोणा । चण्डी, चण्डा । शोण । चण्ड । अराल । कमल । कृपण । विकट । विशाल । विशङ्कट । भरुज । चन्द्रभागा नद्याम् । कल्याण । उदार । पुराण । अहन् ।

· [शोणात् प्राचाम् । बह्वादिभ्यश्च । पा० ४।१।४३, ४५, चन्द्रभागान्नद्याम् । गणसूत्रम् । शोण-चण्डाराल-कमल-कृपण-विकट-विशाल-विशङ्कट-भरुज-ध्वज-कल्याणोदार-पुराणाहन्भ्यः । चन्द्रभागादनद्याम् । स० ३।४।७४-७५ ]

**एरक्तिनः ॥४२॥** [ स० ३।४।७६ ]

इवर्णान्तात् क्तिन्वर्जितात् स्त्रियां ङीप् वा भवति । धूली, धूलिः । आली, आलिः । आवली, आवलिः । पद्धती, पद्धतिः । अङ्गुली, अङ्गुलिः । अक्तिन इति किम् ? पक्तिः ।

[ कृदिकारादक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । शक्ति शस्त्रे । पा० ४।१।४५ ग० सू० । पद्धतेश्च । शक्तेः शस्त्रे । स० ३।४।७७-७८ ]

**ओर्गुणादखरुसंयोगोपान्तात् ॥४३॥** [ ० योगोपधात् । स० ३।४।७९ ]

उकारान्ताद् गुणवचनात् स्त्रियां वा ङीप् भवति, खरुशब्दं संयोगोपान्तं च वर्जयित्वा । पट्वी, पटुः; वह्वी, बहुः । ओरिति किम् ?

सिता। गुणादिति किम्? आखुः। अखरुसंयोगोपान्तादिति किम्? खरुर्ब्राह्मणी। पाण्डुर्ब्राह्मणी।

[ योतो गुणवचनात्। खरुसंयोगोपधप्रतिषेधश्च। पा० ४।१।४४, वा० २ ]

**पुंनाम्नो योगादपालकान्तात्** ॥४४॥

पुंस आख्याभूताच्छब्दात् पुंयोगात् स्त्रियां वर्तमानात् पालकान्तवर्जिताद् ङीप् भवति। प्रष्ठस्य भार्या, प्रष्ठी। नामग्रहणं किम्? प्रसूता। अपालकान्तादिति किम्? गोपालिका, पशुपालिका।

[ पुंयोगादाख्यायाम्। पा० ४।१।४८, गोपालिकादीनां प्रतिषेधो वक्तव्यः। भाष्यम्। पुंनाम्नः पुंयोगादपालकान्तात्। स० ३।४।८० ]

**पूतक्रतुवृषाकप्यग्निकुसितकुसीदानामै च** ॥४५॥ [स० ३।४।८१]

पूतक्रत्वादीनां पुंयोगात् स्त्रियां वर्तमानानां ङीप् भवति, एकारश्चान्तादेशः। पूतक्रतायी, वृषाकपायी, अग्नायी, कुसितायी, कुसीदायी। पुंयोगादित्येव। यया हि पूताः क्रतवः, पूतक्रतुः सा भवति।

[ पूतक्रतोरै च। वृषाकप्यग्निकुसितकुसीदानामुदात्तः। पा० ४।१।३६-३७ ]

**मनोरौ वा** ॥४६॥ [ पा० ४।१।३८ ]

मनुशब्दात् पुंयोगात् स्त्रियां वर्तमानाद्वा ङीप् भवति, औकारश्चान्तादेशः, ऐ च। मनायी, मनावी, मनुः।

[ मनोरौ च वा। स० ३।४।८२ ]

**सूर्या देवी** ॥४७॥

सूर्यस्य भार्या सूर्या, देवी चेत्। सूरी अन्या।

[सूर्याद्देवतायां चाप् वक्तव्यः। पा० ४।१।४८ भाष्यम्; सूर्या देवतायाम्। स० ३।४।८३ ]

**इन्द्रवरुणभवशर्वरुद्रमृडानामानुक् च** ॥४८॥

इन्द्रादीनां पुंयोगात् स्त्रियां वर्तमानानां ङीप् भवति, आनुक् चागमः। इन्द्राणी, वरुणानी, भवानी, शर्वाणी, रुद्राणी, मृडानी।

[इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् च। पा० ४।१।४९, इन्द्रवरुणभवशर्वरुद्रमृडाचार्याणामानुक् च। स० ३।४।८४ ]

**आचार्यानी** ॥४९॥

आचार्यस्यानुक् अणत्वं च निपात्यते। आचार्यस्य भार्या, आचार्यानी।

[ आचार्यादणत्वं च। पा० ४।१।४९।६ क्षुभ्नादित्वाण्णत्वाभावः। हृदय० ]

**मातुलोपाध्यायाद्वा** ॥५०॥ [ ० याभ्यां वा। स० ३।४।८५ ]

मातुलाद् उपाध्यायाच्च स्त्रियां ङीप् भवति, आनुक् च वा। मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी।

[ उपाध्यायमातुलाभ्यां वा। पा० ४।१।४९।४ ]

**आर्यक्षत्रियाच्च** ॥५१॥

आर्यात् क्षत्रियाच्च ङीप् भवति वा, आनुक् च। चकारो वेत्यनुसम्बन्धार्थः। अपुंयोगार्थं वचनम्, पृथक्करणात्। आर्याणी, क्षत्रियाणी। आर्या, क्षत्रिया। पुंयोगे तु। आर्यी, क्षत्रियी।

[ आर्यक्षत्रियाभ्यां वा। पा० ४।१।४९।७, आर्यक्षत्रियाभ्यां चापुंयोगे। स० ३।४।८६। Jumara, S'r.pati, Amara and others read अर्य.]

**हिमारण्यान्महत्त्वे** ॥५२॥ [ ० रण्याभ्यां ०। स० ३।४।८७ ]

हिमाद् अरण्याच्च महत्त्वे गम्यमाने स्त्रियां ङीप् भवति, आनुक् च। महद्धिमम्, हिमानी। महदरण्यम्, अरण्यानी।

[ हिमारण्ययोर्महत्त्वे। पा० ४।१।४९।१ ]

**यवाद्दोषे** ॥५३॥ [ पा० ४।१।४९।२, स० ३।४।८८ ]

यवात् स्त्रियां वर्तमानाद् ङीप् भवत्यानुक् च, दोषे गम्यमाने। दुष्टो यवः, यवानी।

**यवनाल्लिप्याम्** ॥५४॥ [ पा० ४।१।४९।३, स० ३।४।८९ ]

यवनात् स्त्रियां ङीप् भवत्यानुक् च, लिप्यामभिधेयायाम्। यवनानी लिपिः।

**क्रीतात् करणादेः** ॥५५॥ [ स० ३।४।९० ]

क्रीतशब्दात् स्त्रियां ङीप् भवति, करणं चेदस्यादिर्भवति। वस्त्रक्रीती। करणग्रहणं किम्? सुक्रीता। आदिग्रहणं किम्? अन्येन

क्रीता। न ह्यत्र करणमादिः, ऐकपद्याभावात्। कथं धनक्रीता* ? आवन्तेनायं समासः। अत इति वर्तते।

[ क्रीतात् करणपूर्वात्। पा० ४।१।५० ]

**क्तादल्पोक्तौ** ॥५६॥ [ स० ३।४।९१ ]

क्तान्तात् करणादेरल्पाख्यायां ङीप् भवति। अभ्रविलिप्ती द्यौः। अल्पोक्ताविति किम्? चन्दनानुलिप्ता योषित्।

[ क्तादल्पाख्यायाम्। पा० ४।१।५१ ]

**स्वाङ्गादकृतमितजातप्रतिपन्नादन्यार्थे** ॥५७॥

स्वाङ्गादेः क्तान्तादन्यपदार्थे वर्तमानात् स्त्रियां ङीप् भवति, कृतादीन् वर्जयित्वा। शङ्खभिन्नी। स्वाङ्गादिति किम्? वस्त्रच्छन्ना। अकृतादिभ्य इति किम्? दन्तकृता, दन्तमिता, दन्तजाता, दन्तप्रतिपन्ना। अन्यार्थ इति किम्? हस्ताभ्यां पतिता, हस्तपतिता।

[ बहुव्रीहेश्चान्तोदात्तात्। अस्वाङ्गपूर्वपदाद्वा। पा० ४।१।५२-५३, अन्तोदात्ते जातप्रतिषेधः। ४।१।५२।१, जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। ६।२।१७०, स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः। स० ३।४।९२ ]

**पाणिगृहीत्यूढा** ॥५८॥ [ स० ३।४।९३ ]

पाणिगृहीती भवत्यूढा चेत्। पाणिगृहीतान्या।

[ पाणिगृहीत्यादीनां विशेषे। पा० ४।१।५२।२ ]

**जातेरनाच्छादाद्वा** ॥५९॥

जातिशब्दादाच्छादवर्जिताद् यः परः क्तान्तस्तस्मादन्यपदार्थे वर्तमानात् स्त्रियां ङीप् भवति वा। पलाण्डुभक्षिती पलाण्डुभक्षिता। जातेरिति किम्? मासजाता। अनाच्छादादिति किम्? वस्त्रच्छन्ना।

---

* कथं सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी।
आवन्तेन समासोऽयमादित्येव प्रवर्तते॥ दुर्गटीका।

But this solution is not generally accepted by grammarians, because of the Paribhāṣā गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः.

अक्तादिभ्य इत्येव। कुण्डकृता, कुण्डमिता, पलाण्डुजाता, वृक्षप्रतिपन्ना।

[ अस्वाङ्गपूर्वपदाद्वा। जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। पा० ४।१।५३, ६।२।१७० ]

**संज्ञायाम्** ॥६०॥ [ स० ३।४।९५]

संज्ञायां क्तान्ताद् ङीप् वा भवति। प्रवृद्धविलूनी, प्रवृद्धविलूना।

[ बहुलं तणि। (किमिदं तणीति ? संज्ञाच्छन्दसोर्ग्रहणम्। भाष्यम्।) प्रवृद्धविलूनाद्यर्थम्। पा० ४।१।५२।३-४ ]

**स्वाङ्गादप्रधानात्** ॥६१॥

अप्रधानं यत् स्वाङ्गं तदन्तात् स्त्रियां ङीप् वा भवति। दीर्घकेशी, दीर्घकेशा।

अद्रवं मूर्तिमत् स्वाङ्गम्, प्राणिस्थम्, अविकारजम्।
अतत्स्थं तत्र दृष्टं चेत्, तेन चेत् तत् तथा युतम्॥ [महाभाष्यम्]

अद्रवमिति किम् ? बहुकफा। मूर्तिमदिति किम् ? बहुज्ञाना। प्राणिस्थमिति किम् ? दीर्घमुखा शाला। अविकारजमिति किम् ? बहुशोथा। अतत्स्थं तत्र दृष्टं चेत् तदपि स्वाङ्गम्। दीर्घकेशी रथ्या, दीर्घकेशा। तेन चेत् तत् तथा युतम्। पृथुस्तनी प्रतिमा, पृथुस्तना। अप्रधानमात्राश्रयणाद् अतिक्रान्ता केशान् मालेत्यतिकेशी, अतिकेशा। स्वाङ्गादिति किम् ? बहुयवा। अप्रधानादिति किम् ? शिखा।

[स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। पा० ४।१।५४, स्वाङ्गादुपसर्जनादसंयोगोपधाद् बह्वचः। स० ३।४।९६]

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्** ॥ ६२ ॥ [ स० ३।४।९७ ]

सिद्धे सत्यारम्भो नियमार्थः। नासिकोदराभ्यामेव बह्वज्भ्याम्, ओष्ठादिभ्य एव संयोगोपान्तेभ्यः स्त्रियां ङीप् भवति वा। शङ्कुनासिकी, शङ्कुनासिका। तलोदरी, तलोदरा। बिम्बोष्ठी,

**पाककर्णपर्णपुष्पफलमूलवालान्तात् ॥७२॥** [०वालोत्तरपदाच्च । पा० ४।१।६४, ०वालान्ताच्च । स० ३।४।१०७]

जातिवाचिनः पाकाद्यन्तात् स्त्रियां ङीप् भवति । ओदनपाकी, आखुकर्णी, मुद्गपर्णी*, शङ्खपुष्पी, दाडिमफली, दर्भमूली, गोवाली ।

**इतो नृजातेः ॥७३॥**

इकारान्तान् मनुष्यजातिवाचिनः स्त्रियां ङीप् भवति । अवन्ती । पुनर्जातिग्रहणाद् योपान्तादपि भवति । औदपेयी । नृग्रहणं किम् ? तित्तिरिः ।

[इतो मनुष्यजातेः । पा० ४।१।६५, स० ३।४।१०८]

**इञः ॥७४॥** [स० ३।४।१०९]

इञन्तादन्यतोऽपि च ङीप् भवति । सुतङ्गमेन निर्वृत्ता, सौतङ्गमी ।

[इतो मनुष्यजातेरिञ उपसंख्यानम् । पा० ४।१।६५।१]

**ऊङ् उतः ॥७५॥** [पा० ४।१।६६, स० ३।४।११०]

उदन्तात् स्त्रियामूङ् भवति । ब्रह्मबन्धूः । नृजातेरित्येव । धेनुः । अयोपान्तादित्येव । अध्वर्युर्ब्राह्मणी । तपरः किम् ? खलप्वे ।

**†अप्राणिनामरज्ज्वादिभ्यः ॥७६॥**

अप्राणिजातिभ्योऽरज्ज्वादिभ्यः स्त्रियाम् ऊङ् भवति । अलाबूः । अप्राणिनामिति किम् ? कृकवाकुः । अरज्ज्वादिभ्य इति किम् ? रज्जुः । हनुः ।

[ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् । पा० ४।१।६६।१, अरज्ज्वादेरप्राणिनो वा । स० ३।४।११५]

**वाह्वन्तकद्रुकमण्डलुभ्यो नाम्नि ॥७७॥**

वाह्वन्तात् कद्रुकमण्डलुभ्यां च संज्ञायामूङ् भवति । भद्रबाहूः,

* मङ्गपर्णी—MSS. † Should we read ०णिजातिभ्योऽर० ?

कद्रूः, कमण्डलूः । नाम्नीति किम्? वृत्तौ बाहू यस्याः सा, वृत्तबाहुः । कद्रुः, कमण्डलुः ।

[ बाह्वन्तात् संज्ञायाम् । कद्रुकमण्डल्वोश्छन्दसि । पा० ४।१।६७-७१, ७१, बाह्वन्तकद्रुकमण्डलुभ्यः संज्ञायाम् । स० ३।४।१११]

**पङ्गूः श्वश्रूः** ॥७८॥

एतौ शब्दौ स्त्रियां निपात्येते ।

[पङ्गोश्च । पा० ४।१।६८। श्वशुरस्योकाराकारलोपश्च वक्तव्यः । काशिका ४।१।७५, पङ्गोः । श्वशुरस्योदन्तलोपश्च । स० ३।४।११२-११३]

**ऊरोरुपमानसंहितसहितसहशफवामलक्ष्मणादेः**[1] ॥७९॥ [स० ३।४।११४]

ऊरुशब्दादुपमानादिपूर्वात् स्त्रियामूङ् भवति । करभोरूः, संहितोरूः, सहितोरूः, सहोरूः, शफोरूः, वामोरूः, लक्षणोरूः । शार्ङ्गरवाद्यञो ङीन् [पा० ४।१।७३] न वक्तव्यः । अञन्ताद्धि ङीबस्त्येव [१७] । शार्ङ्गरवादिभ्यश्चाणन्तेभ्यो ढगन्तेभ्यो यञन्ताच्च जातिवाचिभ्योऽपि ङीप्, इकारान्ताच्च । शैब्येति यङश्चाप् [८०] भवितव्यम् । शिबीनां तु जातौ तस्येदमित्यणो ङीप् । भोगवद्गौरिमतोरप्युगिति [३] ङीप् । ह्रस्वस्तु तरबादिषु व्यवस्थितविभाषया नित्यं भवति । नृनरयोरपि स्त्रियां वृत्तिरेव नास्ति । तस्येदमित्यणो ङाप् । नारी ।

ऊरूत्तरपदादौपम्ये । संहितशफलक्षणवामादेश्च । पा० ४।१।६९-७० भोगवद्गौरिमतोः संज्ञायाम् । नृनरयोर्वृद्धिश्च । पा० ४।१।७३ ग० सू०, स० ३।४।१२४-१२५, अरज्ज्वादेरप्राणिनी वा । अञो ङीन् । सङ्गरु-वहतु-कपट-गुग्गुलु-गोतम-बृहद्भ्योऽण् । कमण्डल्वानिधि-बृहत्कृताऽशोका-कंकसीभ्यो ढकः । मुञ्जवाल्म्याभ्यां फकः । शिविकृपिभ्यां ञ्याङः । अश्मरथाद् यञः । आङ्पर्याङ्भ्यामीहेरिनः । वतण्डारालचण्डालेभ्यः । स० ३।४।११५-१२३ ]

**यङश्चाप्** ॥८०॥ [पा० ४।१।७४, स० ३।४।१२६]

---

[1] लक्ष्म – MS

बिम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा। मृद्वङ्गी, मृद्वङ्गा। चारुगात्री, चारुगात्रा। रक्तकण्ठी, रक्तकण्ठा। एतेभ्य एवेति किम्? पृथुजघना, पृथुगुल्फा।

[नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च। पा० ४।१।५५, अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यम्। काशिका ४।१।५४]

**पुच्छात्**॥ ६३॥ [स० ३।४।९८]

अप्रधानात् पुच्छशब्दाद् ङीप् भवति वा। दीर्घपुच्छी, दीर्घपुच्छा।

**कबरमणिविषशरात्**॥ ६४॥ [०शरादेः। स० ३।४।९९]

एभ्यः परात् पुच्छादप्रधानात् स्त्रियां ङीप् भवति, नित्यं पुनर्विधानात्। कबरपुच्छी, मणिपुच्छी, विषपुच्छी, शरपुच्छी।

[कबरमणिविषशरेभ्यो नित्यम्। पा० ४।१।५५।२]

**उपमानादेः**॥ ६५॥ [०देश्च। स० ३।४।१००]

उपमानादेः पुच्छात् स्त्रियां ङीप् भवति। उलूकपुच्छी।

[उपमानात् पक्षाच्च। पा० ४।१।५५।३]

**पक्षात्**॥ ६६॥ [स० ३।४।१०१]

उपमानादेः पक्षात् स्त्रियां ङीप् भवति। उलूकपक्षी।

[उपमानात् पक्षाच्च पुच्छाच्चेति वक्तव्यम्। पा० ४।१।५५ भाष्यम्]

**न क्रोडादिभ्यः**॥६७॥

क्रोडादिभ्यः स्त्रिया ङीप् न भवति। कल्याणक्रोडा, कल्याणखुरा। क्रोड*। खर। गोखा। उखा। बाल। शफ। गुद। आकृतिगणोऽयम्। सुभगा, सुगला।

[ न क्रोडादिबह्वचः । पा० ४।१।५६, न क्रोडखुरगुदशफवालभालगल भगोलघोणादिभ्यः । स० ३।४।१०१]

**सहनञ्विद्यमानादेः** ॥६८॥ [स० ३।४।१०३म]

सहनञ्विद्यमानादेः स्वाङ्गाद् ङीप् न भवति । सकेशा, अकेशा, विद्यमानकेशा । सनासिका, अनासिका, विद्यमाननासिका ।

[सहनञ्विद्यमानपूर्वाच्च । पा० ४।१।५७]

**नखमुखान् नाम्नि** ॥६९॥

नखमुखाभ्यां संज्ञाया ङीप् न भवति । शूर्पणखा, गौरमुखा। नाम्नीति किम् ? तुङ्गनखी ।

*[नखमुखात् संज्ञायाम् । पा० ४।१।५८, स० ३।४।१०५]*

**सख्यशिश्वी** ॥७०॥ [स० ३।४।१०५]

सखी अशिश्वीति च संज्ञायां साधू भवतः ।

[सख्यशिश्वीति भाषायाम् । पा० ४।१।६२]

**जातेरस्त्रीविषयादयोपान्तात्** ॥७१॥

सामान्यवचनाद् योपान्तवर्जितात् स्त्रियामन्यत्र च दृष्टाद् ङीप् भवति । कुक्कुटी, मयूरी, सूकरी । जातेरिति किम् ? मुण्डा । अस्त्रीविषयादिति किम् ? मक्षिका । अयोपान्तादिति किम् ? क्षत्रिया । स्वार्थ इत्येव । प्रियकुक्कुटा मयुरा । अत इत्येव । तित्तिरिः ।

[जातेरस्त्रीविषयादयोपधात् । पा० ४।१।६३, अस्त्रीविषयादयोपधाज्जातेः । स० ३।४।१०६]

---

on which Jinendra relies is a fairly late work and the Kās'ika MSS. have क्रोड. The Nyāsa-ratnamati uses क्रोड in the masc. Thus Vardhamāna says : रत्नमतिस्तु कल्याणः क्रोडो यस्या इति विग्रहं दर्शयन् पुंलिङ्गतां व्यापयति । घोणा appears to have assumed the shape of गोला which is explained thus : गोरिव तमिन्द्रियं यस्याः सा गोला । अवयवविशेषो लयनरूपः । M. W. compares गोला with गोपटा 'the furrow of the upper lip'

**पाककर्णपर्णपुष्पफलमूलवालान्तात् ॥७२॥** [०बालोत्तरपदाच्च । पा० ४।१।६४, ०वालान्ताच्च । स० ३।४।१०७]

जातिवाचिनः पाकाद्यन्तात् स्त्रियां ङीप् भवति। ओदनपाकी, आखुकर्णी, मुद्गपर्णी*, शङ्खपुष्पी, दाडिमफली, दर्भमूली, गोवाली।

**इतो नृजातेः ॥७३॥**

इकारान्तान् मनुष्यजातिवाचिनः स्त्रियां ङीप् भवति। अवन्ती। पुनर्जातिग्रहणाद् योपान्तादपि भवति। औदपेयी। नृग्रहणं किम्? तित्तिरिः।

[इतो मनुष्यजातेः। पा० ४।१।६५, स० ३।४।१०८]

इञः ॥७४॥ [स० ३।४।१०९]

इञन्तादन्यतोऽपि च ङीप् भवति। सुतङ्गमेन निर्वृत्ता, सौतङ्गमी।

[इतो मनुष्यजातेरिञ उपसंख्यानम्। पा० ४।१।६५।१]

ऊङ् उतः ॥७५॥ [पा० ४।१।६६, स० ३।४।११०]

उदन्तात् स्त्रियामूङ् भवति। ब्रह्मबन्धूः। नृजातेरित्येव। धेनुः। अयोपान्तादित्येव। अध्वर्युर्ब्राह्मणी। तपरः किम्? खलप्वे।

†अप्राणिनामरज्ज्वादिभ्यः ॥७६॥

अप्राणिजातिभ्योऽरज्ज्वादिभ्यः स्त्रियाम् ऊङ् भवति। अलाबूः। अप्राणिनामिति किम्? कृकवाकुः। अरज्ज्वादिभ्य इति किम्? रज्जुः। हनुः।

[ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम्। पा० ४।१।६६।१, अरज्ज्वादेरप्राणिनो वा। स० ३।४।११५]

**बाह्वन्तकद्रुकमण्डलुभ्यो नाम्नि ॥७७॥**

बाह्वन्तात् कद्रुकमण्डलुभ्यां च संज्ञायामूङ् भवति। भद्रबाहूः,

* मद्गपर्णी—MSS. † Should we read ०णिजातिभ्योऽर० ?

कद्रूः, कमण्डलूः। नाम्नीति किम्? वृत्तौ बाहू यस्याः सा, वृत्तबाहुः। कद्रुः, कमण्डलुः।

[बाह्वन्तात् संज्ञायाम्। कद्रुकमण्डल्वोश्छन्दसि। पा० ४।१।६७-७१, ७१, बाह्वन्तकद्रुकमण्डलुभ्यः संज्ञायाम्। स० ३।४।१११]

**पङ्गूः श्वश्रूः ॥७८॥**

एतौ शब्दौ स्त्रियां निपात्येते।

[पङ्गोश्च। पा० ४।१।६८। श्वशुरस्योकाराकारलोपश्च वक्तव्यः। काशिका ४।१।७५, पङ्गोः। श्वशुरस्योदन्तलोपश्च। स० ३।४।११२-११३]

**ऊरोरुपमानसंहितसहितसहशफवामलक्ष्मणादेः ॥७९॥** [स० ३।४।११४]

ऊरुशब्दादुपमानादिपूर्वात् स्त्रियामूङ् भवति। करभोरूः, संहितोरूः, सहितोरूः, सहोरूः, शफोरूः, वामोरूः, लक्षणोरूः। शार्ङ्गरवाद्यञो ङीन् [पा० ४।१।७३] न वक्तव्यः। अञन्ताद्धि ङीबस्त्येव [१७]। शार्ङ्गरवादिभ्यश्चाणन्तेभ्यो ढगन्तेभ्यो यञन्ताच्च जातिवाचिभ्योऽपि ङीप्, इकारान्ताच्च। शैब्येति यङश्चापा [८०] भवितव्यम्। शिबीनां तु जातौ तस्येदमित्यणो ङीप्। भोगवद्गौरिमतोरप्युगिति [३] ङीप्। ह्रस्वस्तु तरवादिषु व्यवस्थितविभाषया नित्यं भवति। नृनरयोरपि स्त्रियां वृत्तिरेव नास्ति। तस्येदमित्यणो ङाप्। नारी।

ऊरूत्तरपदादौपम्ये। संहितशफलक्षणवामादेश्च। पा० ४।१।६९-७० भोगवद्गौरिमतोः संज्ञायाम्। नृनरयोर्वृद्धिश्च। पा० ४।१।७३ ग० सू०, स० ३।४।१२४-१२५, अरज्ज्वादेरप्राणिनी वा। अञो ङीन्। सङ्गरु-वहतु-कपटु-गुग्गुलु-गोनम-बृहद्भ्योऽणः। कमण्डल्वानिधि-बृहत्कृताऽशोका-कंकसीभ्यो ढकः। मुञ्जपाल्याभ्यां फकः। शिविकपिभ्यां ज्यङः। अश्मरथाद् यञः। आङ्पर्याङ्भ्यामौहेरिन.। वतण्डारालचण्डालेभ्यः। स० ३।४।११५-१२३]

**यङश्चाप् ॥८०॥** [पा० ४।१।७४, स० ३।४।१२६]

---

[1] लक्ष्म– MS

यङन्तात् स्त्रियां चाप् भवति। कारीषगन्ध्या, आम्बष्ठ्या, वाराह्या। [७१] जातिलक्षणस्य ङीषो डापश्च [१५] बाधनार्थं वचनम्।

**यूनस्तिः ॥८१॥** [पा० ४।१।७७, स० ३।४।१२८]

यूनः स्त्रियां तिर्भवति। युवतिः।

**अनृषेर्गुरूपोत्तमाद् गोत्रेऽणिञोः ष्यङ् ॥८२॥**

अनृषिवाचिनो गुरूपोत्तमाद् यावणिञौ गोत्रे विहितौ तयोः स्त्रियां ष्यङादेशो भवति। कारीषगन्ध्या, वाराह्या। स्वभावत उत्तमशब्दस्त्रिप्रभृतिषु वर्तते*। अनृषेरिति किम्? वासिष्ठी। गुरूपोत्तमादिति किम्? औपगवी। गोत्र इति किम्? आहिच्छत्री। अणिञोरिति किम्? आर्तभागी। [२।३।२२] बिदादित्वादञ्।

[अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे। पा० ४।१।७८, बह्वज्-गुरूपान्तानार्षगोत्राणिञोरन्त्यस्य ष्यङ्। स० ३।४।१२९]

**कुलनाम्नः ॥८३॥**

कुलाख्याभूताच्छब्दात् स्त्रियां गोत्रे विहितयोरणिञोः ष्यङ् भवति। पौणिक्या, मौखर्या।

[गोत्रावयवात्। पा० ४।१।७९, कुलाख्यानाम्। स० ३।४।१३०]

**क्रौड्यादीनाम् ॥८४॥**

क्रौडिरित्येवमादीनामणिञोः स्त्रियां ष्यङ् भवति। क्रौड्या॥ क्रौडि। लाडि। आपिशलि। आपिक्षिति। चौपयत। सैकयत। बैल्ववत। सौधातकि। सूत युवत्याम्। भोज क्षत्रिये। भौरिकि। भौलिकि। शालास्थलि[1]। कापिष्ठलि।

[क्रौड्यादिभ्यश्च। पा० ४।१।८०, क्रौडि-लाडि-व्याडाापिशल्यापिक्षलि-सौधातकि-भौरिकि-भौलिकि-शाल्मलि-शालास्थलि-कापिष्ठलि-दैवदत्यादीनाम्।

---

* आभिजात्यविशेषार्थं तमशब्देन निर्देशः क्रियते, स च, त्रिप्रभृतिषु वर्तते। भाष्यम्।

[1] शालस्थलि—MS.

चौपयत-चैकयत-चैटयत-बैल्वयत-सैकयतानां च । भोजस्य क्षत्रियायाम् । सूतस्य युवत्याम् । स० ३।४।१३१-१३४]

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धीनां वा ॥ ८५॥** [स० ३।४।१३५]

दैवयज्ञ्यादीनामिञ्नः स्त्रियां ष्यङ् वा भवति । दैवयज्ञी, दैवयज्ञ्या । शौचिवृक्षी, शौचिवृक्ष्या । सात्यमुग्री, सात्यमुग्र्या । काण्ठेविद्धी, काण्ठेविद्ध्या । वेत्यधिकारः ।

[दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धिभ्योऽन्यतरस्याम् । पा० ४।१।८१]

इति चान्द्रे व्याकरणे द्वितीयस्याध्यायस्य तृतीयः पादः समाप्तः ।

**प्राग् जितादण् ॥१॥** [स० ४।१।१]

प्राग् जितसंशब्दनाद् [ ३।४।२ ] येऽर्थास्तेष्वर्थेष्वण् भवति । औपगवः । वेत्यनुवृत्तेः । उपगवपत्यम् ।

[प्राग्दीव्यतोऽण् । पा० ४।१।८३]

**दित्यदित्यादित्ययमाण् ण्यः ॥२॥** [०यमेभ्यो ण्यः । स० ४।१।२]

दित्यादिभ्यः प्राग् जिताण् ण्यो भवति । दैत्यः, आदित्यः, आदित्यः, याम्यः । कथं दैतेयः ? ण्यन्ताड् ढग् भविष्यति ।

[दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । पा० ४।१।८५, यमाच्चेति वक्तव्यम् । ..कथं दैतेयः ? दितिशब्दात् कृदिकारादक्तिनः, सर्वतोऽक्तिन्नर्थादित्येके इति ङीषं कृत्वा स्त्रीभ्यो ढक् क्रियते । लिङ्गविशिष्टपरिभाषा त्वनित्या । काशिका । दैतेय and याम्य are not sanctioned by Pāṇ, Kāt. and Pat. Jainendra makes provision for याम्य. Cf. Keśava : ण्यो यमाच्चेति वक्तव्यमित्येतद्वचनं यतः । अनार्षं तत एवास्य याम्यशब्दस्य दुष्टता । अर्थेषु यमसम्बन्धियमदेवताकादिषु [दैवतकादिषु ?] । ]

**पत्युरनश्वाद्यादेः ॥३॥**

अश्वादिभ्यो योऽन्यः शब्दस्तदादेः पतिशब्दात् प्राग् जिताण् ण्यो भवति । बार्हस्पत्यः । अनश्वाद्यादेरिति किम् ? आश्वपतम्, शात-

पतम्, आधिपतम्। अश्व। शत। धन। गण। राष्ट्र। कुल। गृह। पशु।.धान्य। धन्वन्। सभा। प्राण। अधि। सेना। क्षेत्र।

[दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। अश्वपत्यादिभ्यश्च। पा० ४।१।८५,८४ पत्युत्तरपदाच्च। अश्व-शत-धन-गण-राष्ट्र-कुल[1]-गृह-पशु-धान्य-धर्म-धन्वन्-सभा-प्राण-सेना-क्षेत्रादिपूर्वादण्। स० ४।१।३-४. अधि is not only not mentioned by Jayāditya, it is not found in Bhoja and Jumara, two staunch followers of Candra.]

अः स्थाम्नः ॥४॥ [स० ४।१।५]

स्थामन्शब्दान्तात् प्राग् जिताद् अः परो भवति। अश्वत्थामः।

[स्थाम्नोऽकारः। पा० ४।१।८५।७]

लोम्नोऽपत्येषु ॥५॥ [स० ४।१।६]

लोमान्ताद् बहुष्वपत्येष्वः परो भवति। उडुलोम्नः पुत्राः, उडुलोमाः। बहुवचनं किम्? औडुलोमिः। बाह्वादित्वादिञ्।

[लोम्नोऽपत्येषु बहुषु। पा० ४।१।८५।८]

पृथिव्या ञः ॥६॥ [स० ४।१।७]

प्राग् जितात् पृथिव्या ञो भवति। पार्थिवः। [७] उत्सादिपाठादञ्। पार्थिवी, पार्थिवा।

[पृथिव्या ञाञौ। पा० ४।१।८५।२]

उत्सादिभ्योऽञ् ॥७॥ [पा० ४।१।८६]

प्राग् जितादुत्सादिभ्योऽञ् भवति। औत्सः, औदपानः। उत्स। उदपान। विकर[2]। विनद[3]। महानद। महानस। महाप्राण। तरुण। तलुन। बष्कयादसमासे। धेनु। पृथिवी। पङ्क्ति। जगती। त्रिष्टुभ्। अनुष्टुभ्। जनपद। भरत। उशीनर। ग्रीष्म। पीलुकुण[4]। उदस्थानाद् देशे।[5] बृहती पृषदंशे। भल्लकीय। रथन्तर। मध्यन्दिन।

[1] The printed editions read कूल।

[2] विकिर—MS.

[3] मिरद—MS

[4] पीलु। कुण।—MS.

[5] बहती वंशे MS. He. has पृषदंश इत्यन्ये.

वृहत्। महत्। महित्[1]। सत्वत्। कुरु। पञ्चाल। इन्द्रावसान। उष्णिह्। ककुभ्। सुवर्ण।

[अञ् उत्सोदपान-विकर-विनद-तरुण-तलुन-धेनु-पीलुकुण-सुवर्ण-पृषदंशेभ्यः। भरत-कुरु-सत्वदिन्द्रावसान-जनपद-पञ्चालोशीनरेभ्यः। त्रिष्टुबनुष्टुप्-ककुब्-उष्णिक्-पङ्क्ति-जगती-बृहतीभ्यः। बृहन्महद्रथन्तर-मध्यन्दिन-भल्लकीय-महानद-महानस-महाप्राणेभ्यः। बष्कयादसमासे। उदस्थानाद् देशे। ग्रीष्मावच्छन्दसि। स० ४।१।८-१४]

**देवात्** ॥८॥

देवशब्दात् प्राग् जितादञ् परो भवति। दैवः।

[दिवस्य यञाञौ। पा० ४।१।८५।३, देवाद् यञ् च। स० ४।१।१५]

**यञ्** ॥९॥

देवात् प्राग् जिताद् यञ् भवति। दैव्यः।

**वहिषष्टीकक् च** ॥१०॥ [स० ४।१।१६]

प्राग् जिताद् वहिषष्टीकग् भवति, यञ् च। वाहीकः, बाह्यः।

[वहिषष्टिलोपश्च यञ् च। ईकक् च। पा० ४।१।८५।४-५]

**संख्यादेः संख्येयादनपत्येऽजादेर्लुगद्विः** ॥११॥

संख्यादेः संख्येयान्ताच्छब्दादनपत्ये विहितस्याजादेः प्राग्जितीयस्य लुग् भवति, न तु द्विः। पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः। संख्यादेरिति किम्? पौर्वशालः। संख्येयादिति किम्? अवयवा विद्या, त्रिविद्या, तामधीते त्रैविद्यः। षण्णा कुलं षट्कुलम्, तत्र भवः षाट्कुलः। पञ्चनदं नगरम्, तत्र भवः पाञ्चनदः। पञ्चकपाल्यां तु संस्कृतः पञ्चकपाल एव, संख्येयार्थत्वात्। अनपत्य इति किम्? द्वैमातुरः। अजादेरिति किम्? पञ्चगार्गरूप्यः। अद्विरिति किम्? पञ्चकपालस्य पुरोडाशस्य खण्डः, पाञ्चकपालः। प्राग् जितादित्येव। द्विनाविकः।

---

[1] Contamination of महित and मिहत्.

[द्विगोर्लुगनपत्ये । पा० ४।१।८८, द्विगोरनपत्येऽजादेर्लुगद्विः । स० ४।१।१७]

**प्राग् वतेरग्निकलिभ्यां ढक् ॥१२॥** [स० ४।१।१८]

प्राग् वतिसंशब्दनाद् [४।१।१३५] येऽर्थास्तेष्वर्थेष्वग्निकलिभ्यां ढग् भवति। अग्नेरपत्यम्, आग्नेयः। कालेयः। अग्निना दृष्टं साम, आग्नेयम्। कालेयम्। अग्निर्देवतास्य आग्नेयः। कालेयः। अग्नेः स्वम्, आग्नेयम्। कालेयम्। अग्नेर्निमित्तं संयोग उत्पातो वा, आग्नेयः। कालेयः। प्राग् वतेरिति किम्? अग्निवत्, कलिवत्। अग्नित्वम्, कलित्वम्। वेत्येव। अग्निस्वम्। कलिस्वम्।

[अग्नेर्ढक्। पा० ४।२।३३, सर्वत्राग्निकलिभ्यां ढक्। पा० ४।२।७ भाष्यम्। Cf. प्राग्वतेष्ठञ्। पा० ५।१।१८]

**स्त्रीपुंसाभ्यां नञ्स्नञौ ॥१३॥** [स० ४।१।१९]

स्त्रीपुंसाभ्यां प्राग् वतेर्नञ्स्नञौ भवतः। स्त्रैणम्, पौंस्नम्। प्राग् वतेरित्येव। स्त्रीवत्, पुंवत्।

[स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। पा० ४।१।८७, नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः। वा० १]

**भावे वा ॥१४॥** [स० ४।१।२०]

स्त्रीपुंसाभ्यां भावे नञ्स्नञौ वा भवतः। स्त्रैणम्, स्त्रीत्वम्। पौंस्नम्, पुंस्त्वम्।

[वतेः प्रागिति चेद् भाव उपसंख्यानम्। पा० ४।१।८७।२]

**गोरचि यत् ॥१५॥** [स० ४।१।२१]

गोशब्दादजादिप्रसङ्गे यद् भवति। गवि भवम्, गव्यम्। गोः स्वम्, गव्यम्, गोर्देवतास्य, गव्यम्। अचीति किम्? गोरागतो, गोरूप्यः।

[सर्वत्र गोरजादिप्रसङ्गे यत्। पा० ४।१।८५।९]

**तस्यापत्यम् ॥१६॥** [पा० ४।१।९२, स० ४।१।२२]

षष्ठ्यन्तादपत्ये यथाविहितमणादयो भवन्ति। औपगवः, दैत्यः, बार्हस्पत्यः।

**आद्यात्** ॥१७॥ [ स० ४।१।२३ ]

अपत्ये येऽणादयो भवन्ति, ते परमप्रकृतेरेव भवन्ति। सर्वपूर्वजानां हि तदपत्यम्, उपचाराद्वा तच्छब्देनाभिधानम्। उपगोरपत्यमौपगवः, तस्यापत्यमौपगवः। देवदत्तस्यापत्यं दैवदत्तिः, तस्यापत्यं दैवदत्तिः। गर्गस्यापत्यं गार्ग्यः, तस्यापत्यं गार्ग्यः।

[ एको गोत्रे। पा० ४।१।९३ ]

**पौत्रादेरस्त्रियां गुर्वायत्तो** ॥१८॥ [ स० ४।१।२४ ]

पौत्रादेरपत्याद् गुर्वायत्तो स्त्रीवर्जितेऽपत्येऽणादयो भवन्ति। गार्ग्यायणः। अस्त्रियामिति किम्? गार्गी। गुरुग्रहणं किम्? अन्यापत्यो गार्ग्यः। आयत्तग्रहणं किम्? यो गुरौ सत्यपि स्वतन्त्रो व्यवहरति, स कुत्सायां गार्ग्य इत्युच्यते। यद्यपि* गार्ग्यायणो जाल्म इत्युच्यते, तथापि जाल्मशब्दात् कुत्सा गम्यते, न गार्ग्यायणशब्दात्। अनेन तु विषयः प्रदर्श्यते—गुर्वायत्तत्वेऽपि युक्ते न युक्तकारीति। यस्तु गुरावसत्यपि न स्वैरी भवति, स मृतस्यापि गुरोस्तदादिष्टाचरणादायत्त एवेति प्रशंसार्थं गार्ग्यायण इत्युच्यते। असगोत्रो गुर्वायत्तोऽपि च प्रशंसास्पदत्वाद् गार्गायण एवेष्यते। मृतस्तु न कस्यचिदायत्त इति गार्ग्य इत्युच्यते। अथ पूर्वं गुर्वायत्तो भूत इति गार्ग्यायण इत्युच्यते, तथापि न दोषः। सर्वत्र च गार्ग्यशब्दो विशेषस्याविवक्षाया-मस्त्येव।

[ गोत्राद्यून्यस्त्रियाम्। पा० ४।१।९४ ]

**अत इञ्** ॥१९॥ [ पा० ४।१।९५, स० ४।१।२५ ]

षष्ठ्यन्ताददन्तादपत्य इञ् भवति। दक्षस्यापत्यम्, दाक्षिः। तपरः किम्? कैलालपः।

**बाह्वादिभ्यो गोत्रादिभ्यः** ॥२०॥

बाहुप्रभृतिभ्यो गोत्रस्यादिभूतेभ्य इञ् भवति। बाहविः,

* यदपि—MS

औपवाहविः। गोत्रादिभ्य इति किम्? यो ह्यद्यत्वे बाहुर्नाम, तस्य बाहवो भवति ॥ बाहु। उपबाहु। निबाहु। उपबिन्दु। वृकला[1]। कृकला। चूडा। बलाका। मूषिका। भगला। लगहा[2]। ध्रुवका। धुवका। सुमित्रा। दुर्मित्रा। पुष्करसद्। अनुरहत्[3]। अनडुह्। अग्निशर्मन्। देवशर्मन्। कुनामन्। सुनामन्[4]। पञ्चन्। सप्तन्। अष्टन्। सुधावत्[5]। उदञ्च्। शिरस्। माषशराविन्। क्षेमधृत्विन्[6]। शृङ्खलनोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त। कृष्ण। युधिष्ठिर। अर्जुन। साम्ब[7]। गद। प्रद्युम्न। भूयोऽम्भोऽमितौजसां सलोपश्च। आकृतिगणोऽयम्। जाङ्घिः, ऐन्द्रशर्मिः, आजधेनविः।

[बाह्वादिभ्यश्च। पा० ४।१।९६, बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः। वा० १। बाहूपबाहूपविन्दुजधेनुशटाकु-शिवाकुभ्यो गोत्रादिभ्यः। वृकला-कृकला-चूडा-बलाका-जङ्घा-छगला-भगला-लहका-ध्रुवका-धुवका-मूषिका-सुमित्रा-दुर्मित्राभ्यः। युधिष्ठिरार्जुन-राम-सङ्कर्षण-कृष्ण-गद-प्रद्युम्न-साम्ब-सत्यक-शूराऽसुराऽजीगर्तेभ्यः। सुधावत्-पुष्करसद्-अनुरहद्-अनडुत्-पञ्च-सप्ताष्ट-क्षेमवृद्धि-माष-शरावि-शृङ्खला-तोदि-खरनादिभ्यः। प्राकारनगराभ्यां मर्दिनः। इन्द्राग्निदेवेभ्यः शर्मणः। उदञ्चः संज्ञायाम्। कुसुभ्यां नाम्नः। शिरोलोमभ्याम्। सम्भूयोऽम्भोऽमितौजःशलङ्कूनां लोपश्च। स० ४।१।२८-३७। उदङ्कादिभ्यश्च। ४।१।२७]

व्यासादीनामकङ् च ॥२१॥

व्यासादीनामपत्ये इञ् भवति, अकङ् चादेशः। वैयासकिः, सौधातकिः, वारुटकिः ॥ व्यास। सुधातृ। वरुट। निषाद। चण्डाल। विम्ब।

[सुधातुरकङ् च। पा० ४।१।९७, सुधातृव्यासयोः। वा० १, सुधातृ-

[1] विकला—MS [2] छगला—Kāś. [3] अनुहरत्—Kāś.
[4] सनामन्—MS [5] सुधावर्ग—MS., not found in Kāś.
[6] क्षेमधृत्वन्-Jumara, क्षेमवृद्धिन्—K. [7] श्याम—MS.

व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्। भाष्यम्। व्यास-सुधातृ-वरुट-निषाद-चण्डाल-बिम्बानामकङ् च। स० ४।१।३८]

विदादिभ्योऽञ्. ॥२२॥

विद इत्येवमादिभ्योऽपत्येऽञ् भवति। बैदः, और्वः। गोत्रादिभ्य इत्येव। विदो नाम कश्चित्। तस्यापत्यं बैदिः॥ बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलात। किन्दर्भ। विश्वानर। ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। अपस्तम्ब[1]। कुचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। विन्दु। भाजन। अश्वावतान। श्यामाक। शम्बक[2]। श्यापर्ण। हरित। किंदास। वह्यस्क[3]। अर्कलुष[4]। वध्योग। विष्णुवृद्ध[5]। प्रतिबोध। रथीतर[6]। रथन्तर। गविष्ठिल। गविष्ठिर। निषाद। मठर। मृदाकु। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। परस्त्री परशुं च।

[अनृष्यानन्तर्ये बिदादिभ्योऽञ्। पा० ४।१।१०४, बिदोर्व-कश्यप-कुशिक-भरद्वाजोपमन्यु-किलात-विदर्भ-विश्वानरर्ष्टिषेणेभ्यः पौत्रादौ। ऋतभाग-हर्यश्व-प्रियकाऽपस्तम्ब-कुचवार-शरद्वच्छुनक-धेनुभ्यः। गोपवन-शिग्रु-बिन्दु-भाजनाऽश्वावतान-श्यामाक-शम्बक-श्यापर्णेभ्यः। हरित-किन्दास-वह्यस्काऽर्कलूष-वध्योग-विष्णुवृद्ध-प्रतिबोध-रथीतर-रथन्तर-गविष्ठिर-गविष्ठिल-निषाद-शबर-मठर-सृदाकु-पृदाकुभ्यश्च। पुनर्भूपुत्रदुहितृननान्दृनिषादेभ्योऽनन्तरेऽञ्। परस्त्रियाः परशुश्च। स० ४।१।४१-४४, ३९-४०]

ऋषेः पौत्रादौ ॥२३॥

विदादिभ्य ऋषेरपत्ये पौत्रादावेवाञ् भवति। बैदः, कौशिकः। ऋषेरिति किम्? दौहित्रः। पौत्रादाविति किम्? बैदिः।

गर्गादिभ्यो यञ्. ॥२४॥ [पा० ४।१।१०५]

गर्ग इत्येवमादिभ्यः पौत्रादावपत्ये यञ् भवति गार्ग्यः, वात्स्यः। पौत्रादावित्येव। गार्गिः। गोत्रादिभ्य इत्येव। गर्गो नाम कश्चित्,

[1] अपस्तम्भ—MS. [2] श्यमाक—MS. [3] वसिष्ठ—MS.
[4] अर्कलूष—Kā-. [5] विष्ण। वृद्ध।—MS [6] रथतीर—MS.

तस्यापत्यं पौत्रादि गार्गिः ॥ गर्ग । वत्स । वाजादसमासे । संकृति । असंकृति । अज । व्याघ्रपाद् । विदभृत् । प्राचीनयोग[1] । पुलस्ति । एक । रेभ । अग्निवेश । शङ्ख । शठ । धूम । अवट । मनस । धनञ्जय । वृक्ष । विश्वावसु । जरमाण । कुरुकत[2] । अनडुह् । लोहित । संशित । बभ्रु । वल्गु । मण्डु । मङ्क्षु । शङ्कु[3] । लिगु । गुहलु[4] । विजिगीषु । मन्तु । मनु । तनु । मनायी । स्रुव । कन्थक । ऋक्ष[5] । तरुक्ष । तरक्ष । तण्ड । वतण्ड । कपि । कत । शकल । कण्व । गोकक्ष । अगस्त्य । कुण्डिनी । यज्ञवल्क । अभयजात । तिरोहित[6] । वृषगण । रहोगण । शण्डिल । मुद्गल । मुसल । पराशर । जतुकर्ण । मन्त्रित[7] । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूणा[8] । रराका । पिङ्गल । कृष्ण । गोलन्द । उलूक । तितिक्ष[9] । भिषज् । भण्डित । दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलू । वृहदग्नि । जमदग्नि । अलाभिन्[10] । उक्थ । ऋक्थ[11] । कुटीगु । कथं रामो जामदग्न्यः, व्यासः पाराशर्य इति ? पुत्रोऽपि हि पौत्रादिकार्यकरत्वात् तथा व्यपदिश्यते । अनन्तरविवक्षायां तु ऋष्यण् [४४] एव भवति । जामदग्नः, पाराशरः ।

[गर्ग-वत्साऽज-व्याघ्रपात्-संस्कृति-प्राचीनयोग-पुलस्ति-रेभ-शठ-शङ्खाऽग्नि-वेशेभ्यो यञ् । धूमाऽवट-चमस-नमस-धनञ्जय-वृक्ष-विश्वावसु-जरमाण-कुरुकताऽन-डुद्भ्यः । लोहित-संशित-बभ्रु-वल्गु-मण्डु-मङ्क्षु-शङ्कु-लिगु-जिगीषु-गुहलु-मन्तु-

[1] प्राचीन । योग ।—MS.

[2] कुरुकतानडुहौ तु लोहितात् प्राक् पठितव्यौ । न ह्यनयोर्लोहितादि-कार्यमिष्यते सति शकलादिकार्यम् । २।३।२० वृत्ति. ।

[3] शभ्लु—MS. [4] गुहालु—MS. [5] भक्ष—MS.

[6] विरोहित—Kāś [7] मन्त्र—MS. [8] स्थूण—Kāś., स्थूरा—SK.

[9] वितित्स—MS., but तितिक्ष occurs in Durgaṭīkā.

[10] गुलाभिन्—Durgaṭīkā, अलाभिन्—Bhoja, He., Vardha. and others [11] ऋक्थ is not found in the Ga[illegible] of [illegible]

तन्तुभ्यः। मनु-मनायी-सूनु-स्नु-कर्पक-कथकाऽक्ष-तरुक्ष-तलुक्ष-तण्ड-वतण्ड-कपि[1]-कतेभ्यः। शकल-कण्व-गोकक्षाऽगस्त्य-कुण्डिनी-यज्ञवल्क-वर्णवल्काऽभयजात-विरोहित-वृषगण-रहूगण-शण्डिल-मुद्गलेभ्यः। मुमलोलूक-जतुकर्ण-मन्त्रिताऽश्मरथ-शर्कराक्ष-पूतिमाष-स्थूराऽरगत-पिङ्गल-कृष्ण-गोलन्देभ्यः। भिषक्-तितिक्षा-भडित-भण्डित-चिकितेन्द्रहू-देवहू-पिप्पलवेकलू-बृहदग्नि-जमदग्नि-पराशरेभ्यः। दलभ-कुलट-कुटीगु-र्वणक-चुलुकोज-कर्कटालापिन्-सवर्ण-सुवर्ण-सुलाभिद्-विदहृदादिभ्यः। वाजाद-समासे। स० ४।१।४५-५३]

**मधोर्ब्राह्मणे** ॥२५॥ [स० ४।१।५४]

मधुशब्दाद् ब्राह्मणेऽपत्ये यञ् भवति। माधव्यो ब्राह्मणः। माधवोऽन्यः।

[मधुबभ्रवोर्ब्राह्मणकौशिकयोः। पा० ४।१।१०६]

**बभ्रोः कौशिके** ॥२६॥ [स० ४।१।५५]

बभ्रोर्गर्गादिपाठाद् यो यञ् स कौशिक एव भवति। बाभ्रव्यः। अन्यत्र बाभ्रवः। गर्गादिषु तु पाठः स्त्रियां ष्फार्थः। बाभ्रव्यायणी।

**कपेराङ्गिरसे** ॥२७॥ [स० ४।१।५६]

गर्गादिपाठात् कपेर्यो यञ् स आङ्गिरस एव भवति। काप्यः। अन्यत्र कापेयः। गर्गादिपाठात् काप्यायनी।

[कपिबोधादाङ्गिरसे। पा० ४।१।१०७]

**बोधात्** ॥२८॥ [स० ४।१।५७]

बोधादाङ्गिरसेऽपत्ये यञ् भवति। बौध्यः। बौधिरन्यः।

**वतण्डात्** ॥२९॥ [स० ४।१।५८]

वतण्डादाङ्गिरसेऽपत्ये यञेव भवति। वातण्ड्यः। अनाङ्गिरसे तु [२४, ४१] गर्गादिशिवादिपाठाद् वातण्ड्यः, वातण्डः।

[वतण्डाच्च। पा० ४।१।१०८]

**स्त्रियां लुक्** ॥३०॥ [स० ४।१।५९]

वतण्डशब्दादपत्ये स्त्रियामाङ्गिरस्यां यञो लुग् भवति। वतण्डी। अनाङ्गिरस्या तु वातण्डी, वातण्ड्यायनी।

[लुक् स्त्रियाम्। पा० ४।१।१०९]

---

[1] Both Triv. and Madras read कवि for कपि

**अश्वादिभ्यः फञ् ॥३१॥** [पा० ४।१।११०]

अश्व इत्येवमादिभ्य पौत्रादावपत्ये फञ् भवति । आश्वायनः । आश्मायनः ॥ अश्व । अश्मन् । शङ्ख । विद । पुट । रोहिण । खर्जूर । पिञ्जल । भडिल । भण्डिल[1] । भडित[1] । भण्डित[1] । प्रहृत[2] । रामोद । क्षात्र[3] । ग्रीवा । आकाश[4] । काण[5] । गोलाङ्क । अर्कस्वन[6] । वन[7] । पाद । चक्र । कुल[8] । तुल । श्रविष्ठा । पवित्रा[9] । पविन्दा[9] । गोमिन् । श्याम । धूम[10] । वाग्मिन् । विश्वानर । कुटावेश[11] । आत्रेय । जड । वट । ग्रीष्म । अर्ह । वीक्ष[12] । विशम्प । विशाल[13] । गिरि । चपल । दासक । वैल्य । धर्म्य[14] । आनडुह्य । जातात् पुंसि । शपादात्रेये । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । आत्रेयाद् भारद्वाजे । भरद्वाजादात्रेये । उत्स । अनाय[15] । अतव[16] । कितव । शिव । खदिर ।

[अश्वाऽश्म-शङ्ख-पुट-कुट-रोहिण-खर्जूर-पिण्डूर-भडिल-भण्डिल-भडित-भण्डितेभ्यः फञ् । प्रहृत-रामोद-क्षान्त-काल-काश-कुल-गोबाह्वार्क-स्वन-ध्वन-पाद-चक्रेभ्यः । ग्रीवा-श्रविष्ठा-पवित्राऽपविन्दा-गोमिन्-वाग्मिन्-श्याम-धूम-धूम्र-वस्त-विश्वानर-विदेभ्यः । जड-खडाऽर्ह-ग्रीष्म-वीक्ष-विशम्प-विशाल-गिरि-चपल-नमदासकाऽनडुह्येभ्यः । धन्य-धर्मार्जुन-वैल्योत्साऽतव-कितव-शूद्रक-खदिर-सुमनो-दुर्मनोभ्य. । जातात् पुंसि । शपभरद्वाजाभ्यामात्रेये । आत्रेयाद् भारद्वाजे । स० ४।१।६०-६७]

---

1 भण्डिल, भडित and भण्डित are not found in MSS, but have been supplied by Liebich. See ii 4.110 Vr.

2 प्रहृत्—MS.

3 Contamination of क्षत्र and क्षान्त.

4 काश–MS., Kāś., D., SK, Jumara GM. has आकाश इति चन्द्रः.

5 काल–MS

6 अर्क । स्वन । Kāś

7 ध्वन—Kāś'.

8 कुला—MS.

9 Kās' has पवित्र only

10 Kāś. has both धूम and धूम्र.

11 कूटश—MS.

12 वीक्ष्य—Kās'

13 विशाला–Kās'.

14 धार्म्य—MS.

15 अनाय does not occur in the other Gaṇapāṭhas.

16 आतव—Kās'.

**भर्गात् त्रैगर्ते** ॥३२॥ [पा० ४।१।१११]

भर्गात् पौत्रादावपत्ये त्रैगर्ते फञ् भवति। भार्गायणः। त्रैगर्ते इति किम्? भार्गः।

**कुञ्जादिभ्यः फ्यञ्** ॥३३॥

कुञ्जादिभ्यः पौत्रादावपत्ये फ्यञ् भवति। कौञ्जायन्यः, कौञ्जायन्यौ। ब्राध्नायन्यः, ब्राध्नायन्यौ। पौत्रादावित्येव। कौञ्जिः॥ कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक[1]। शुण्डा। शुभ्रा। विपाश। स्कन्द। स्कम्भ।

[गोत्रे कुञ्जादिभ्यश्च्फञ्। पा० ४।१।९८। कुञ्ज-बृध्न-शङ्ख-भस्म-गण-लोम-शट-शाक-शुण्डा-शुभ-स्कन्द-स्कम्भ-विशाभ्यः (विपाशेभ्यः?)फ्यञ्। स० ४।१।६९]

**स्त्रीबहुषु फक्** ॥३४॥ [स० ४।१।७०]

स्त्रियां बहुषु चापत्येषु कुञ्जादिभ्यः फग् भवति। कुञ्जायना स्त्री। बहुषु। कौञ्जायना। पौत्रादावित्येव। कौञ्जी; कौञ्जयः।

[व्रातच्फञोरस्त्रियाम्। पा० ५।३।११३ इह केचिद् द्वैरूप्ययोः फ्यञं विदधति बहुषु च फकम्, केचित् च्फञ्ञ्यात्रञाम्।..द्वैरूप्ययोरपि फ्यञि सति बहुषु च फकि न दोषो भवति। भाष्यम् ४।१।९८]

**नडादिभ्यः** ॥३५॥

नड इत्येवमादिभ्यः पौत्रादावपत्ये फग् भवति। नाडायनः। चारायणः। पौत्रादावित्येव। नाडिः। गोत्रादिभ्य इत्येव। नडो नाम कश्चित्, तस्यापत्यं नाडिः॥ नड। चर। बक। मुञ्ज। इतिक। इतिश[2]। उपक। लमक। शलङ्कु शलङ्क च; पैलादिषु [१२१] शालङ्कि-शब्दपाठाद् इञपि भवति। सप्तल। वाजप्य[3]। तिक[4]। अग्निशर्मन्। वृषगण। प्राण। नर। सायक। दासमित्र। द्वीप। पिङ्गर। पिङ्गल। किङ्कर। किङ्कल। कातर। काथल। काश्य। काश्यप। नाव्य। अज। अमुष्य। कृष्णरणौ ब्राह्मणवासिष्ठे। अमित्र। लिगु

---

1 काश—MS. 2 इषिक—MS. 3 वाजल—MS.

4 ब्यतिक—MS., but SK., Durgaṭīkā etc. have तिक.

चित्र। कुमार। क्रोष्टु क्रोष्टं च। लोह। दुर्ग। स्तम्ब। शिंशपा। अग्र। तृण। शकट। सुमनस्। दुर्मनस्। [सुमत]। मिमत। जालन्धर। युगन्धर। हसक[1]। दण्डिन्। हस्तिन्। पञ्चाल। चमसिन्। सुकृत्य। स्थिरक। ब्राह्मण। अश्वल। चटक। वदर। अध्वर[2]। खरप। कामुक। ब्रह्मदत्त। उदुम्बर। शोण। अलोह[3]। दण्डप। लोहित।

[नडादिभ्यः फक्। पा० ४।१।९९ नड-चर-बक-मुञ्जेतिकेतिशोपक-लमक-सप्तल-वाजप्य-तिकाऽग्निशर्मभ्यः। वृषगण-प्राण-नर-सायक-दासक-मित्र-पिङ्गर-पिङ्गल-किङ्कर-किङ्कल-कातर-कातलेभ्यः। द्वीपाऽज-काश्य-काश्यप-काव्यामुष्याऽमित्र-चित्र-लिङ्ग-कुमार-लोह-दुर्गेभ्यः। स्तम्बाऽग्र-शिंशपा-तृण-शकट-सुमत-मिमतछं-जगन्धर-युगन्धर-हंसक-पञ्चालेभ्यः। दण्डिन्-हस्तिन्-चमसिन्-सुगत्य-स्थिरक-ब्राह्मणाऽश्वल-चटक-बदराऽध्वर-खरप-कामुकेभ्यः। बृह्मदत्तोदुम्बर-शण-शोणाश्व-वालिश-भण्डपेभ्यश्च। कृष्णरणाभ्यां ब्राह्मणवासिष्ठयो.। शलङ्कु कोष्ट्रोर्लो पश्च। स० ४।१।७१-७८]

हरितादिभ्योऽञः ॥३६॥ [पा० ४।१।१००, स० ४।१।७९]

हरितादिभ्यो विदादिपाठादञन्तेभ्योऽपत्ये फग् भवति। हारितायनः, कैन्दासायनः।

यञिञः ॥३७॥

पौत्रादावपत्ये यौ यञिञौ तदन्तादपत्ये फग् भवति। गार्ग्यायणः, दाक्षायणः।

[यञिञोश्च। पा० ४।१।१०१, यञिञ्भ्याम्। स० ४।१।८०]

शरद्वच्छुनकदर्भाद् भार्गववात्स्याग्रायणेषु ॥३८॥ [०दर्भेभ्यो०। स० ८।१।८१]

शरद्वदादिभ्यो भार्गवादिषु पौत्रादावपत्ये फग् भवति। शारद्वतायनो भवति, भार्गवश्चेत्; शारद्वतोऽन्यः। शौनकायनो भवति,

[1] उगसर—MS. [2] अपर—MS. [3] अमाह—MS.

वात्स्यश्चेत् ; शौनकोऽन्यः । [२२] विदादित्वादञ् । दार्भायणो भवति, आग्रायणश्चेत् ; दार्भिरन्यः । पौत्रादावित्येव । शारद्वतः ।

[शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु । पा० ४।१।१०२]

**पर्वतजीवन्ताद्वा ॥३९॥**

पर्वतजीवन्ताभ्यां पौत्रादावपत्ये फग् वा भवति । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । पौत्रादावित्येव । पार्वतिः ।

[द्रोणपर्वतजीवन्तादन्यतरस्याम् । पा० ४।१।१०३, जीवन्तपर्वताभ्यां वा । स० ४।१।८२]

**द्रोणात् ॥४०॥** [स० ४।१।८३]

द्रोणादपत्यमात्रे फग् वा भवति । द्रौणायनः, द्रौणिः । योगविभागात् पौत्रादाविति निवृत्तम् ।

**शिवादिभ्योऽण् ॥४१॥** [पा० ४।१।११२]

शिव इत्येवमादिभ्योऽपत्यमात्रेऽण् भवति । शैवः, प्रौष्ठः । बाधकबाधनार्थः पुनरारम्भः । आर्ष्टिषेणः । ण्यो न भवति । गङ्गाशब्दादिह पाठादण्—गाङ्गः; [५३] शुभ्रादिपाठाड् ढक्—गाङ्गेयः, [८६] तिकादिपाठात् फिञ्—गाङ्गायनिः । विपाशशब्दादिह पाठादण्—वैपाशः ; [३३] कुञ्जादिपाठात् फ्यञ्—वैपाशायन्यः ॥ शिव । प्रोष्ठ । प्रौष्ठिक[1] । चण्ड । जम्भ । भूरि । कुठार । अनभिम्लान[2] । सन्धि । मुनि । ककुत्स्थ[3] । कोहड[4] । ककुभ[5] । रोध । पिरल[6] । वतण्ड । तृण । कर्ण । क्षीरह्रद । जलह्रद[7] । परिपिक । गोपिका[8] । कपिलिका । जटिलिका । वधिरिका[9] । मञ्जरीक[10] । वृष्णिक । खञ्जार । खञ्जाल । रेख ।

---

1 MS., Jumara (iv. 200), SK.

2 अलिग्लान–MS., अनभिम्लान–many schools.

3 ककुस्थ–MS. 4 कोहल–MS. Should we read ककुभा ?

6 Should we read पीवर after Jumara ? 7 जालह्रद–MS.

8 गोपिक–MS. 9 वटिरिका–MS. 10 अमञ्जरीक–MS.

लेख। सुलेख[1]। विश्रवण। रवण। वर्तनाक्ष[2]। पिटक। पिटाक। वृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्कारु। उत्काय[4]। पुरोहितिका। आर्यश्वेता। सुपिष्ट। पिष्ट। मयूरकर्ण। खदूरक। तक्षन्। ऋष्टिषेण। गङ्गा। विपाश। यस्क। द्रुह्य। लह्य। अयस्थूण। तृणकर्ण। कलन्दन। विरूपाक्ष। भूमि। इला। सपत्नी। द्व्यचो नद्याम्। त्रिवेणी त्रिवणं च।

[ शिव-प्रोष्ठ-प्रोष्ठिक-चण्ड-जम्भ-कुठाराऽनभिम्लान-कहूयोरल-विरल-पिपुग-सुपिपुगेभ्योऽण्। पिटक-पीटाक-मृक्षाक-वर्तनाक्ष-विरूपाक्ष-खदूरक-रेख-लेख[3]-सुखलेखन-खञ्जन-खञ्जेर-मञ्जमिकेभ्यः। पर्ण-कर्ण-कोहुड-कहोड--ककुभोर्णनाभ-नभाग-हेहय-ककुरस्य-वृष्णिक-क्षीरह्लद-जलह्लदेभ्यः। यस्क-लह्य-द्रुह्याऽयःस्थूण-तृणकर्ण-भलन्दन-कुरु-पाण्डु-वतण्डर्ष्टिषेण-तृण-तक्षभ्यः। गोपिका-गोपालिका-कपिलिका-जगिलिका-बधिरिका-रोहितिकाऽर्यश्वेतोत्क्षिपा-वर्षिका-पृथेला-सपत्नीभ्यः। भूमि-भूरि-मुनि-सन्धि-जरत्कारूत्कारु-हस्तिपाद-कपिञ्जल-कुण्डोपरथ- बृह्मगुप्त-खर्जूरकर्ण-मयूरकर्णेभ्यः। नश्च विश्रवसो विश्लोपश्च वा। द्व्यचो नद्याः। विपाश-गङ्गाभ्याम्। त्रिवेण्यास्त्रिवणं च। स० ४।१।८४-९३]

नदीमानुपीनाम्नोऽनादैजाद्यचः ॥४२॥

नदीनाम्नो मानुपीनाम्नश्च शब्दादपत्येऽण् भवति, न चेदस्या-दैचोऽचामादिभूता भवन्ति। यामुनः, चैन्तितः। नदीमानुपीग्रहणं किम्? सौपर्णेयः। नामग्रहणं किम्? शोभनिकायाः[5], शौभनिकेयः। अनादैजाद्यच इति किम्? वासवदत्तायाः[5], वासवदत्तेयः।

[अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः। पा० ४।१।११३, (द्व्यचो नद्याः।) मानुष्याश्चावृद्धनाम्नः। स० ४।१।९४ ]

क्रुञ्चाकोकिलाभ्याम् ॥४३॥ [ स० ४।१।९५ ]

एताभ्यामपत्येऽण् भवति। क्रौञ्चः, कौकिलः।

---

[1] स्वलेख—MS. [2] वर्तनत—MS.

[3] Printed editions have सुखलेखन, but Vardhamāna shows that the correct reading is सुलेखन. [4] Should we read उत्क्षिपा?

[5] One expected शोभनिकाया अपत्यम् and वासवदत्ताया अपत्यम्.

[ अण् कुञ्चाकोकिलात् स्मृतः । पा० ४।१।१२० श्लोकवार्त्तिकम् ]

**ऋषिकुरुवृष्ण्यन्धकात्** ॥४४॥ [ ० केभ्यः । स० ४।१।९६ ]

ऋष्यादिवृत्तिभ्योऽपत्येऽण् भवति। वासिष्ठः, नाकुलः, वासुदेवः, श्वाफल्कः।

[ ऋष्यन्धकवृष्णिकुरुभ्यश्च । पा० ४।१।११४ ]

**मातुरुत् संख्यासंभद्रादेः** ॥४५॥

मातृशब्दस्य संख्यादिपूर्वस्यापत्येऽण् भवति, उकारश्चान्तादेशः। द्वैमातुरः; सांमातुरः, भाद्रमातुरः। संख्यासंभद्रादेरिति किम्? विमातुरपत्यं वैमात्रेयः।

[ मातुरुत्संख्यासंभद्रपूर्वायाः । पा० ४।१।११५, स० ४।१।९७ ]

**कन्यायाः कनीन च** ॥४६॥ [ पा० ४।१।११६, स० ४।१।९८ ]

कन्याया अपत्येऽण् भवति, कनीनादेशश्च। कानीनः, कर्णः।

**शुङ्गच्छगलविकर्णाद्वि भारद्वाजवात्स्यात्रेयेषु** ॥४७॥

शुङ्गादिभ्यो भारद्वाजादिष्वपत्येष्वण् भवति। शौङ्गो भवति भारद्वाजश्चेत्। शौङ्गिरन्यः। नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाच्छुङ्गाया अपत्यं शौङ्गः। छागलो भवति वात्स्यश्चेत्; छागलिरन्यः। वैकर्णो भवत्यात्रेयश्चेत्; वैकर्णिरन्यः।

[ विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु । पा० ४।१।११७, शुङ्गच्छगलविकर्णेभ्यो भारद्वाजात्रेयवात्स्येषु । स० ४।१।९९ ]

**पीलामण्डूकाद्वा** ॥४८॥

पीलामण्डूकाभ्यामपत्येऽण् वा भवति। पैलः, पैलेयः। माण्डूकः, माण्डूकिः।

[ पीलाया वा । ढक् च मण्डूकात् । पा० ४।१।११८-११९, शाल्वापीलाभ्यां वा। मण्डूकाड् ढक् च। स० ४।१।१००-१०१]

**ढक्** ॥४९॥

मण्डूकादपत्ये ढग् वा भवति। माण्डूकेयः, माण्डूकः, माण्डूकिः[1]

**स्त्र्याप्त्यूङः** ॥५०॥

---

[1] माण्डूकेयो–MS.

ङ्यन्तादाबन्तात् त्यन्तादूङन्ताच्चापत्ये ढग् भवति। सौपर्णेयः, वैनतेयः, पार्वतेयः, कामण्डलेयः। एतेभ्य इति किम्? दरदोऽपत्यं दारदः।

[स्त्रीभ्यो ढक्। पा० ४।१।१२०, ङ्याबूङः। स० ४।१।१०२]

**द्व्यचः** ॥५१॥ [पा० ४।१।१२१, स० ४।१।१०३]

ङ्याद्यन्ताद् द्व्यचाऽपत्ये ढग् भवति। दात्तेयः।

**इतोऽनिञः** ॥५२॥ [स० ४।१।१०४]

इदन्तादनिञोऽपत्ये ढग् भवति। आत्रेयः, वार्ष्णेयः। अनिञ इति किम्? दाक्षायणः। द्व्यच इत्येव। मारीचः।

[इतश्चानिञः। पा० ४।१।१२२]

**शुभ्रादिभ्यः** ॥५३॥ [शुभ्रादिभ्यश्च। पा० ४।१।१२३]

शुभ्र इत्येवमादिभ्योऽपत्ये ढग् भवति। शौभ्रेयः, वैष्टपुरेयः॥ शुभ्र। विष्टपुर। ब्रह्मकृत[1]। शरद्वार[2]। शलाथल। शलाकाभ्रू। लेखाभ्रू। विधवा। [कृकसा।] रोहिणी। रुक्मिणी। दिश्। धर्मिणी[3]। शालूक। अजबस्ति। शकन्धि[4]। लक्ष्मणश्यामयोर्वासिष्ठे। गोधा। कृकलास। अतिथि। प्रवाहण। भारत। भारम[5]। कमण्टु[6]। यमण्टु[6]। मृकण्डु। कर्पूर। [मृदु।] इतर। अन्यतर। देवतर। आलीढ। सुदन्त। सुदक्ष। सुदामन्। कद्रु। गुद[7]। अकशाय। कुमारिका। किशोरिका। जिह्माशिन्। परिधि। वीरदत्त। वायुदत्त[8]। शबल[9]। सदूरक। अम्बिका। अशोका। गन्धपिङ्गला। खडोन्मत्ता[10]। कुदन्ता। कुशम्ब। अनुसृष्टि[11]। जरतिन्। शुक। शुक्र। उग्र। वीज। श्वन्। अश्व। अजिर। अहि। आकृतिगणोऽयम्। गाङ्गयः, वैमात्रेय।

---

[1] ब्रह्मकृत्—MS. [2] शतद्वार—Kās'. [3] धर्मिणी—MS.
[4] शरन्धि—MS [5] भ्रामर—MS [6] मघष्टु। मकष्टु। Kās'.
[7] गुद—Kās', Durga. [8] यामुदत्त—Durga, सुदत्त—Kās'.
[9] शकल—Durga. [10] खटोन्मत्ता—MS.
[11] अनुपसृष्ट—MS., अनुदृष्टि—Kās'., अनुदृष्टिन्—Durga.

[शुभ्र-विष्टपुर-ब्रह्मकृत-शरद्वत-शलाम्यलाऽणीव-प्रवाहण-भरत-भरम-कर्पूरेतरा-ऽन्यतराऽऽजिराऽऽश्वतुद-गोदन्तेभ्यः। कुशाम्ब-विप्र-विश-शालूक-देवतराऽऽलीढ-सुदत्त-सुदक्ष-वायुदत्ताऽकशाप-शकल-खद्वूरक-शुक-शुक्रोपजीवेभ्यः। कद्रु-पाण्डु-मृकण्डु-यमष्टु-मकष्टु-कर्पू-लेखाभ्रू-शलाकाभ्रू-शकुनि-शाकन्ध्यानिधि-परिधि-विश्वातिय्यनुदृष्टत्र-जवस्तिभ्यः। गङ्गा-गोधा-विधवा-शलाका-कुमारिका-किशोरिका-कुबेरिकाऽम्बिकाऽशोका-कृकसा-कृकलासा-खडोन्मत्ता--गन्धपिङ्गला-धर्मिणी--रुक्मिणी-रोहिणीभ्यः। श्वन्नश्मन्-सुनामन्-सुदामन्-जरतिन्-बलीवर्दिन्-जिह्माशिन्-दिक्-सुवक्षो-विमातृ-मृन्-मुद्रादिभ्यः। लक्षण-श्यामयोर्वासिष्ठे। वडवाया वृषे। स० ४।१।१०५-१११]

**विकर्णकुषीतकात् काश्यपे** ॥५४॥ [पा० ४।१।१२४, स० ४।१।११२]

*विकर्णात् कुषीतकाच्च काश्यपेऽपत्ये ढग् भवति।* वैकर्णेयः, कौषीतकेयः। काश्यप इति किम्? वैकर्णिः, कौषीतकिः।

**भ्रौवेयः** ॥५५॥

*भ्रूशब्दादपत्ये ढकि वकारो निपात्यते।*

[भ्रुवो वुक् च। पा० ४।१।१२५, स० ४।१।११३]

**कल्याण्यादीनामिनङ्** ॥५६॥ [० च। पा० ४।१।१२६]

कल्याण्यादीनामपत्ये ढग् भवति, इनङादेशश्च। काल्याणिनेयः, सौभागिनेयः॥ कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुसृष्टि। जरती। बलीवर्दा। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री।

[कल्याणी-सुभगा-दुर्भगा-बन्धकी-जरती-बलीवर्दी-ज्येष्ठा-कनिष्ठा-मध्यमा-परस्त्र्य-नुसृष्ट्यनुदृष्टीनामिनङ् च। स० ४।१।११४]

**कुलटाया वा** ॥५७॥ [पा० ४।१।१२७, स० ४।१।११५]

*कुलटाया इनङादेशो वा भवति, ढक् तु पूर्वेणैव सिद्धम्।* कौलटिनेयः, कौलटेयः।

**चटकादैरक्** ॥५८॥ [स० ४।१।११६]

चटकादपत्य ऐरग् भवति। चाटकैरः। लिङ्गविशिष्टस्यापि ग्रहणाच्चटकाया अपत्यं चाटकैरः।

[चटकाया ऐरक्। पा० ४।१।१२८। चटकायाः पुंलिङ्गनिर्देशः। वा०]

**लुक् स्त्रियाम्** ॥५९॥ [स० ४।१।११७]

चटकादैरकः स्त्रियां लुग् भवति।[1] चटका। ऐरकः श्रवणं मा भूदिति। जातिवचनस्तु चटकाशब्दोऽस्त्येव।

[स्त्रियामपत्ये लुक्। पा० ४।१।१२८।२]

**जाण्डपाण्डादारक्** ॥६०॥ [स० ४।१।११८]

एताभ्यामपत्ये आरग् भवति। जाण्डारः, पाण्डारः।

[आरगुदीचाम्। पा० ४।१।१३०। आरग्वचनमनर्थकम्। किं कारणम्? रका सिद्धत्वात्। गोधाकारान्ता, रक् प्रत्ययः। एवं तर्हि सिद्धे सति यदारकं शास्ति तज् ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति।..मौण्डारः जाण्डारः पाण्डार इत्येतत् सिद्धं भवतीति। भाष्यम्]

**गोधायाः** ॥६१॥

गोधाया अपत्ये आरग् भवति। गौधारः।

[आरगुदीचाम्। पा० ४।१।१३०]

**एरक्** ॥६२॥

गोधाया अपत्ये एरग् भवति। गौधेरः।

[गोधाया ढ्रक्॥ पा० ४।१।१२९, गोधाया ढ्रक् च। स० ४।१।११९]

**क्षुद्राभ्यो वा** ॥६३॥ [पा० ४।१।१३१]

क्षुद्राभ्योऽपत्ये एरग् भवति वा। काणेरः, काणेयः। दासेरः, दासेयः। क्षुद्रा अङ्गहीना अनियतपुंस्का च।

[अनियतपुंस्काङ्गहीनाभ्यो वा। स० ४।१।१२०]

**भ्रातुर्व्यत्** ॥६४॥ [स० ४।१।१२१, ०व्यच्च। पा० ४।१।१४४]

भ्रातुरपत्ये व्यद् भवति। भ्रातृव्यः। सपत्ने तु भ्रातृव्यशब्दस्याद्युदात्तत्वं वक्ष्यति*।

---

[1] One expected here: चटकाया अपत्यं स्त्री चटका।

* The use of the third person shows that the Vṛttikāra is different from the Sūtrakāra. The first person, however, has been used under several previous rules.

छः ॥६५॥ [ छश्च । स० ४।१।१२३ ]

भ्रातुरपत्ये छो भवति। भ्रात्रीयः ।

[ भ्रातुर्व्यच्च । पा० ४।१।१४४ ]

स्वसुः ॥६६॥ [स० ४।१।१२४]

स्वसुरपत्ये छो भवति। स्वस्रीयः ।

[ स्वसुश्छः । पा० ४।१।१४३ ]

पितृमात्रादेश्छण् ॥६७॥ [ स० ४।१।१२५ ]

पितृशब्दादेर्मातृशब्दादेश्च स्वसुश्छण् भवति। पैतृष्वस्रीयः, मातृष्वस्रीयः ।

[ पितृष्वसुश्छण् । मातृष्वसुश्च । पा० ४।१।१३२, १३४ ]

ढकि लोपः ॥६८॥ [ पा० ४।१।१३३ ]

पितृमात्रादेः स्वसुर्ढकि लोपोऽन्त्यस्य भवति। ढक् पुनरस्मादेव लिङ्गात्। पैतृष्वसेयः, मातृष्वसेयः ।

[ ढग् लोपश्च । स० ४।१।१२६ ]

क्षत्राज्जातौ घः ॥६९॥ [ स० ४।१।१२७ ]

क्षत्रशब्दादपत्ये जातौ गम्यमानायां घो भवति। क्षत्रियः। जाताविति किम् ? क्षात्रिः ।

[ क्षत्राद् घः । पा० ४।१।१३८ अयमपि जातिशब्द एव । काशिका ]

राज्ञो यत् ॥७०॥ [ स० ४।१।१२८]

राज्ञोऽपत्ये जातावभिधेयायां यद् भवति। राजन्यः। जाताविस्येव। राजनः ।

[ राजश्वशुराद् यत् । पा० ४।१।१३७, राज्ञोऽपत्ये जातिग्रहणम् । वा० १]

श्वशुरात् ॥७१॥ [ स० ४।१।१२९ ]

श्वशुरादपत्ये यद् भवति। श्वशुर्यः। गोत्रादिभ्य इत्येव। श्वाशुरिः ।

कुलाड्ढकञ् च ॥७२॥ [ स० ४।१।१३० ]

कुलादपत्ये ढकञ् भवति, यञ्च। कौलेयकः, कुल्यः ।

[कुलात् खः। अपूर्वपदादन्यतरस्यां यड्ढकञौ। पा० ४।१।१३९-१४०]

**खः पदान्ताच्च ॥७३॥**

पदान्तात् केवलाच्च कुलशब्दादपत्ये खो भवति। आढ्यकुलीनः, कुलीनः।

[कुलात् खः। ४।१।१३९। उत्तरसूत्रे पूर्वप्रतिषेधादिह तदन्तः केवलश्च दृश्यते। काशिका। खः सपूर्वाच्च। स० ४।१।१३१]

**दुरो ढग् वा ॥७४॥**

दुरः परात् कुलादपत्ये ढग् वा भवति। दौष्कुलेयः, दुष्कुलीनः।

[दुष्कुलाड् ढक्। पा० ४।१।१४२, दुष्कुलाड् ढग् वा। स० ४।१।१३२]

**महाकुलादञ्खञौ ॥७५॥** [पा० ४।१।१४१, स० ४।१।१३३]

महाकुलादपत्ये वाञ्खञौ भवतः। माहाकुलः, माहाकुलीनः, महाकुलीनः।

**चतुष्पाद्भ्यो ढञ् ॥७६॥** [पा० ४।१।१३५, स० ४।१।१३४]

चतुष्पाद्भ्योऽपत्ये ढञ् भवति। शावलेयः, वाहुलेयः।

**गृष्ट्यादिभ्यः ॥७७॥** [० भ्यश्च। पा० ४।१।१३६]

गृष्टि इत्येवमादिभ्योऽपत्ये ढञ् भवति। अचतुष्पादर्थं वचनम्। गार्ष्टेयः॥ गृष्टि। हृष्टि। हलि[1]। वालि[2]। विश्रि। कुद्रि। अजवस्ति। मित्रयु।

[गृष्टि-हृष्टि-हलि-वलि-विश्रि-कुद्र्यजवस्ति-मित्रयुभ्यः। स० ४।१।१३५]

**रेवत्यादिभ्यष्ठक् ॥ ७८॥** [पा० ४।१।१४६]

रेवती इत्येवमादिभ्योऽपत्ये ठग् भवति। रैवतिकः, आश्वपालिकः॥ रेवती। अश्वपाली। द्वारपाली। मणिपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष।

[रेवती-कुक्कुटाक्ष-वृकवञ्चि(ञ्चि?)भ्यष्ठक्। अश्वमणिद्वारेभ्यः पाल्याः। वृक-कर्ण-दण्डेभ्यो ग्राहात्। स० ४।१।१३६-१३८]

---

[1] हरि—MS.

[2] वलि—K&K.

**पौत्रादेः स्त्रियाः कुत्सिते ण च** ॥७९॥ [० णश्च । स० ४।१।१३९]

पौत्रादेः स्त्रिया अपत्ये कुत्सिते ठग् भवति, णश्च। गार्गिको जाल्मः, गार्गो जाल्मः। पौत्रादेरिति किम्? कारिकेयो जाल्मः। *स्त्रिया इति किम्? औपगविर्जाल्मः। कुत्सित इति किम्? गार्ग्यः।*

[ गोत्रस्त्रियाः कुत्सने ण च । पा० ४।१।१४७ ]

**सौवीरेषु वा** ॥८०॥

सौवीरेषु प्रसिद्धानां गोत्रादिभूतानां यदपत्यं पौत्रादि तस्यापत्ये कुत्सिते ठग् भवति वा। भागवित्तेरपत्यं भागवित्तिको जाल्मः, भागवित्तायनो वा। तार्णविन्दवस्यापत्यं तार्णबिन्दविकः, तार्णविन्दविर्वा। आकशायेयस्यापत्यम् आकशायेयिकः, आकशायेयिर्वा। सौवीरेष्विति किम्? औपगविर्जाल्मः। कुत्सित इत्येव। भागवित्तायनः।

[ वृद्धाट्ठक् सौवीरेषु बहुलम् । पा० ४।१।१४८, भागवित्त-तार्णबिन्दवाऽऽकशापेयेभ्यः सौवीरेषु ठग् वा । स० ४।१।१४० ]

**फेश्छ च** ॥८१॥ [ पा० ४।१।१४९ ]

सौवीरेषु प्रसिद्धात् पौत्रादेः फिञन्तादपत्ये कुत्सिते छो भवति, ठक् च। यामुन्दायनेरपत्यं यामुन्दायनीयः, यामुन्दायनिकः। सौयामायनेरपत्यं सौयामायनीयः, सौयामायनिकः। वार्ष्यायणेरपत्यं वार्ष्यायणीयः, वार्ष्यायणिकः। सौवीरेष्वित्येव। तैकायनिर्जाल्मः। ञिदार्षण्यादणिञोः [१२३] इति लुक्। कुत्सित इत्येव। यामुन्दायनिः।

[ यामुन्दायनि-सौयामायनि-वार्ष्यायणिभ्यश्छश्च । स० ४।१।१४१ ]

**फाण्टाहृतेर्ण फिञौ** ॥८२॥ [ स० ४।१।१४२ ]

फाण्टाहृतेः सौवीरविषयात् पौत्रादेरपत्ये णफिञौ भवतः। फाण्टाहृतः, फाण्टाहृतायनिः। सौवीरेष्वित्येव। फाण्टाहृतायनः।

[ फाण्टाहृतिमिमताभ्यां णफिञौ । पा० ४।१।१५० ]

**मिमतात्** ॥८३॥ [ स० ४।१।१४३ ]

मिमतादपत्ये णफिञौ भवतः। मैमतः, मैमतायनिः। सौवीरेष्वित्येव। मैमतायनः। नडादित्वात् [३५] फक्।

कुर्वादिभ्यो ण्यः ॥८४॥ [ पा० ४।१।१५१ ]

कुरु इत्येवमादिभ्योऽपत्ये ण्यो भवति । कौरव्यः, गार्ग्यः । अक्षत्रियार्थः कुरुशब्दपाठः । बहुषु कौरव्याः । [८६] तिकादिपाठात् फञ् । कौरव्यायणिः । रथकारो जात्यन्तरम् । कारुवचनात् [८५] तेनैव ण्यः । केशिनीशब्दस्य ङीबन्तनिर्देशान्न पुंवद्भावः । कैशिन्यः । तक्षन्शब्दस्यात्र पाठाण् ण्यः । ताक्षण्यः । पाठसामर्थ्याच्च [८५] कारुलक्षण इञ् न भवति । [४१] शिवादिपाठादण् । ताक्ष्णः । वामरथस्य शकलादिवदिति बहुषु लुक् । वामरथाः । शकलादिभ्यो गोत्रादिभ्यः * [३।२।२१] इत्यण् । वामरथ्यस्यच्छात्रा वामरथाः । सङ्घाङ्कघोपलक्षणेष्वञ्यञिञः [३।३।९८] इत्यण् । वामरथ्यस्याङ्को वामरथः ॥ कुरु । गर्गर । मङ्गूष । अजमार । रथकार । चफट्टक[1] । सम्राजः क्षत्रिये । कवि । मति । वाक् । पितृमत् । ऐन्द्रजालि । धातकि । दामोष्णीषि । कार्णकारि । कैशोरि । कापिञ्जलादि । कूट । शलाका । मुर[2] । एडका । शुभ्र । दभ । केशिनी । वेन[3] । शूर्पणाय । श्यावनाय । श्यावपुत्र । वैराजकि[4] । नितान्तवृक्ष । इन्द्रवृक्ष । आम्रवृक्ष । सत्यङ्कार । वडभीकार[5] । पथिकारिन् । मूढ । शाकम्भू । हनु । शङ्कु । इन । पिण्डी । तक्षन् । वामरथस्य शकलादिवत् ।

[कुरु-शकन्धु-शङ्कु-कर्तृ-भर्तृ-पितृमद्-वाक्-तक्षन्-कापिञ्जलादि-धातकीन्द्रजालिदामोष्णीषिभ्यो ण्यः । कवि-मति-पीला-शलाकै-रकेज्येहि-केशिनीभ्यः । शुभ्राऽभ्र-वभ्र-मुर-पुर-किशोर-गर्गराऽजमार-मद्गुष-चपयद्केन--येन-मूढ-कुड-हृविक-शालीनेभ्यः । कर्ण-रथ-पथि-सत्यं-वडभी-युहनीभ्यः कारात् । यान्ताद्रांभ्यां वृक्षात् । श्यावात् पुत्ररथाभ्याम् । शूर्पाच्च नायात् । विराजकादिञः । सम्राजः क्षत्रिये । वामरथाच्छकलादिवच्च्यत् स्वरवर्जम् । स० ४।१।१४४-१५३ ]

सेनान्तकारुलक्षणादिञ् च ॥८५॥ [० णेभ्य इ ० । स० ४।१।१५४]

* The rule is read as शकलादिभ्यो गोत्रात्.

[1] चफट्टक—MS. [2] पुर—MS [3] पेनु—MS.

[4] वैराजवि—MS. [5] वटहिङ्कार—MS. [6] दम—MS.

सेनान्तात् कारुभ्यो लक्षणाच्चापत्य इञ् भवति, ण्यश्च। हारिषेणिः, हारिषेण्यः। तान्त्रवायिः, तान्त्रवाय्यः। लाक्षणिः, लाक्षण्यः। ऋषिकुरुवृष्ण्यन्धकेभ्योऽपि सेनान्तेभ्य एतौ भवतः। जातसेनिः, जातसेन्यः। भैमसेनिः, भैमसेन्यः। वैष्वक्सेनिः,वैष्वक्सेन्यः। औग्रसेनिः, औग्रसेन्यः।

[सेनान्तलक्षणकारिभ्यश्च। उदीचामिञ्। पा० ४।१।१५२-१५३]

**तिकादिभ्यः फिञ्** ॥८६॥ [पा० ४।१।१५४]

तिक इत्येवमादिभ्योऽपत्ये फिञ् भवति। तैकायनिः, कैतवायनिः। कौरव्यशब्द औरसशब्दसाहचर्यात् क्षत्रियवचनः, कुर्वादिण्यान्तात् त्विञा भवितव्यम्॥ तिक। कितव। संज्ञा। वाल। उखा। उरस। शाट्य। सैन्धव। यमुन्द। रूप्य। तैल[1]। नील। अमित्र। कुरु। देवरथ। तैतिल। औरस। कौरव्य। भौरिकि। भौलिकि। चौपयत। चैटयत। शैकयत। क्षैजयत। चन्द्रमस्। शुभ। गङ्गा। वरेण्य। वसु। आरथ्य। वह्यका। खल्यका। लोमका। सुयामन्। उदन्य। यज्ञ।

[तिक-कितव-सैन्धव-शुभाऽमित्र-देवरथ-नीड-यज्ञ-यमुन्दोरसाऽरथ्य-लङ्कवेभ्यः फिञ्। वाल-भीत-ग्राम्य-रूप्य-वरेण्योतथ्योदन्योरश्चन्द्रमः- सुयामन्-सुपामन्-ध्वजवद्भ्यः। तैतिल-जाजल-क्षैजयत-सैकयत-चौपयत-चैटयतौरस-कौरव्य-गौकक्ष-शाट्य-भौरिकि-भौलिकेभ्यः। गङ्गा-संज्ञोखा-शिखा-वह्यका-खल्यका-शल्यका-लोमका-वसु-कुरुभ्य। स० ४।१।१५५-१५८]

**दगुकोशलकर्मारच्छागवृषाद्युट् च** ॥८७॥ [० वृषेभ्यो०। स० ४।१।१५९]

दगुप्रभृतिभ्योऽपत्ये फिञ् भवति, यट् चागमः। दागव्यायनिः, कौशल्यायनिः, कार्मार्यायणिः, छाग्यायनिः, वार्ष्यायणिः।

[फिञ्-प्रकरणे दगु-कोसल-कर्मार-च्छाग-वृषाणां युट् च। पा० ४।१।१५५।१]

---

[1] कम—MS.

[2] ग्राम्य—others.

**द्व्यचोऽणः ॥८८॥** [स० ४।१।१६० ]

अणन्ताद् द्व्यचोऽपत्ये फिञ् भवति। हौत्रायणिः, यास्कायनिः। द्व्यच इति किम् ? औपगविः। अण इति किम् ? दाक्षायणः।

[ अणो द्व्यचः। पा० ४।१।१५६ ]

**त्यदादिभ्यो वा ॥८९॥** [ स० ४।१।१६१ ]

त्यद् इत्येवमादिभ्योऽपत्ये फिञ् वा भवति। त्यादायनिः, यादायनिः। त्यादः, यादः।

[ त्यदादीनां वा फिञ् वक्तव्यः। काशिका ४।१।१५६ ]

**अगोत्रादादैजाद्यचः ॥९०॥**

आदैच आदयो यस्याचस्तस्मादगोत्रादपत्ये फिञ् वा भवति। शालगुप्तायनिः, शालगुप्तिः। कारुवचनादपि परत्वादनेन फिञ्। नापितायनिः। अगोत्रादिति किम् ? औपगविः। आदैजाद्यच इति किम् ? दैवदत्तिः।

[ उदीचां वृद्धादगोत्रात्। पा० ४।१।१५७, वृद्धादगोत्रात्। स० ४।१।१६२ ]

**वाकिनादीनां कुक् च ॥९१॥** [ पा० ४।१।१५८ ]

वाकिन इत्येवमादीनामपत्ये फिञ् वा भवति, कुक् चागमः। वाकिनकायनिः, वाकिनिः। गारेटकायनिः, गारेटिः॥ वाकिन। गारेट[1]। कार्कट्य। काक। लङ्का। चर्मिं। वर्मिं।

[वाकिन-गारेध-कार्कट्य-काक-लङ्का-चर्मिं-वर्मिंभ्यः कुक्* च। स० ४।१।१६३]

**पुत्रान्ताद्वा ॥९२॥** [ स० ४।१।१६४ ]

पुत्रान्तादगोत्रादादैजाद्यचोऽपत्ये फिञ् वा भवति, फिञि च कुगागमो वा। गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिः।

[ पुत्रान्तादन्यतरस्याम्। पा० ४।१।१५९ ]

---

[1] गारेट—MS.

* Most MSS. have कुट् for कुक्.

**फिन् बहुलम् ॥९३॥**

अगोत्रादपत्ये फिन् बहुलं भवति। ग्लुचुकायनिः, ग्लौचुकिः। बहुलमिति किम्? दाक्षिः, दैवदत्तिः, राजदत्तिः। अगोत्रादित्येव। औपगविः।

[ प्राचामवृद्धात् फिन् बहुलम्। पा० ४।१।१६०, अवृद्धात् फिन् बहुलम्। स० ४।१।१६५ ]

**मनोर्जातौ यत् षुक् च ॥९४॥**

मनुशब्दाज्जातावभिधेयायामपत्ये यद् भवति, षुक् चागमः। मनुष्यः। जाताविति किम्? मानवः।

[ मनोर्जातावञ्यतौ षुक् च। पा० ४।१।१६१, जातौ यत् षुक् च स० ४।१।१६८ ]

**अञ् ॥९५॥** [ स० ४।१।१६९ ]

मनुशब्दादपत्ये अञ् भवति, षुक् च। मानुषः।

[ SK. has two additional rules—मनोरण्। नश्च णः कुत्सायाम्। ४।१।१६६-१६७ ]

**जनपदनाम्नः क्षत्रियाद् राज्ञि च ॥९६॥**

जनपदस्य यन्नाम तन्नाम्नः क्षत्रियादपत्ये राजनि चाञ् भवति। पाञ्चालः, ऐक्ष्वाकः। जनपदनाम्न इति किम्? दाशरथिः। क्षत्रियादिति किम्? पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः।

[ जनपदशब्दात् क्षत्रियादञ्। पा० ४।१।१६८, क्षत्रियसमानशब्दाज्जनपदात् तस्य राजन्यपत्यवत्। वा०, तुल्यनामभ्यः क्षत्रियजनपदेभ्यो राजनि च। स० ४।१।१७० ]

**गान्धारिशाल्वेयात् ॥९७॥**

आभ्यामपत्ये राजनि चाञ् भवति। गान्धारः, शाल्वेयः। प्रत्येकाभिसम्बन्धादर्थस्य न याथासङ्ख्यम्।

[ साल्वेयगान्धारिभ्यां च। पा० ४।१।१६९, स० ४।१।१७१ ]

**आदेजाद्यचो ञ्यङ् ॥९८॥**

जनपदनाम्नः क्षत्रियादादेजाद्यचोऽपत्ये राजनि च ञ्यङ् भवति। आम्बष्ठ्यः।

[ वृद्धेत्कोसलाजादाञ्ञ्यङ्। पा० ४।१।१७१, स० ४।१।१७२ ]

**इत्कोशलाजादात् ॥९९॥**

इदन्तात् कोशलादजादाच्चापत्ये राजनि च ञ्यङ् भवति। आवन्त्यः; कौशल्यः, आजाद्यः। तपरः किम्? कुमारी नाम जनपदः, तन्नाम्नः क्षत्रियस्यापत्यं राजा वा कौमारः।

**द्व्यञ्मगधकलिङ्गसूरमसादण् ॥१००॥** [ पा० ४।१।१७० ]

एतेभ्योऽपत्ये राज्ञि चाण् भवति। आङ्गः, वाङ्गः। मागधः, कालिङ्गः, सौरमसः।

[ द्व्यञ्मगधकलिङ्गसूरमसेभ्योऽण्। स० ४।१।१७३ ]

**कुरुनादिभ्यो ण्यः ॥१०१॥** [ पा० ४।१।१७२, स० ४।१।१७४ ]

कुरोर्नकारादिभ्यश्च शब्देभ्योऽपत्ये राजनि च ण्यो भवति। कौरव्यः। नैषध्यः।

**पाण्डोर्ड्यण् ॥१०२॥** [ स० ४।१।१७५ ]

पाण्डोरपत्ये राजनि च ड्यण् भवति। पाण्ड्यः। जनपदनाम्न इत्येव। पाण्डवः।

[ पाण्डोर्ड्यण् वक्तव्यः। पा० ४।१।१६८ भाष्यम् ]

**शाल्वांशप्रत्यग्रथकलकूटाश्मकादिञ् ॥१०३॥**

उदुम्बरास्तिलखला मद्रकारा युगन्धराः।
भुलिङ्गाः शरदण्डाश्च शाल्वावयवसंज्ञिताः॥

शाल्वावयवनाम्नः क्षत्रियात् प्रत्यग्रथादिभ्यश्चापत्ये राजनि च इञ् भवति। औदुम्बरिः, तैलखलिः। प्रात्यग्रथिः, कालकूटिः, आश्मकिः।

[साल्वावयव०। पा० ४।१।१७३, उदुम्बर तिलखल-मद्रकार-युगन्धर-भुलिङ्ग-शरदण्ड-प्रत्यग्रथ-कलकूटाश्मकेभ्य इञ्। स० ४।१।१७६ ]

**कम्बोजादिभ्यो लुक् ॥१०४॥**

कम्बोजादिभ्योऽपत्ये राजनि च विहितस्य लुग् भवति। कम्बोजः। चोलः। केरलः। शकः।

[कम्बोजाल्लुक्। कम्बोजादिभ्यो लुग्वचनं चोडाद्यर्थम्। पा० ४।१।१७५, वा १, कम्बोज-मुरल-केरल-चोल-शक-खसादिभ्यो लुक्। स० ४।१।१७७]

**स्त्रियां कुरुकुन्त्यवन्तिभ्यः ॥१०५॥** [स० ४।१।१७८]

एभ्यः स्त्रियामपत्ये विहितस्य लुग् भवति। कुरूः, कुन्ती, अवन्ती। स्त्रियामिति किम्? आवन्त्यः। जनपदनाम्न इत्येव। कौरव्या।

[स्त्रियामवन्तिकुन्तिकुरुभ्यः। पा० ४।१।१७६]

**अतोऽप्राच्यभर्गादिभ्यः ॥१०६॥**

अकारस्य स्त्रियामपत्ये विहितस्य लुग् भवति, न चेत् प्राच्येभ्यो भर्गादिभ्यश्च विहितो भवति। शूरसेनी, मद्री। अप्राच्यभर्गादिभ्य इति किम्? आङ्गी, वाङ्गी, भार्गी, कारूषी। स्त्रियामित्येव। माद्रः॥ भर्ग। करूष। केकय। कश्मीर। शाल्व। सुस्थाल। उरस। कौरव्य।

[अतश्च। न प्राच्यभर्गादियौधेयादिभ्यः। पा० ४।१।१७७-१७८, अञ्णोरप्राच्य-भर्ग-करूष-केकय-कश्मीर-कौरव्यौरस-साल्व-सुस्थलेभ्यः। स० ४।१।१७९]

**यञञोर्बहुष्वस्त्रियाम् ॥१०७॥**

यञञोर्बहुष्वपत्येष्वस्त्रियां विहितयोर्लुग् भवति। गर्गाः, विदाः, पञ्चालाः। बहुष्विति किम्? गार्ग्यः, वैदः। अस्त्रियामिति किम्? गार्ग्यः स्त्रियः; वैद्यः। अपत्य इत्येव। बाह्याः, औत्साः। प्रियगार्ग्या इति नवायं बहुषु यञ्। प्रियगर्गा इति बहुष्वेव यञ्। गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलमिति वा भवति। गार्ग्यस्य हि यत् कुलं गर्गाणामपि तत् कुलमित्यभेदेनोच्यते।

[तद्राजस्य बहुषु तेनैवास्त्रियाम्। यञञोश्च। पा० २।४।६२,६४ यञञोर-पुनर्भू-परस्त्री-पुत्र-दुहितृ-ननान्दृभ्यः। स० ४।१।१८१]

**कुण्डिनाः ॥१०८॥**

कुण्डिनीशब्दाद् बहुत्वे यञो लुग् भवति, आकारान्तता च निपात्यते। बहुष्वित्येव। कौण्डिन्यः। अस्त्रियामित्येव। कौण्डिन्यः स्त्रियः।

[ आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । पा० २।४।७०, कौण्डिन्यस्य कुण्डिनच्च । स० ४।१।१८३ ]

**अङ्गादीनाम् ॥१०९॥**

अङ्गादीनां बहुषु विहितानां लुग् भवति। आम्बष्ठाः, आङ्गाः, कुरवः। बहुष्वित्येव। आम्बष्ठ्यः। अस्त्रियामित्येव। आम्बष्ठ्याः स्त्रियः। अपत्य इत्येव। अङ्गस्य इमे, आङ्गाः।

[ ते तद्राजाः। तद्राजस्य बहुषु तेनैवास्त्रियाम्। पा० ४।१।१७४, २।४।६२ अङ्गादीनामस्त्रियां बहुषु। स० ४।१।१८० ]

**यस्कादिभ्यः ॥११०॥** [ ० गोत्रे। पा० २।४।६३ ]

यस्क इत्येवमादिभ्यो बहुषु विहितस्य लुग् भवति। यस्काः। बहुष्वित्येव। यास्कः। अस्त्रियामित्येव। यास्क्यः स्त्रियः। अपत्य इत्येव। यास्काश्छात्राः ॥ यस्क। लह्य। द्रुह्य। अयस्थूण। तृणकर्ण। कलन्दन। एतेभ्यः [४१] शिवादिपाठादणो लुक्। सदामत्त। कम्बलहार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। वकसक्थ। रक्षोमुख। जङ्घारथ। उत्कास। कटुक। मन्थक। विषपुट। उपरिमेखल। क्रोष्टुपाद। शीर्षमाय। पदक। वर्पक। एतेभ्योऽत इञः [ १९ ]। पुष्करसद्, [ २० ] बाह्वादित्वादिञः। विश्रि। कुद्रि। अजवस्ति। एतेभ्यो गृष्ट्यादिपाठाड् ढञः [७७]। मित्रयु, अस्मादणः। खरप, अस्मान् नडादित्वात् [३५] फकः। भडिल। भण्डिल। भडित। भण्डित। एतेभ्योऽश्वादिपाठात् [ ३१ ] फञः।

[ यस्क लभ्य-द्रुह्यायःस्थूण-तृणकर्ण-भलन्दन-मित्रयु-खरप-भडिल-भण्डिल-भडित-भण्डितेभ्यः। सदामत्त-कम्बलभार-कर्णाट-पिण्डीजङ्घ-वकसक्थ-रक्षोमुख जङ्घारथोत्कास-कटुक-मन्थक-विषपुटेभ्यः। वर्षुकोपरिमेखल-कडरकृष-यटाक-पुष्करसत्-कुद्रि-विश्यजवस्तिभ्य। क्रोष्टुः पादमानाभ्याम्। शीर्षाच्च मायात्। स० ४।१।१८४-१८८ ]

**अत्रिभृगुकुत्सवसिष्ठाङ्गिरोगोतमात् ॥१११॥** [ ० गोतमेभ्यः। स० ४।१।१८९ ]

एतेभ्यो बह्वपत्येषूत्पन्नस्य लुग् भवति। अत्रयः, भृगवः, कुत्साः,

वसिष्ठाः, अङ्गिरसः, गोतमाः। बहुष्वित्येव। आत्रयः, भार्गवः। अस्त्रियामित्येव। आत्रेय्यः।

[ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । पा० २।४।६५ ]

**अगस्तयः ॥११२॥** [ स० ४।१।१९० ]

अगस्त्यस्य बहुष्वपत्येषु लुक्, अगस्तिशब्दादेशश्च निपात्यते। अगस्तयः। बहुष्वित्येव। आगस्त्यः। अस्त्रियामित्येव। आगस्त्यः स्त्रियः।

[ आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । पा० २।४।७० ]

**बह्वचः प्राच्यादिञः ॥११३॥** [ स० ४।१।१९१ ]

बह्वचः प्राच्याद् गोत्रादिभूताद् विहितस्य इञो लुग् भवति। पन्नागाराः, मन्थरेषणाः, युधिष्ठिराः, उद्दालकाः। बह्वच इति किम्? चैङ्कयः। प्राच्यादिति किम्? हास्तिदासयः। बहुष्वित्येव। पान्नागारिः।

[ बह्वच इञः प्राच्यभरतेषु । पा० २।४।६६ ]

**उपकादिभ्यो वा ॥११४॥**

उपक इत्येवमादिभ्यो बहुष्वपत्येषु विहितस्य लुग् वा भवति। उपकाः, औपकायनाः। लमकाः, लामकायनाः॥ उपक। लमक। भ्रष्टक। कपिष्ठल। वडारक। गडुक। सुपिष्ट। पिष्ट। मयूरकर्ण। खरीजङ्घ। शलाथल। पतञ्जलि। कठेरणि। कुषीतकि। काशकृत्स्न। कदामत्त[1]। कलशीकण्ठ। दामकण्ठ। कृष्णाजिन। कृष्णसुन्दर। कणक। पर्णक। जटिलक। बधिरक। जन्तुक[2]। अनुलोम। अनुपद। पिञ्जलक। प्रतिलोम। प्रतान। अनभिहित।

[ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे। पा० २।४।६९ यञ्भ्यश्चोपकादिभ्यः। वा भ्रष्ट-कपिष्ठलाभ्याम्। स० ४।१।१९६-१९७ उपक-लमक-भ्रष्टक-कपिष्ठल-कृष्णाजिन-कृष्णसुन्दर-पिङ्गल-कृष्णपिङ्गलक-कलशीकण्ठ-दामकण्ठ-जटिलक-बधिरकेभ्यो वा। जतु-गडुक-निदाघाऽपजघाऽ-घारक-वघारक-प्रतिलोमाऽनुलोम-

[1] सदामत्त—MS. [2] MS. adds तन्तुभ here.

प्रतानाऽनुपदाऽनभिहित-करिजङ्घेभ्यः । कशकृत्स्न-सुधायुक-कर्णक-पर्णक-कुशीतक-लेखाभ्रू-शलायल-पिष्ट-सुपिष्ट-मसूरकर्ण-कठेरणि-पतञ्जलिभ्यः । स० ४।१।१९२–१९४ ]

**तिककितवादिभ्यश्चार्थे कार्थ्ये ॥११५॥**

चार्थे यदेकार्थ्यं तत्र तिककितवादिभ्यो विहितस्य बहुषु लुग् भवति । तैकायनयश्च कैतवायनयश्च तिककितवाः । तिकादिभ्यः फिञो लुक् । वाङ्खरयश्च भाण्डीरथयश्च वङ्खरभाण्डीरथाः ; अत इञः । एवम् प्रहृतकनरकाः । वकनखगुदपरिणद्धाः । लङ्कटशान्तमुखाः । उब्जककुभाः । उब्जादत इञः, ककुभाच्छिवाद्यणः । उरसलङ्कटाः ; उरसात् तिकादिभ्यः फिञः । अग्निवेशदशेरकाः ; अग्निवेशाद् गर्गादियञः । दशेरकादत इञः । उपकलमकाः, नडादिफकः । भ्रष्टककपिष्ठलाः । कृष्णाजिनकृष्णसुन्दराः, अत इञः । उपकलमकादीनां त्रयाणां पूर्वेण सिद्धे नित्यार्थः पाठः ।

[ तिककितवादिभ्यो द्वन्द्वे । पा० २।४।६८, तिक-कितवोब्जककुभ-वङ्खर-भण्डीरथ-प्रहितनरकाऽग्निवेशदसेरक-बकनखश्वगुदपरिणद्ध-लङ्कुशान्तमुखो-रसलङ्कटेभ्यो द्वन्द्वे । स० ४।१।१९५]

**न गोपवनादिभ्योऽष्टभ्यः ॥११६॥** [ स० ४।१।१९८ ]

अष्टभ्यो गोपवनादिभ्यो [२२] विदादिपाठादञो विहितस्य न लुग् भवति । गौपवनाः, शैग्रवाः, वैन्दवाः । अष्टभ्य इति किम् ? हरिताः ।

[न गोपवनादिभ्यः । गोपवनादिप्रतिषेधः प्राग् हरितादिभ्यः । पा० २।४।६७, वा १]

**प्रागजितीयेऽचि ॥११७॥** [ स० ४।१।१९९ ]

बहुषु यस्य लुगुक्तस्तस्य [३।४।२] प्राग्जितीयेऽजादौ कर्तव्ये लुग् न भवति । अत्रीणां छात्राः आत्रयीयाः । आगस्तीयाः । प्राग्जितीय इति किम् ? गर्गेभ्यो हितः, गर्गीयः । अचीति किम् ? गर्गेभ्य आगतः, गर्गरूप्यः । बहुष्वित्येव । कम्बोजस्यापत्यं कम्बोजः, तस्य छात्राः काम्बोजाः ।

[ गोत्रेऽलुगचि । पा० ४।१।८९ ]

**गोत्राल्लुक्** ॥११८॥ [ स० ४।१।२०० ]

गोत्रादपत्ये विहितस्य प्राग् जितीयेऽजादौ कर्तव्ये लुग् भवति। फाण्टाहृतेरपत्यं माणवकः फाण्टाहृतः, तस्य च्छात्राः फाण्टाहृताः। णस्य लुकि सति इञः [३।२।२२] इत्यण् भवति। प्राग्जितीय इत्येव। भागवित्तिकाय हितः, भागवित्तिकीयः। अचीत्येव। फाण्टाहृतरूप्यः।

[ यूनि लुक् । पा० ४।१।९० ]

**फक्फिञोर्वा** ॥११९॥ [ स० ४।१।२०१ ]

फक्फिञोर्गोत्रादपत्ये विहितयोः प्राग्जितीयेऽजादौ कर्तव्ये लुग् वा भवति। गार्गीयः, गार्ग्यायणीयः। हौत्रीयः, हौत्रायणीयः। द्व्यचोऽणः [ ८८ ] इति फिञ्। ककारः किम्? फञो मा भूत्। आत्रेयायणस्य च्छात्राः, आत्रेयीयाः। [३१] अश्वादिपाठात् फञ्, तस्य नित्यं लुक्।

[ फक्फिञोरन्यतरस्याम् । पा० ४।१।९१ ]

**अब्राह्मणात्** ॥१२०॥ [ स० ४।१।२०२ ]

अब्राह्मणगोत्रादपत्ये विहितस्य लुग् भवति। औदुम्बरिः पिता, औदुम्बरिः पुत्रः। शाल्वांशादिञ्, ततः फको लुक्। कार्णखरिः पिता, कार्णखरिः पुत्रः ; भाण्डीजङ्घिः पिता, भाण्डीजङ्घिः पुत्रः। अत इञ्, ततः फको लुक्। पूर्वेण सिद्धे पुनर्वचनात् प्राग् जितीयेऽचि [ ११७ ] इति निवृत्तम्।

[अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यम् । पा० २।४।५८ भाष्यम्]

**पैलादिभ्यः** ॥१२१॥ [ ० भ्यश्च । पा० २।४।५९ ]

पैलादिभ्यो गोत्रेभ्योऽपत्ये विहितस्य लुग् भवति। पैलः पिता, पैलः पुत्रः। शालङ्किः पिता, शालङ्किः पुत्रः। इञन्तानामप्राच्यार्थः पाठः॥ पैल। शालङ्कि। सात्यकि[1]। सात्यङ्कामि[2]। औदञ्चि। औदमज्जि। औदव्रजि। औदमेधि। औदशुद्धि। दैवस्थानि[3]।

---

[1]सात्यङ्किरि—MS. [2]सात्यङ्करि—MS. [3]औदस्थानि—MS.

पैङ्गलोदायनि[1]। राणि। राहक्षति[2]। भौलिङ्गि। औद्गाहमानि[3]। औज्जिहानि[4]। जनपदनाम्नः क्षत्रियादण्ः। आङ्गः पुत्रः।

[पैल-शालङ्कि-सात्यकि-सात्यङ्काम्यौदमज्यौदमञ्ज्यौदमेघ्यौदशुद्धि-दैवस्थानि-पैङ्गलादायनि-राणि-राहक्षति-भौलिङ्ग्यौद्गाहमान्यौज्जिहानिभ्यः। स० ४।१।२०३]

प्राच्यादिञोऽतौल्वलिभ्यः ॥१२२॥

प्राच्यगोत्रादिञन्तात् तौल्वल्यादिवर्जितादपत्ये विहितस्य लुग् भवति। पान्नागारिः पिता, पान्नागारिः पुत्रः। मान्थरेषणिः पिता, मान्थरेषणिः पुत्रः। प्राच्यादिति किम्? दाक्षिः पिता, दाक्षायणः पुत्रः। इञ इति किम्? राघवः पिता, राघविः पुत्रः। अतौल्वलिभ्य इति किम्? तौल्वलिः पिता, तौल्वलायनः पुत्रः॥ तौल्वलि। धारणि। रावणि। रातक्षत्रि। दैवदत्ति। दैवति। दैवमति। दैवयज्ञि। प्रादोहनि। आनुराहति। आसुरि। आहिंसि। आसिबन्धकि। चैङ्कि। पौष्पि। पौष्करसादि। वैरकि[5]। वैहरि। वैकर्णि[6]। कारेणुपालि। भरतगोत्राच्च। आर्जुनिः पिता, आर्जुनायनः[7] पुत्रः। भरतगोत्रं वैश्यगोत्रमिति केचित्। तेषामौद्दालकिः पिता, औद्दालकायनः पुत्रः।

[इञः प्राचाम्। न तौल्वलिभ्यः। पा० २।४।६०-६१, प्राच्यादिञः। न तौल्वलि-धारणि-वारणि-रावणि-दैलीपि-दैवति-दैवमति-दैवयज्ञि-प्रादोहनि-चाफन्द-बपाऽऽसुरि-पौष्करसाद्यानुराहतिभ्यः। आनुति-नैमिश्रासिबन्धकि-चैङ्कि-पैष्ट्याहिंसि-वैरकि-वैसोति-वैहति-वैकर्णि-काकंरि-कारेणुपालिभ्यः। भरतगोत्राच्च। स० ४।१।२०६ २०९]

ञिदार्षण्यादणिञोः ॥१२३॥

ञिदन्तादार्षाण्ण्यान्ताच्च गोत्रादपत्ये विहितयोरणिञोर्लुग् भवति। तैकायनिः पिता, तैकायनिः पुत्रः। अणो लुक्। वैदः पिता, वैदः

[1] पैप्पलादायनि—MS.
[2] हारक्षत्रि—MS.
[3] औद्गाहायनि—MS.
[4] औज्जिहायनि—MS.
[5] वैकरि—MS.
[6] वैकलि—MS.
[7] आर्जुनायनिः—MS.

पुत्रः। इञो लुक्। आर्पात्। वैश्वामित्रः पिता, वैश्वामित्रः पुत्रः। ण्यान्तात्। कौरव्यः पिता, कौरव्यः पुत्रः। ब्राह्मणस्येदं ग्रहणम्। तिकादिषु तु कौरव्यस्य क्षत्रियस्य पाठात् कौरव्यायणिः। एतेभ्य इति किम्? औपगवः पिता, औपगविः पुत्रः। अणिञोरिति किम्? दाक्षेरपत्यं दाक्षायणः। गोत्रादित्येव। द्वैप्यस्यापत्यम्, द्वैप्यिः। अपत्यमित्येव। वामरथ्यस्य च्छात्राः, वामरथाः; शकलादित्वादण् [३।२।२१]।

[ण्यक्षत्रियार्षञितो यूनि लुगणिञोः। पा० २।४।५८, ञिदार्षण्येभ्योऽणिञोः। स० ४।१।११०]

इति चान्द्रे व्याकरणे द्वितीयोऽध्यायः समाप्तः।

**तेन रक्तं रागात्** ॥१॥ [पा० ४।२।१, स० ४।२।१]

तेनेति तृतीयान्ताद् रक्तमित्येतस्मिन्नर्थेऽण् भवति यत्तत् तृतीयान्तं रागवाचि चेत् तद्भवति। कषायेण रक्तं वस्त्रं काषायम्। कौङ्कुमम्। रागादिति किम्? देवदत्तेन रक्तं वस्त्रम्। कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति* ? तद्गुणाध्यारोपात्।

**लाक्षारोचनाट् ठक्** ॥२॥ [पा० ४।२।२]

एताभ्यां तेन रक्तमित्यर्थे ठग् भवति। लाक्षिकम्। रौचनिकम्।

[लाक्षारोचनाभ्यां ठक्। स० ४।२।२]

**शकलकर्दमाद्वा** ॥३॥ [०र्दमाभ्यां वा। स० ४।२।३]

एताभ्यां तेन रक्तमित्येतस्मिन्नर्थे ठग् वा भवति। शाकलिकम् शाकलम्। कार्दमिकम् कार्दमम्।

[ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम्। पा० ४।२।२।१]

---

* हारिद्रौ कुक्कुटस्य पादौ काषायौ गर्दभस्य कर्णाविति। उपमानात् सिद्धम्। हारिद्राविव हारिद्रौ काषायाविव काषायौ। महाभाष्यम् ४।२।२

**नीलपीतादनकनौ** ॥४॥ [ ० पीताभ्याम् ० । स० ४।३।४ ]

नीलपीताभ्यां तेन रक्तमित्येतस्मिन्नर्थेऽनकनौ भवतः। नीलम् पीतकम्। गुणवचनेन सिद्धेऽणपवादार्थं वचनम्।

[ नील्या अन्। पीतात् कन्। पा० ४।२।२।२-३ ]

**नक्षत्रैरिन्दुयुक्तैः कालः** ॥५॥

नक्षत्रेभ्यस्तृतीयान्तेभ्यस्तैर्लक्षिते कालेऽण् भवति, तानि चेन्नक्षत्राणीन्दुयुक्तानि भवन्ति। पौषी रात्रिः पौषमहः। नक्षत्रैरिति किम्? शुक्रेण लक्षिता रात्रिः। इन्दुयुक्तैरिति किम्? कृत्तिकाभिर्लक्षितो मुहूर्तः। काल इति किम्? पुष्येण लक्षितार्थसिद्धिः। अत्र कृत्तिका इति कृत्तिकायुक्ते शशिनि कृत्तिकाशब्दो वर्तते।

कृत्तिकासु विशाखासु मघासु भरणीषु च

इति नक्षत्रैरेव तत्कालाभिधानमभेदोपचारात्। श्रवणा रात्रिरिति श्रवणयुक्ते चन्द्रे श्रवणशब्दः। श्रवणोऽस्त्यास्तीत्यर्थे आदित्वादच्। श्रवणा रात्रिः। यदा तु श्रवणेनेन्दुयुक्तेनेति लक्षितेति विवक्षा* तदा श्रावणी रात्रिः। अश्वत्थ इति मुहूर्तविशेषस्य संज्ञा। नक्षत्रविशेषे तु पुनरश्वत्थेन लक्षिता रात्रिराश्वत्थी।

[ नक्षत्रेण युक्तः कालः। पा० ४।२।३, चन्द्रेणैतात् कालः। जै० ३।२।६, चन्द्रयुक्तेनक्षत्राद् युक्तः कालः। म० ४।२।७ ]

**राधाच्छ** ॥६॥

अन्तर्भूतचार्थान्नक्षत्रवाचिनस्तृतीयान्तात् तदुपलक्षिते काले छो भवति। राधानुराधीया रात्रि। राधानुराधीयमहः।

[ द्वन्द्वाच्छः। पा० ४।२।६, म० ४।२।१० ]

**दृष्टं साम ढिञ्** ॥७॥ [ म० ४।२।११ ]

तृतीयान्ताद् दृष्ट सामेत्यस्मिन्नर्थे यथाविध्यणादयो भवन्ति, ढिञ्।

* विवक्षायाम्—MS.

वसिष्ठेन दृष्टं साम वासिष्ठम्। बार्हस्पत्यम् आग्नेयम् कालेयम्। औशनम् औशनसम्।

[ दृष्टं साम। पा० ४।२।७, दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा विधीयते। श्लोकवार्त्तिकम्। दृष्टं साम कलेर्ढक्। सर्वत्राग्निकलिभ्यां ढक्। महाभाष्यम् ]

**गोत्रादङ्कवत्** ॥८॥ [ स० ३।२।१३ ]

तृतीयान्ताद् गोत्राद् दृष्टे साम्न्यङ्क इव विधिर्भवति। गार्ग्येण दृष्टं साम गार्गकम्। वुञ् भवति।

[ गोत्रादङ्कवदिष्यते। पा० ४।२।७ श्लोकवार्त्तिकम्। ]

**वामदेव्यम्** ॥९॥

वामदेवेन दृष्टं सामेत्यस्मिन्नर्थे वामदेव्यमिति निपात्यते।

[ वामदेवाड् ड्यड्ड्यौ। पा० ४।२।९ ]

**परिवृतो रथः** ॥१०॥ [ पा० ४।२।१०, स० ४।२।१४ ]

तृतीयान्तात् परिवृतो रथ इत्येतस्मिन्नर्थेऽण् भवति। वस्त्रैः परिवृतो रथो वास्त्रः। चार्मणः। पुत्रैः परिवृतो रथ इति न भवति रथस्य तदभावात्, अन्यापेक्षत्वे च पृथगर्थत्वात्। रथ इति किम्? वस्त्रेण परिवृतः कायः। पाण्डुकम्बलीति मत्वर्थीयेन सिद्धम्। पाण्डुकम्बलोऽपि तर्हि प्राप्नोति। इष्यत एवान्यपदार्थे। द्वीपिनश्चर्म द्वैपम्, व्याघ्रस्य वैयाघ्रम्। ताभ्यां परिवृतो रथ इति द्वैपो वैयाघ्र इत्यणा सिद्धम्।

[ पाण्डुकम्बलादिनिः। पा० ४।२।११, स० ४।२।१५ द्वैपवैयाघ्रादण्। पा० ४।२।१२। द्वैपवैयाघ्राभ्यां चर्मभ्यामञ्। स० ४।२।१६ ]

**कौमारी प्राथम्ये** ॥११॥

कौमारीति निपात्यते पुंयोगस्य प्राथम्ये। कौमारी भार्या। कथं कौमारो भर्ता? कुमार्यां भव. कुमार्याः पतिरिति [ba Cf. Gk *he: parthe'nios* and *parthenios ane:r ; kouridios posis* ]

[ कौमारापूर्ववचने। पा० ४।२।१३, कुमारात् प्राथम्ये। स० ४।२।१७ ]

**तत्रोद्धृतं पात्रेभ्यः** ॥१२॥ [ स० ४।२।१८ ]

सप्तम्यन्तात् पात्रवाचिन उद्धृतमित्येतस्मिन्नर्थेऽण् भवति। शरावेपूद्धृत ओदनः शारावः। माल्लिकः[1]। पात्रेभ्य इति किम्। पाणावुद्धृत ओदनः।

[ तत्रोद्धृतममत्रेभ्यः। पा० ४।२।१४ ]

**स्थण्डिले शेते व्रती** ॥१३॥ [ स्थण्डिलात्। ० स० ४।२।१९ ]

स्थण्डिलात् सप्तम्यन्ताच्छेत इत्येतस्मिन्नर्थेऽण् भवति व्रती चेत्। स्थाण्डिलो भिक्षुः। व्रतीति किम्? स्थण्डिले शेते शूद्रः।

[ स्थण्डिलाच्छयितरि व्रते। पा० ४।२।१५ ]

**संस्कृतं भक्ष्यम्** ॥१४॥ [ स० ४।२।२० ]

सप्तम्यन्तात् संस्कृतमित्येतस्मिन्नर्थेऽण् भवति भक्ष्यं चेत्। भ्राष्ट्रा मोदकाः। भक्ष्यमिति किम्? फलके संस्कृता मालाः।

[ संस्कृतं भक्षाः। पा० ४।२।१६ ]

**शूलोखाद्यत्** ॥१५॥ [ पा० ४।२।१७, स० ४।२।२१ ०खाभ्या० ]

शूलोखाभ्यां सप्तम्यन्ताभ्यां संस्कृतं भक्ष्यमित्यस्मिन्नर्थे यद् भवति। शूल्यम् उख्यम्।

**दध्नष्ठक्** ॥१६॥ [ पा० ४।२।१८, स० ४।२।२२ ]

दध्नः सप्तम्यन्तात् संस्कृतमित्यस्मिन्नर्थे ठग् भवति। दाधिकम् दाधिकी। औदश्वितमिति पूर्वेण [१४] सिद्धम्, औदश्वित्कमिति परेण।

[ उदश्वितोऽन्यतरस्याम्। पा० ४।२।१९, उदश्वितो वा। स० ४।२।२३ ]

**क्षीराड्ढञ्** ॥१७॥ [ पा० ४।२।२०, स० ४।२।२४ ]

क्षीरात् सप्तम्यन्तात् संस्कृतमित्येतस्मिन्नर्थे ढञ् भवति भक्ष्यं चेत्। क्षैरेयम् क्षैरेयी।

**सास्य पौर्णमासी** ॥१८॥

प्रथमान्तादस्येति षष्ठ्यर्थेऽण् भवति यत्तत् प्रथमान्तं पौर्णमासी

[1] मान्मयः — MS

चेत् सा भवति। पौषी पौर्णमास्यस्य सम्बन्धिनी पौषो मासः। माघः। पौर्णमासीति किम्? पौषी पञ्चम्यस्य मासस्य। पौर्णमासी भृतकमासस्य सम्बन्धिनी न भवति। पूर्णो [1]मा अस्यामिति निर्वचनादत एव निपातनादण्। मासश्रुतेश्च न पञ्चरात्रादौ विधिः।

[ सास्मिन् पौर्णमासीति संज्ञायाम्। पा० ४।२।२१, सास्मिन् पौर्णमासी संज्ञायाम्। स० ४।२।२५ ]

**आग्रहाण्यश्वत्थाट्ठक्** ॥ १९ ॥ [पा० ४।२।२२ ]

आग्रहायण्यश्वत्थाभ्यां प्रथमान्ताभ्यां ठग् भवत्यस्येति षष्ठ्यर्थे, यत् प्रथमान्तं पौर्णमासी चेत् सा भवति। आग्रहायणिको मासः। आश्वत्थिकः। अश्वत्था पौर्णमासीत्यभेदोपचारात्।

[ अश्वत्थाग्रहायणीभ्यां ठक्। स० ४।२।२६ ]

**फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यो वा** ॥ २० ॥ [स० ४।२।२७ ]

फाल्गुन्यादिभ्यः प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थे ठग् भवति वा, यत् प्रथमान्तं पौर्णमासी चेत् सा भवति। फाल्गुनिकः फाल्गुनः। श्रवणा पौर्णमास्यस्य श्रावणिकः श्रावणः। श्रवणेति निपातनादणो लुक्। कार्त्तिकिकः कार्त्तिकः। चैत्रिकः चैत्रः।

[ विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः। पा० ४।२।२३ ]

**देवता** ॥ २१ ॥

देवतावाचिनः प्रथमान्तादस्येति षष्ठ्यर्थे यथाविध्यणादयो भवन्ति। ऐन्द्रं हविः। आदित्यम् बार्हस्पत्यम् कालेयम् आग्नेयम्। ऐन्द्रो मन्त्रः।

[ सास्य देवता। पा० ४।२।२४, स० ४।२।२८ ]

**कस्येत्** ॥ २२ ॥ [ पा० ४।२।२५, ० च। स० ४।२।२९ ]

कशब्दस्य देवतावाचिनोऽस्येति षष्ठ्यर्थेऽणि इकारादेशो भवति। को देवतास्य कायं हविः, प्राजापत्यमित्यर्थः।

---

[1] मास्याम्—MS.

**शुक्राद् घन्** ॥ २३ ॥ [ पा० ४।२।२६, स० ४।२।३० ]

शुक्रात् सास्य देवतेत्यस्मिन् विषये घन् भवति। शुक्रियं हविः। शुक्रियोऽध्यायः।

**पैङ्गाक्षीपुत्रादिभ्यश्छः** ॥ २४ ॥ [ स० ४।२।३१ ]

पैङ्गाक्षीपुत्रादिभ्यः सास्य देवतेत्यस्मिन् विषये छो भवति। पैङ्गाक्षीपुत्रीयम्। तार्णबिन्दवीयम्।

[ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम्। पा० ४।२।२८।१ ]

**शतरुद्राद् घश्च** ॥ २५ ॥ [ स० ४।२।३२ ]

शतरुद्रात् सास्य देवतेत्यस्मिन् विषये घो भवति छश्च। शतरुद्रियम् शतरुद्रीयम्।

[ शतरुद्राद् घ च। पा० ४।२।२८।२ ]

**अपोनपादपांनपातोस्तृ चातः** ॥ २६ ॥ [ स० ४।२।३३ ]

अपोनपात् अपांनपात् इत्येतयोः सास्य देवतेत्यस्मिन विषये घो भवति छश्च, आच्छब्दस्य च तृ इत्ययमादेशो भवति। अपोनप्त्रियम् अपोनप्त्रीयम्। अपांनप्त्रियम् अपांनप्त्रीयम्।

[ अपोनप्त्रपांनप्तृभ्यां घः। छ च। पा० ४।२।२७-२८ ]

**महेन्द्राद् वा** ॥ २७ ॥ [ स० ४।२।३४ ]

महेन्द्रात् सास्य देवतेत्यस्मिन् विषये घो भवति, छश्च वा। महेन्द्रियम् महेन्द्रीयम् माहेन्द्रम्।

[ महेन्द्राद् घाणौ च। पा० ४।२।२९ ]

**सोमाट् ट्यण्** ॥ २८ ॥ [ पा० ४।२।३०, स० ४।२।७५ ]

सोमात् सास्य देवतेत्यस्मिन् विषये ट्यण् भवति। सौम्यं हविः। सौम्यं सूक्तम्। सौमी ऋक्।

**वाय्वृतुपित्रुषसो यत्** ॥ २९ ॥ [पा० ४।२।३१, स० ४।२।३६]

वाय्वादिभ्यः सास्य देवतेत्यस्मिन् विषये यद् भवति। वायव्यम् ऋतव्यम् पित्र्यम् उषस्यम्।

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छश्च** ॥ ३० ॥ [स० ४।२।३७, ०च्छ च। पा० ४।२।३२ ]

द्यावापृथिव्यादिभ्यः सास्य देवतेत्यस्मिन् विषये छो भवति यच्च। द्यावापृथिवीयम् द्यावापृथिव्यम् । शुनासीरीयम् शुनासीर्यम् । मरुत्वतीयम् मरुत्वत्यम् । अग्नीषोमीयम् अग्नीषोम्यम् । वास्तोष्पतीयम् वास्तोष्पत्यम् । गृहमेधीयम् गृहमेध्यम् ।

**कालेभ्यो भववत्** ॥ ३१ ॥ [ पा० ४।२।३४, स० ४।२।३८ ]

कालवाचिभ्यो भवे यथाणादयस्तथा सास्य देवतेत्यस्मिन् विषये भवन्ति। मासे भवम् मासिकम् । सावत्सरिकम् । हैमन्तिकम् हैमनम् । प्रावृषेण्यम् । मासो देवतास्य मासिकम् । सांवत्सरिकम् । हैमनम् हैमन्तिकम् । प्रावृषेण्यम् ।

**महाराजप्रोष्ठपदाट्ठञ्** ॥ ३२ ॥ [पा० ४।२।३५, स० ४।२।३९]

महराजप्रोष्ठपदाभ्यां सास्य देवतेत्यस्मिन् विषये ठञ् भवति। माहाराजिकम् माहाराजिकी । प्रौष्ठपदिकम् प्रौष्ठपदिकी ।

**आदेश्छन्दसः प्रगाथे** ॥ ३३ ॥ [ स० ४।२।४० ]

छन्दसः प्रथमान्तादादिभूतादस्येति षष्ठ्यर्थे प्रगाथेऽभिधेयेऽण् भवति । अनुष्टुबादिरस्य प्रगाथस्य आनुष्ठभः । पाङ्क्तः जागतः । आदेरिति किम् ? मध्यान्मा भूत् । प्रगाथ इति किम् । अनुवाके मा भूत् । छन्दस इति किम् ? पदान्मा भूत् ।

[ सोऽस्यादिरितिच्छन्दसः प्रगाथेषु । पा० ४।२।५५ ]

**योद्धृप्रयोजनात् संग्रामे** ॥ ३४ ॥ [० नेभ्यः० । स० ४।२।४१ ]

योद्धृभ्यः प्रथमान्तेभ्यः प्रयोजनेभ्यश्च षष्ठ्यर्थे संग्रामेऽभिधेये यथाविहितमणादयो भवन्ति । संशप्तका योद्धारोऽस्य संग्रामस्य सांशप्तकः। दैवासुरः । सुभद्रा प्रयोजनमस्य संग्रामस्य सौभद्रः । योद्धृप्रयोजनादिति किम् ? मासोऽस्य सग्रामस्य। संग्राम इति किम् ? सुभद्रा प्रयोजनमस्य वैरस्य ।

[ संग्रामे प्रयोजनयोद्धृभ्यः । पा० ४।२।५६ ]

क्रमादिभ्यस्तयोरेवार्थयोर्वुन् भवति। क्रमकः पदकः ॥ क्रम। पद। शिक्षा। मीमांसा। सामन्। कथम् अनुब्राह्मणीति ? इनिना सिद्धम्।

[ क्रम-पद-शिक्षा-मीमांसा-सामभ्यो वुन्। स० ४।२।५६ अनुब्राह्मणादिनिः। पा० ४।२।६२, स० ४।२।५५, इनिनैतन्मत्वर्थीयेन सिद्धम्। भाष्यम्। मत्वर्थेनात इनिठनावितीनिना सिद्धम्। तत्रैतस्माट्ठन्नपि प्राप्नोति। अनभिधानान्न भविष्यति। अणो निवृत्यर्थं तर्हि वचनम्। काशिका। अत इनिठनाविति सिद्धेऽणो निवृत्यर्थं वचनम्। हृदयहारिणी।]

**प्रोक्ताल्लुक् ॥ ४१ ॥** [ पा० ४।२।६४ ]

प्रोक्तार्थे येऽणादयस्तदन्तादध्येतृवेदित्रोरुत्पन्नस्य लुग् भवति। पाणिनिना प्रोक्तम् पाणिनीयम्। तदधीते वेद वा पाणिनीयः। पाणिनीया स्त्री।

[ प्रोक्तात्। स० ४।२।५८ ]

**सूत्रात् संख्याकात् ॥ ४२ ॥**

संख्याया यः को विहितस्तदन्तात् सूत्रवाचिन उत्पन्नस्य लुग् भवति। अष्टकं पाणिनीयं सूत्रम्, तदधीयते विदन्ति वा अष्टकाः पाणिनीयाः। त्रिकाः काशकृत्स्नाः। संख्येति किम् ? माध्यमकाः। कालापकाः। कादिति किम् ? चतुष्टयमधीते वेद वा चातुष्टयः।

[ सूत्राच्च कोपधात्। पा० ४।२।६५, संख्याप्रकृतेरिति वक्तव्यम्। भाष्यम्। संख्याकनः सूत्रवचनात्। स० ४।२।५९ ]

**तस्य समूहः ॥ ४३ ॥** [ पा० ४।२।३७, स० ४।२।६० ]

षष्ठ्यन्तात् समूहे यथाविहितमणादयो भवन्ति। चापाणां समूहः चापम्। काकम् वानस्पत्यम् स्त्रैणम् पौंस्नम्।

**भिक्षादिभ्योऽण् ॥ ४४ ॥** [ पा० ४।२।३८ ]

भिक्षादिभ्यः षष्ठ्यन्तेभ्यः समूहेऽर्थेऽण् भवति। भैक्षम्। क्षैत्रम् ॥ भिक्षा। क्षत्र। करीष। अङ्गार। सहस्र। युवति। पाठसामर्थ्यान्न पुंवद्भावः। यौवतम्। पद्धति। दक्षिणा। गर्भिणी। हलबन्ध।

युगवरत्रा। वडवा। भिक्षुक। शुक। उलूक। श्वन्। अहन्। क्षुद्रकमालवात् सेनासंज्ञायाम्। क्षौद्रकमालवी सेना। अन्यत्र वुञ् भवति तदन्तविधेरन्यत्र ज्ञापकात् [४९]।

[ भिक्षा-क्षेत्र-करीष-गर्भिणी-दक्षिणाऽऽङ्गारसहस्रायर्वञ्-चर्मन्-युवति-पदाति-पद्धतिभ्योऽण्। खण्डिकाऽहन्-हलबन्ध-युगवस्त्र-वडवा-भिक्षुक-शुकोलूक-श्वानुदात्तादेरञ्। क्षुद्रकमालवात् सेनासंज्ञायाम्। स० ४।२।६१-६३]

**गोत्रोक्षोष्ट्रोरभ्रराजराजपुत्रवत्साजवृद्धाद्‌ वुञ् ॥४५॥**

अपत्य यो विहितस्तदन्तादुक्षादिभ्यश्च समूहे वुञ् भवति। औपगवकम् गार्ग्यायणकम् राजन्यकम् मानुष्यकम् औक्षकम् औष्ट्रकम् औरभ्रकम् राजकम् राजपुत्रकम् वात्सकम् आजकम् वार्धकम्।

[ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्। पा० ४।२।३९, वृद्धाच्चेति वक्तव्यम्। भाष्यम्। गोत्रोक्षोष्ट्रोरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याऽजवृद्धेभ्यो वुञ्। स० ४।२।६४ ]

**केदाराद्‌ यञ् च ॥४६॥** [ पा० ४।२।४०, स० ४।२।६५ ]

केदारात् समूहे यञ् भवति वुञ् च। कैदार्यम् कैदारकम्।

**कवचिनश्च ठक् * ॥४७॥**

कवचिनः केदाराच्च समूहे ठग् भवति। कावचिकम् कैदारिकम्।

[ठञ् कवचिनश्च। पा० ४।२।४१, कवचिनश्च ठञ्। स० ४।२।६६ ]

**हस्त्यचित्तात् ॥४८॥**

हस्तिनोऽचित्तेभ्यश्च समूहे ठग् भवति। हास्तिकम् आपूपिकम् शाष्कुलिकम्।

[ अचित्तहस्तिधेनोष्ठक्। पा० ४।२।४७, हस्त्यचित्तेभ्यष्टक्। स० ४।२।६७ ]

**धेनोरनञः ॥४९॥** [ पा० ४।२।४७, स० ४।२।६८ ]

धेनोरनञ्पूर्वायाः समूहे ठग् भवति। धैनुकम्। अनञ इति किम्? आधनवम्। अस्माच्च प्रतिषेधात् सामूहिकेषू तदन्त-

* The correct reading appears to be ठञ्.

**प्रहरणादस्यां क्रीडायां णः ॥ ३५ ॥** [ स० ४।२।४२ ]

प्रहरणात् प्रथमान्तादस्यां क्रीडायामित्यस्मिन्नर्थे णो भवति । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । प्रहरणादिति किम् ? माला भूषणमस्यां क्रीडायाम् । क्रीडायामिति किम् ? असिः प्रहरणमस्यां सेनायाम् ।

[ तदस्यां प्रहरणमिति क्रीडायां णः । पा० ४।२।५७ ]

**भावघञो ञः ॥ ३६ ॥** [ स० ४।२।४३ ]

भावे यो घञ् तदन्तात् प्रथमान्तादस्यामिति सप्तम्यर्थे ञो भवति । श्येनपातोऽस्यां वर्तते श्यैनम्पाता । तैलम्पाता । भाव इति किम् ? प्रासादोऽस्यां नगर्याम् । घञ इति किम् ? श्येनपतनमस्यां वर्तते ।

[ घञः सास्यां क्रियेति ञः । पा० ४।२।५८ ]

**तदधीते तद्वेद ॥ ३७ ॥** [ पा० ४।२।५९, स० ४।२।४४ ]

द्वितीयान्तात्तदधीते तद्वेदेत्यनयोरर्थयोर्यथाविहितमणादयो भवन्ति । छन्दोऽधीते वेद वा छान्दसः । वैयाकरणः । द्विस्तद्ग्रहणं पृथग्विधानार्थम्, वेदनस्य चाध्ययनविषये दर्शनार्थम्, प्रसिद्ध्युपसंग्रहार्थं च ।

**क्रतूक्थादिभ्यष्ठक् ॥ ३८ ॥**

क्रतुभ्य उक्थादिभ्यश्च द्वितीयान्तेभ्योऽधीते वेदेत्यनयोरर्थयोष्ठग् भवति । अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । उक्थानि सामानि यानि यज्ञायज्ञीयात् परतोऽनुगीयन्ते । तल्लक्षणमपि तादर्थ्यादुक्थम्, औक्थिक्यमिति यस्य रूढिः । उक्थान्यधीते वेद वा, औक्थिकः । औक्थिक्यमधीते, उक्थानि सामान्यधीत इति न भवति, द्विस्तद्ग्रहणस्य प्रसिद्ध्युपसंग्रहार्थत्वात् । एवं याज्ञिक्यमधीत इति ॥ उक्थ । लोकायत । न्याय । न्यास । पुनरुक्त । यज्ञ । चर्चा । क्रमेतर । श्लक्ष्ण । संहिता । पदक्रम[1] । सङ्घात । वृत्ति । संग्रह । गण[2] । आयु-

---

[1] पद । क्रम ।—MS

[2] गुण—MS.

वेंद। द्विपदा। ज्योतिष। अनुपद। अनुकल्प। लक्षणकल्पसूत्रान्ताद् अकल्पादेः। आश्वलक्षणिकः, मातृकल्पिकः, वार्त्तिकसूत्रिकः। अकल्पादेरिति किम्? काल्पसूत्रः। विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा। वायसविद्यिकः। अनङ्गक्षत्रधर्मत्रिपूर्वेति किम्? आङ्गविद्यः, क्षात्रविद्यः, धार्मविद्यः, त्रैविद्यः। आख्यानाख्यायिकेतिहासपुराणेभ्यश्च। यावक्रीतिकः, वासवदत्तिकः, ऐतिहासिकः, पौराणिकः। सर्वसादेर्लुक्। सर्ववेदः, सर्वतन्त्रः, सवार्त्तिकः, ससंग्रहः। अनुसू, आनुसूकः। लक्ष्य, लाक्ष्यिकः[1]। लक्षण, लाक्षणिकः। वसन्त। वर्षा। शरद्। हेमन्त। शिशिर। प्रथम। चरम। गुण। अनुगुण। आथर्वण, आथर्वणिकः। पाठसामर्थ्यात् प्रोक्तादपि न लुक्। वसन्तादिसहचरितेषु ग्रन्थेषु वसन्तादिशब्दा अध्ययनसम्बन्धतो द्रष्टव्याः। पदोत्तरपदिक - इति ठना सिद्धम्।

[ क्रतूक्थादिसूत्रान्तात् ठक्। पा० ४।२।६०, विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः। विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा। आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ठञ् वक्तव्यः। अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः। इकन् पदोत्तरपदाच् शतषष्टे. षिकन् पथः। भाष्यम्॥ क्रतुभ्यष्ठक्।..उक्थ-लोकायत-न्याय-न्यास-पुनरुक्त-यत्त-चर्चा-क्रमेतर-श्लक्ष्ण-संहित-राङ्गाट-पद-क्रमेभ्यः। वृत्ति-संग्रहाऽऽयुर्वेद गुण-गणाऽ-नुपद-द्विपद-ज्योतिष-गणिताऽनुसूर्लक्ष्य-लक्षणेभ्यः। वसन्त-वर्षा-शरद्-हेमन्त-शिशिर-प्रथम-चरमाऽनुगुण-कल्पाथर्वणेतिहास-पुराणेभ्यः। आख्यानाख्यायिकाभ्यः। लक्षणकल्पसूत्रान्तादकल्पादेः। विद्यान्तादनङ्ग-क्षत्र-धर्म-त्रि-पूर्वात्। पदोत्तरपदाट् ठन्। स० ४।२।४५–५३ ]

**षतषष्टेः पथष्ठन्** ॥ ३९ ॥

शतषष्टिभ्यां परात् पथस्तदधीते तद्वेदेत्यनयोरर्थयोष्ठन् भवति। शतपथिकः शतपथिकी। षष्टिपथिक. षष्टिपथिकी।

[ शतषष्टेः षिकन् पथः। ४।२।६० भाष्यम्। शतषष्ट्यादेः पथः ष्ठन्। स० ४।२।५४ ]

**क्रमादिभ्यो वुन्** ॥ ४० ॥ [ पा० ४।२।६१ ]

[1] लाक्षिकः– MS

विधिर्ज्ञाप्यते। वानहस्तिकम् गौधेनुकम् ब्राह्मणराजन्यकम् क्षौद्रक मालवकम् [४४]।

**गणिकाब्राह्मणमाणववाडवाद् यञ्** ॥५०॥ [॰वेभ्यो यञ्।। स० ४।२।६९]

एतेभ्यः समूहे यञ् भवति। गाणिक्यम् ब्राह्मण्यम् माणव्यम् वाडव्यम्।

[ब्राह्मणमाणववाडवाद् यन्। पा० ४।२।४२, गणिकायाश्चेति वक्तव्यम्। ४।२।४० भाष्यम्। न ह्यस्ति विशेषो ब्राह्मणादिभ्यो यञो वा यनो वा। तदेव रूपं स एव स्वरः। एवं तर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज् ज्ञापयत्याचार्यः—अन्येभ्योऽप्ययं भवतीति। भाष्यम्।]

**केशाद्वा** ॥५१॥ [स० ४।२।७०]

केशात् समूहे यञ् वा भवति। कैश्यम् कैशिकम्।

[केशाश्वाभ्यां यञ्छावन्यतरस्याम्। पा० ४।२।४८]

**अश्वाच्छः** ॥५२॥ [स० ४।२।७१]

अश्वात् समहे छो वा भवति। अश्वीयम् आश्वम्।

**पार्श्वपौरुषेये** ॥५३॥

एतौ शब्दौ समूह निपात्येते। पर्शूनां समूहः पार्श्वम्। पुरुषाणां समूहः पौरुषेयम्।

[पर्श्वाः सण्। पा० ४।२।४३।३। यदि सण् ध्रियत इत्संज्ञा न प्राप्नोति। एवं तर्हि णस् वक्तव्यः। भाष्यम्। अत्यल्पमिदमुच्यते—पुरुषाद्वध इति। पुरुषाद् वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। पा० ५।१।१०। भाष्यम्। पर्शुपुरुषाभ्यां णसढञौ०। स० ४।२।७२]

**पृष्ठ्याहीनौ क्रतौ** ॥५४॥

पृष्ठ्य अहीन इत्येतौ क्रतावभिधेये निपात्यते। पृष्ठानां समूहः

---

* Both Mad. and Triv. have पर्शु and the Com. (Triv.) has पार्श्वम्. The correct reading undoubtedly is पर्शु. Later grammarians spell the word with a long final.

पृष्ठ्यः । अह्नां समूहः अहीनः । क्रताविति किम् । आह्नम् । [ ४४ ] भिक्षादिपु दर्शनादण् ।

[मन्-प्रकरणे पृष्ठादुपसंख्यानम् । पा० ४।२।४२।१, अह्नः खः । क्रतौ । ४।२।४६।१-२ अह्नः खः क्रतौ । पृष्ठाद् यः । स० ४।२।७३–७४, पृष्ठाहीनौ क्रताविति चान्द्रं सूत्रम् । रामतर्कवागीशः । ]

**वातादूलः** ॥५५॥ [ वातादूलश्च । स० ४।२।७६ ]

वातात् समूह ऊलो भवति । वातूलः ।

[ वातात् समूहे च । पा० ५।२।१२२।९ ]

**पाशादिभ्यो यः** ॥५६॥ [ पा० ४।२।४९ ]

पाशादिभ्यः समूहे यो भवति । पाश्या तृण्या । स्वभावतः स्त्रीलिङ्गाः ॥ पाश । तृण । धूम । वात । अङ्गार । पोत । गल । पिटक । शकट । हल । नड[1] । वन । खल । गो । रथ । रथकट्येति कट्याशब्दः समूहे नियतविषयः ।

[ पाश-तृण-धूमाङ्गार-गल-वात-पिटक-पिटाक-शकट-हल-नड-वनेभ्यश्च । रथात् कड्यश्च । स० ४।२।७५, ७८ ]

**खलादिभ्य इनिः** ॥५७॥ [ पा० ४।२।५१।१ ]

खलादिभ्यः समूहे इनिर्भवति । खलिनी उलूकिनी[2] ।

[ खलादिनिश्च । ऊक-कुन्दुमाभ्याम् । स० ४।२।७९-८० ]

**गोत्रा** ॥५८॥

गोत्रेति गवा समहे निपात्यते ।

[ इनि-त्र-कट्यचश्च । पा० ४।२।५२ ]

**ग्रामजनगजबन्धुसहायात्तल्** ॥५९॥ [ स० ४।२।८१ ]

एतेभ्यः समूहे तल् भवति । ग्रामता । जनता । गजता । बन्धुता । सहायता । स्वभावत स्त्रीलिङ्गाः ।

[ग्रामजनबन्धुभ्यस्तल् । पा० ४।२।४३, गजसहायाभ्यां चेति वक्तव्यम् । भाष्यम् । ग्रामजनबन्धुसहायेभ्यस्तल् ।..गजाच्चेति वक्तव्यम् । काशिका ।]

---

1 Hc. नल    2 Mahābhāṣya ऊकिनी

पितृव्यमातामहपितामहाः ॥६०॥

एते शब्दा निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुलोपाध्यायाद् वा [ २।३।५० ] इति [ निपातनात् ] मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः। गौरादित्वान्मातामही पितामही। अविसोढम् अविदूपम् अविमरीसमिति सोढादीनि शब्दान्तराण्यविक्षीरविषयाणि। तथा तिलपिञ्जः तिलपेज इति। तिलपिञ्जतिलपेजशब्दौ निष्फलार्थौ तिलविषयौ।

[ पितृव्यमातुलमातामहपितामहाः। पा० ४।२।३६ पितृमातृभ्यां भ्रातरि व्यड्डुलचौ। मातृपितृभ्यां पितरि डामहच्। मातरि षिच्च। महो वा छन्दस्यानडोऽवग्रहदर्शनात्। अवुर्ग्धे सोढदूसमरीसचः। तिलान्निष्फलात् पिञ्जपेजौ। वा० १-६। पितृमातृभ्यां ०। पितरि डामहच्। मातरि षिच्चा अवेर्दुग्धे०। तिला०। स० ४।२।८२-८६ ]

विषये देशे ॥६१॥

षष्ठ्यन्ताद् विषये देशस्वरूपे यथाविध्यणादयो भवन्ति। शिवीनां विषयो देशः शैवः। औत्सृष्टः। देश इति किम्? देवदत्तस्य विषयोऽनुवाकः, चक्षुषो विषयो रूपम्।

[ विषयो देशे। पा० ४।२।५२, विषयो देशः। स० ४।२।८७ ]

राजन्यादिभ्यो वुञ् ॥६२॥ [ पा० ४।२।५३]

राजन्यादिभ्यः षष्ठ्यन्तेभ्यो विषये वुञ् भवति। राजन्यकः। शैलपकः॥ राजन्य। शिलूप[1]। सालङ्कायन। दैवयातव। जालन्धरायण। वसाति। वैल्वत। उदुम्बर। त्रैकर्णि[2]। आर्जुनायन। सम्प्रिय। दाक्षि। ऊर्णनाभ। आकृतिगणत्वान्मालवकः त्रैगर्तकः वैराटकः।

[ राजन्य-शैलूप-देवयात-वसाति-वैतिल-वसनोदुम्बराऽम्बरीषपुत्र-त्रैकर्णाऽऽर्जुनायन-जालन्धरायण-शालङ्कायनेभ्यो वुञ्। वैल्वदन-बाभ्रव्याऽनृताऽश्मकामेय-सांप्रीय-दाक्षूर्णनाभ-मालव-त्रैगर्त-वैराटिभ्यश्च। स० ४।२।८९-९० ]

भौरिक्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥६३॥

---

[1] शिलूप—MS.

[2] Cf. ii-4-47.

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च षष्ठ्यन्तेभ्यो विषये देशे विधल्भक्तलौ भवतः। भौरिकिविधः। भौलिकिविधः। ऐषुकारिभक्तः। सारस्यायनभक्तः ॥ भौरिकि। भौलिकि। चौपयत। चैटयत। चैकयत[1]। सैकयत[2]। काणेय। भौरिक्यादिः॥ एषुकारि। सारस्यायन। चान्द्रायण। दाक्षायण। खाडायन। सौवीर। दासमित्र। दासमित्रायण। सौभद्रायण। शायण्ड। वैश्वमाणव। वैश्वदेव।

[ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ। पा० ४।२।५४। भौरिकि-भौलिकि-चौपयत-चैटयत-सैकयत-काणेय-वाणिजकेभ्यो विधल्। ऐषुकारि-सौवीर-शयाश्र-शयाण्ड-शयण्ड-शौण्ड-तुण्डदेव-दासमित्रेभ्यो भक्तल्। द्व्यक्ष-त्र्यक्ष-सारस्य-दासमित्र-चान्द्र-शौद्रोत्र-खाडादेरायनात्। वैश्वादिभ्यो देव-धेनव-मानवेभ्यः। स० ४।२।९१-९४ ]

**निवासे तन्नाम्नि** ॥६४॥ [ स० ४।३।९५ ]

षष्ठ्यन्तान्निवासे देशे तन्नाम्नि यथाविध्यणादयो भवन्ति। शिवीनां निवासो देशः शैवः। औतुसुष्टः।

[ तस्य निवासः। तदस्मिन्नस्तीति देशे तन्नाम्नि। पा० ४।२।६९, ६७ ]

**अदूरभवे** ॥६५॥ [ स० ४।२।९६, ०भवश्च। पा० ४।२।७० ]

षष्ठ्यन्तादवूरभवे देशे तन्नाम्नि यथाविध्यणादयो भवन्ति। विदिशाया अदूरभवो देशः वैदिशः, वैहिमतः।

**तेन निर्वृत्ते** ॥६६॥ [ स० ४।२।९७, ० त्तम्। पा० ४।२।६८ ]

तृतीयान्तान्निर्वृत्ते देशे तन्नाम्नि यथाविध्यणादयो भवन्ति। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। सहस्रेण निर्वृत्ता साहस्री परिखा। हेतौ कर्तरि करणे वा यथायोग तृतीया।

**तदिहास्ति च** ॥६७॥ [ स० ४।२।९८ ]

तदिति प्रथमान्तादिहेति सप्तम्यर्थे देशे तन्नाम्नि यथाविध्यणादयो

[1] चैङ्कयत --MS.

[2] सौभ्रायणभक्तः चन्द्रमतेन। GM. शौद्रकायण Hc.

भवन्ति। यत्तत् प्रथमान्तमस्ति चेद्भवति। औदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। वाल्वजः। चकारो निवासाद्यर्थत्रयसन्निधापनार्थः। अतः परं चतुर्ष्वर्थेषु विधिः। आरडवम्। ऐक्ष्वाकवतम्। दैर्घवरत्रः कूपः। दात्तः। साङ्कलः। दात्तामित्री। वैधूमाग्नी। काकन्दी। सौवास्तवः। रौणः। कार्णच्छिद्रकः इत्यणा सिद्धम्। स्वरे विशेषं वक्ष्यामः।

[ तदस्मिन्नस्तीति देशे तन्नाम्नि। पा० ४।२।६७ ]

**वुञ् छण् कठजिलसेनिरढञ् ण्ययफक् फिञिञ् ञ्यकक् ठक् छकीय-ड् मतुवड् लचः ॥ ६८ ॥**

वुञादयः षष्ठ्याद्यन्तेभ्यश्चतुर्ष्वर्थेषु देशे तन्नाम्नि यथायोग भवन्ति। आरोहणकः द्रौघणकः कार्शाश्वीयः आरिष्टीयः ऋष्यकः न्यग्रोधकः। कुमुदिकः शर्करिकः। काशिलः वाशिलः। तृणसा नडसा। प्रेक्षी रिलकी। अश्मरः यूथरः। साखेयः साखिदत्तेयः[1]। साङ्काश्यः काम्पिल्यः। वल्या कुल्या। पाक्षायणः तौपायणः। कार्णायनिः वासिष्ठायनिः। सौतङ्गमिः मौनिचित्तिः[2]। प्रागग्रम् मागग्रम्। वाराहकम् शैरीषकम्। कौमुदिकम् गौमठिकम्। उत्करीयम् शफरीयम्। नडकीयम् प्लवकीयम्। कुमुद्वान् वेतस्वान् महिष्मान्, महिष्मति भवा माहिष्मती। नड्वल. शाद्वलः। शिखावलम् इति मत्वर्थीयान्तं देशनाम। देशनाम्नो यथादर्शनमवस्थानादनर्थकोऽत्र गणे पाठः[3]। पञ्चाला इति जनपदस्यापि नाम। अणन्तं तु जनपदनाम न भवतीति नातोऽण् भवति। किञ्चिदणन्तमपि दृश्यते—वैदिशो जनपदः, औदुम्बर इति। वरणा इति नगरस्यापि नाम, गोदाविति ग्रामस्यापि। तथा हि कटुकबदरी ग्रामः, शिरीषा ग्राम इत्यादि दृश्यते। शर्करेत्यपि देशनाम, शार्करमित्यणा सिद्धम्, शार्करिकमिति ठका, शर्करकमिति केन, शर्करीयमिति छेन। उदुम्बरावती इक्षुमतीति मत्वन्तं नदीनाम। भागीरथी भैमरथी सौवास्तवीत्यणन्तमपि दृश्यते। मधुमान् स्थाणु-

[1] साखिदात्तेयः—MS. [2] मौनचित्तिः—MS. [3] गणपाठः—MS.

भवन्ति। यत्तत् प्रथमान्तमस्ति चेद्भवति। औदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। बाल्वजः। चकारो निवासाद्यर्थत्रयसन्निधापनार्थः।" अत. परं चतुर्ष्वर्थेषु विधिः। आरडवम्। ऐक्कटवतम्। दैर्घवरत्रः कूपः। दात्तः। साङ्कलः। दात्तामित्री। वैधूमाग्नी। काकन्दी। सौवास्तवः। रौणः। कार्णच्छिद्रक. इत्यणा सिद्धम्। स्वरे विशेषं वक्ष्यामः।

[ तदस्मिन्नस्तीति देशे तन्नाम्नि। पा० ४।२।६७ ]

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठक्छकीयड्मतुवड्लचः॥ ६८॥**

वुञादयः षष्ठ्याद्यन्तेभ्यश्चतुर्ष्वर्थेषु देशे तन्नाम्नि यथायोग भवन्ति। आरोहणकः द्रौघणकः काशदिवीयः आरिष्टीयः ऋष्यकः न्यग्रोधकः। कुमुदिकः शर्करिकः। काशिलः वाशिलः। तृणसा नडसा। प्रेक्षी रिलकी। अश्मरः यूथरः। साखेयः साखिदत्तेयः[1]। साङ्काश्यः काम्पिल्यः। वल्या कुल्या। पाक्षायणः तौपायणः। कार्णायनिः वासिष्ठायनिः। सौतङ्गमिः मौनिचित्ति.[2]। प्रागय्यम् मागय्यम्। वाराहकम् शैरीषकम्। कौमुदिकम् गौमठिकम्। उत्करीयम् शफरीयम्। नडकीयम् प्लवकीयम्। कुमुद्वान् वेतस्वान् महिष्मान्, महिष्मति भवा माहिष्मती। नड्वलः शाद्वलः। शिखावलम् इति मत्वर्थीयान्तं देशनाम। देशनाम्नो यथादर्शनमवस्थानादनर्थकोऽत्र गणे पाठः[3]। पञ्चाला इति जनपदस्यापि नाम। अणन्तं तु जनपदनाम न भवतीति नातोऽण् भवति। किञ्चिदणन्तमपि दृश्यते—वैदिशो जनपदः, औदुम्बर इति। वरणा इति नगरस्यापि नाम, गोदाविति ग्रामस्यापि। तथा हि कटुकवदरी ग्रामः, शिरीषा ग्राम इत्यादि दृश्यते। शर्करेत्यपि देशनाम, शार्करमित्यणा सिद्धम्, शार्करिकमिति ठका, शर्करकमिति केन, शर्करीयमिति छेन। उदुम्बरावती इक्षुमतीति मत्वन्तं नदीनाम। भागीरथी भैमरथी सौवास्तवीत्यणन्तमपि दृश्यते। मधुमान् स्थाणु-

---

[1] साखिदत्तेयः—MS.। [2] मौनचित्तिः—MS. [3] गणपाठः —MS.

मान् इत्यादीन्यपि मत्वन्तानि देशनामानि। माधव इत्यादीनि तु न देशनामानीति नातोऽण् भविष्यति।

इति चान्द्रे व्याकरणे तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः।

[ वुञ्-छण्-कठजिल-सेनि-र-ढञ्-ण्य-य-फक्-फिञ्-इञ्-ञ्य-कक्-ठकोऽरीहण-कृशाश्वर्श्य-कुमुद-काश-तृण-प्रेक्षाऽश्म-सखि-सङ्काश-बल-पक्ष--कर्ण-सुतङ्गम-प्रगदिन्-वराह-कुमुदादिभ्यः। पा० ४।२।८०॥ अरीहण-द्रुहण-किरण-साम्परायणौष्ट्रायण- भास्त्रायण-मैत्रायण-त्रैगर्तायन-वैमतायन-गौमतायन-सौमतायन-लाडायन-शाण्डिल्यायनोद्दण्ड-खण्ड-वीरणोदञ्चलेभ्यो वुञ्। खदिर-बधिर-भगलोलन्द-विपथ-रैवत-विपाश-काशकृत्स्न-शिंशपा-शिरीष-बिल्व-जम्बू-जाम्बवत्-सुयज्ञ-सुशर्मन्-रायस्पोषेभ्यश्च। कृशाश्वाऽरिष्टाऽरिश्म-विशाल-रोमश-रोमक-सुवर्चल-शबल-सूकर-प्रतर-पुरट-सुदृशेभ्यश्छण्। सुख-धूमाऽजिनाऽभिजन-विनताऽवनत-विकुड्यास-कुट-मौद्गल्याऽयोरः-पाराशरेभ्यश्च। ऋश्य-न्यग्रोध-शर-निलीन-निधान-निबन्ध-कर्दम-परिगूढोपगूढाऽश्मोत्तराश्माऽशनिभ्यः। खण्ड-दण्ड-स्थूल-बाहु-वेणु-वीरण-खदिर-परिवृत्त-परिवंश-वेश्मांऽशु-शर्कराऽरट्टुभ्यश्च। कुमुद-बीज-बल्बज-शिरीषाऽश्वत्थ-न्यग्रोध-यवास-विकङ्कतेतत्कट-शकट-कङ्कट-दशग्राम-गर्त-शर्करा-परिवाप-कूपेभ्यष्ठच्। काश-पाश-पलाशाऽश्वत्थ-पीयूष-वास-बिस-तृण-वन-नड-कर्दम-कर्पूर-बर्बर-बन्धूल-कण्टक-गुहाभ्य इलः। तृण-नड-जन-पर्ण-वर्णाऽर्ण-वरण-बल-बुसेभ्यः सः। प्रेक्षा-फलका-बन्धुका-ध्रुवका-धुवका-युवका-क्षिपका-कूपक-डुक-बुकेत्केट-कङ्कट-शङ्कट-महत्-न्यग्रोधेभ्य इनिः। अश्मन्नूष-यूष-मीन-नद-गर्भ-गह्व-गुड-नग-खण्ड-शिखा-कोट-पामन्-वृन्द-कन्देभ्यो रः। सख्यग्निदत्त-दत्त-वायुदत्त-गोभिल-भल्ल-भल्लपाल-रोह-तमाल-कदर-करवीराशोकेभ्यो ढक्। चक्र-चक्रवाक-कुशीरक-सरक-सुरस-सरस-सरम-समल-सप्तल-चछगलेभ्यश्च। सङ्काश-कश्मीर-काम्पिल-शूरसेन-यूप-कुम्भ-सूर-सरक-समलांऽस-सेना-साश्म-रोम-लोमभ्यो ण्यः। कुट-तीर्थ-पुलिन-मलिनाऽगस्ति-विरत्न-विकर-सुपथिन्-सुपन्थि-दशिनल-नासिकाऽङ्ग-सकर्णकेभ्यश्च। बल-बुल-मूलोल-कुलोरल-सुल-लुकुल-वनेभ्यो यः। पक्ष-तुष-चित्र-कुण्डाऽण्ड-कम्बलिकांऽशुक-कुम्भ-सीरक-सरक--सरस-समलेभ्यः फक्। यमल-बिल-हस्त-हस्तिन्-सिद्धक-सकर्णक-रोम-लोमाऽतिश्वेभ्यः। पथः पन्थ च। कर्ण-वसिष्ठाऽर्काऽर्कलूषाऽनडुह्-जित्र-जीवन्त-कुलिश-कुम्भ्याण्डीवताऽनक-स्फिक्-पञ्चजनेभ्यः फिञ्। सुतङ्गम-मुनिचित्त-विप्रचित्त-महाचित्त-महापुत्र-श्वेतगडिक-जीवाऽजिराऽर्जुन-बीजवापि-शुचि-शुक्र-विप्रेभ्य इञ्। प्रगदि-मगदि-कलिव-खडिव-गडिव-चूडार-

मार्जार-कोविदारेभ्यो ञ्यः। वराह-पलाश-शिरीष-निबद्ध-पिनद्ध-स्थूल-खदिर-शर्करा-बाहु-विदग्ध-विभग्न-निमग्नेभ्यः कक्। कुमुद-कुमुट-कुण्डल-मुनिस्थलाऽश्वत्थ-शाल्मलि-दशग्राम-गोमठ-रथकार-शर्करा-मधुकर्ण-शिरीषेभ्यष्ठक्। स० ४।२।११३-१२६ ]

शेषे ॥ १ ॥ [ पा० ४।२।९२, स० ४।३।१ ]

उक्तादन्यस्मिन्नर्थे यथाविहितमणादयो भवन्ति। चक्षुषा गृह्यते रूपम् चाक्षुषम्। श्रावणः शब्दः। रासनो रसः। स्पार्शनः स्पर्शः। चतुर्दश्यां दृश्यते रक्षः चातुर्दशम्। दृषदि पिष्टाः सक्तवः दार्षदाः। उदूखलेषु क्षुण्णा यवा औदूखला.। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्।

राष्ट्राद् घः ॥ २ ॥ [ स० ४।३।२ ]

राष्ट्राच्छेषे घो भवति। राष्ट्रियः।

[ राष्ट्रावारपाराद् घखौ। पा० ४।२।९३ ]

पारावारावारपारात् खः ॥ ३ ॥

पारादवारात् पारावारादवारपाराच्च शेषे खो भवति। पारीणः अवारीणः पारावारीणः अवारपारीणः।

[ पारावारात् खः। व्यस्तविपर्यस्ताच्च। स० ४।३।३-४, अवारपाराद् विगृहीतादपि। विपरीताच्च। पा० ४।२।९३।१-२ ]

ग्रामाद् यखञौ ॥ ४ ॥ [ पा० ४।२।९४, स० ४।३।५ ]

ग्रामाच्छेषे यखञौ भवतः। ग्राम्य. ग्रामीणः।

कत्त्र्यादिभ्यो ढकञ् ॥ ५ ॥ [ पा० ४।२।९५ ]

कत्त्र्यादिभ्यो ग्रामाच्च शेषे ढकञ् भवति। कात्त्रेयकः औम्भेयकः ग्रामेयकः॥ कत्त्रि। उम्भि। पुष्कर। पुष्कल। मोदन। कुण्डिना। नगरी। माहिष्मती। वर्मती। कुड्याया यलोपश्च। कौडेयकः। कौलेयक इति कुलादस्त्यं ढकञ्। कौशेयको ग्रैवेयक इति भवे ढकञ्, स्वार्थे कन्। मुनि गहने भूषणे च कविरेषाम्।

[ कत्त्र्यादिभ्यो ढकञ् । पा० ४।२।९५ कत्त्र्यग्नि-कुम्भि-कुण्डिन-पुष्कर-पुष्कल मोदन-माहिष्मती-वर्मती-नगरेभ्यो ढकञ् । कुडग्राया यलोपश्च । स० ४।३।६-७ । कुल-कुक्षि-ग्रीवाभ्यः श्वास्यलङ्कारेषु । पा० ४।२।९६, स० ४।३।८ ]

**नद्यादिभ्यो ढक् ॥६॥ [ पा० ४।२।९७ ]**

नद्यादिभ्यः शेषे ढग् भवति । नादेयम् माहेयम् ॥ नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । वनकौशाम्बी । काशफरी । पूर्वनगरी । केचित् पुर् वन गिरीति पठन्ति, तेषां पौरेयम् वानेयम् गैरेयम् । पावा । वामा । शाल्वा । सेतकी । वडवाया वृषे ।

[ नदी-मही-सेतिकी-श्रावस्ती-वाराणसी-कौशाम्बी-नवकौशाम्बी-काशफरी-खादिरी-पाठा-मायरा-साल्वा-दार्वा-पूर्वनगरी-पूर्व-नगरेभ्यो ढक् । वडवाया वृषे । स० ४।३।९-१० ]

**दक्षिणापश्चात्पुरसस्त्यक् ॥७॥ [ पा०४।२।९८, स० ४।३।११ ]**

दक्षिणादिभ्यः शेषे त्यग् भवति । दाक्षिणात्यः पाश्चात्यः पौरस्त्यः ।

**वह्ल्वर्दि पर्दि कापिशीभ्यः ष्फक् ॥८॥ [ स० ४।३।१२ ]**

एतेभ्य. शेषे ष्फग् भवति । वाह्लायनः और्दायनः पार्दायनः कापिशायनी द्राक्षा ।

[ कापिश्याः ष्फक् । पा० ४।२।९९, बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् । भाष्यम् । ]

**रङ्कोः प्राणिनि वा ॥९॥ [ स० ४।३।१३ ]**

रङ्कोः प्राणिन्यभिधेये ष्फग् वा भवति । राङ्कवायनो गौः, राङ्कवः । प्राणिनीति किम् ? राङ्कवः कम्बलः । मनुष्ये तु [४८] कच्छादिपाठाद् वुञ् । राङ्कवो मनुष्यः ।

[ रङ्कोरमनुष्येऽण् च । पा० ४।२।१०० ]

**द्युप्रागपागुदक्प्रतीचो यत् ॥१०॥ [ पा० ४।२।१०१, स० ४।३।१४ ]**

एभ्यः शेषे यद्भवति । दिव्यः प्राच्यः अपाच्यः उदीच्यः प्रतीच्यः । कालवाचिनोऽसंख्यात् परत्वाट् ट्युर्भवति । प्राक्तनम् ।

**कन्थायाष्ठक् ॥ ११ ॥** [पा० ४।२।१०२, स० ४।३।१५]

कन्थायाः शेषे ठग् भवति । कान्थिकः ।

**वर्णौ वुक् ॥ १२ ॥** [पा० ४।२।१०३, स० ४।३।१६]

वर्णुर्नाम नदस्तस्यादूरभवो जनपदोऽपि वर्णुः, तत्र या कन्था ततः शेषे वुग्भवति । कान्थकः ।

**क्वामेहत्रतसस्त्यप् ॥ १३ ॥** [०तसिभ्यस्त्यप् । स० ४।३।१७]

क्व अमा इह इत्यतेभ्यस्त्रतसन्ताच्च शेषे त्यब् भवति । क्वत्यः अमात्यः इहत्यः तत्रत्यः ततस्त्यः । नित्यमिति निपातनात् [२।२।३८] सिद्धम् ।

[*अव्ययात् त्यप् । पा० ४।२।१०४, अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः । श्लोकवार्त्तिकम्*]

**निसो गते ॥ १४ ॥** [स० ४।३।१९ पा० ४।२।१०४ भाष्यम्]

निसो गते त्यब् भवति । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः ।

**ऐषमोह्यःश्वसो वा ॥ १५ ॥** [स० ४।३।२०]

एभ्यः शेषे त्यब् वा भवति । ऐषमस्त्यः ऐषमस्तनः । ह्यस्त्यः ह्यस्तनः । श्वस्त्यः श्वस्तनः ।

[ऐषमोह्यःश्वसोऽन्यतरस्याम् । पा० ४।२।१०५]

**दूरेत्यौत्तराहौ ॥ १६ ॥**

शेषे दूरादेत्य उत्तरादाहञ् निपात्यते । दूरेत्यः औत्तराहः ।

[दूरादेत्यः । उत्तरादाहञ् । पा० ४।२।१०४ भाष्यम् । स० ४।३।२१-२२]

**णोऽरण्यात् ॥ १७ ॥**

अरण्याच्छेषे णो भवति । आरण्याः सुमनसः ।

[अरण्याण्णः । पा० ४।२।१०४ भाष्यम् । स० ४।३।२३]

**रूप्यान्ताम् मः ॥ १८ ॥** [स० ४।३।२५]

रूप्यान्ताच्छेषे ञो भवति। कार्करूप्यः[1]। शैवरूप्यः। [2]काश्यतीरमित्यणा सिद्धम्।

[तीररूप्योत्तरपदादञ्ञौ। पा० ४।२।१०६, तीरान्तादञ्। स० ४।३।२४]

**दिगादेरनाम्न्यमद्रात्॥ १९॥**

दिक्पूर्वादमद्रादसंज्ञायां शेषे ञो भवति। पौर्वशालः दाक्षिणशालः। अनाम्नीति किम्? पूर्वेषुकामशमः। प्राचां ग्रामाणाम् [६।१।२५] इत्युत्तरपदस्यादैच्। अमद्रादिति किम्? पौर्वमद्रः पौर्वमद्री।

[दिक्पूर्वपदादसंज्ञायां ञः। (स०। ०संज्ञायाम्।) मद्रेभ्योऽञ्। पा० ४।२।१०७-१०८, स० ४।३।२६-२७]

**वाहीकादिभ्योऽण्॥ २०॥**

वाहीकादिभ्यः शेषेऽणेव भवति। वाहीकः वाहीकी। छापवादः पाटच्चरः, गौमतः। वुञोऽपवादः। गोष्ठी[3], नैकती। वाहीकग्रामी। ताभ्यां ठञ्ञिकयोरपवादः। उदीच्यग्रामाद् बह्वचोऽन्तोदात्तात् प्रस्थोत्तरपदात् ककारापान्तादन्यतश्च पलद्यादिभ्यो वाहीकादिवर्जितेभ्यः पूर्वक एवाण्।

[उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्। प्रस्थोत्तरपदपलद्यादिकोपधादण्। पा० ४।३।१०९-११०, उदीच्यग्रामाद्बह्वचोऽन्तोदात्तात्। वाहीक-रोमक-पटच्चर-गोमती-गोष्ठीनैकतीभ्योऽण्। प्रस्थोत्तरपदकोपधेभ्यश्च। पलदी-परिषत्-परिखोदपान-शूरसेन-सकुल्लोमभ्यः। कमलाद् भिदा-कीकराभ्याम्। बहु-जाल-कलेभ्यश्च कीटात्। स० ४।३।२८-३३]

**शकलादिभ्यो गोत्रात्॥ २१॥** [स० ४।३।३४]

शकलादिभ्यो गोत्रे यो विहितस्तदन्ताच्छेषेऽण् भवति। छापवादः। शाकल्यस्यच्छात्राः शाकलाः। काण्वाः गौकक्षाः। गोत्रादिति किम्? कण्वादागतः काण्वः। तस्यच्छात्राः काण्वीयाः।

---

[1] Kās'ikā, Hc. and others have वार्करूप्य which appears to be the correct reading.

[2] Kāś. has काकतीरम्.

[3] गोष्ठी—MS.

[ कण्वादिभ्यो गोत्रे । पा० ४।२।१११ ]

**इञः** ॥ २२ ॥ [ इञश्च । पा० ४।२।११२, स० ४।३।३५ ]

इञन्ताद् गोत्राच्छेषेऽण् भवति । दाक्षेश्छात्राः दाक्षाः । गोत्रादित्येव । सौतङ्गमेन निर्वृत्तः सौतङ्गमिः, तत्र भवः सौतङ्गमीयः ।

**न द्व्यचः प्राच्यात्** ॥ २३ ॥ [ स० ४।३।३६ ]

द्व्यच इञन्तात् प्राच्याद् गोत्राच्छेषेऽण् न भवति । चैङ्कीयाः पौष्पीयाः । द्व्यच इति किम् ? पान्नागाराः । प्राच्यादिति किम् ? दाक्षाः ।

[ न द्व्यचः प्राच्यभरतेषु । पा० ४।२।११३ ]

**आदैजाद्यचश्छः** ॥ २४ ॥

आदैच आदयो येषामचां ते यस्य ततः शेषे छो भवति । शैलीयः ऐतिकायनीयः औपगवीयः । आदिग्रहणं किम् ? सभासन्नयने भवः साभासन्नयनः । अज्ग्रहणं किम् ? हलादेरपि यथा स्यात् ।

[ वृद्धाच्छः । पा० ४।२।११४, स० ४।३।३७ ]

**एङाद्यचः प्राग्देशात्** ॥ २५ ॥

एङ् आदयो यपामचां/ ते यस्य ततः प्राग्देशाच्छेष छो भवति । एणीपचनीयः, गोनर्दीयः । प्रागिति किम् ? देवदत्तो नाम वाहीकग्रामस्तत्र भवो दैवदत्तः । देशादिति किम् ? गौमयाः क्रिमयः ।

[ एङ् प्राचां देशे । पा० १।१।७५, एङाद्यच् प्राग्देशात् । स० ४।३।३८ ]

**नृनाम्नो वा** ॥ २६ ॥ [ स० ४।३।३९ ]

मनुष्यनाम्न एङाद्यचः शेषे छो भवति वा । देवदत्तीयाः दैवदत्ताः ।

[ वा नामधेयस्य । पा० १।१।७३।५ ]

**गोत्रान्ताचद्वदजिह्वाकात्यहरितकात्यात्** ॥२७॥ [स० ४।३।४०]

गोत्रं यत्तदन्ताज्जिह्वाकात्यहरितकात्यवर्जिताद् गोत्रादिव छो

पैङ्गलकाण्वाः पैङ्गलदाक्षाः। अजिह्वाकात्यहरितकात्यादिति किम्? जैह्वकाताः, हरितकाताः।

[गोत्रान्ताद्वासमस्तवत्। जिह्वाकात्यहरितकात्यवर्जम्। पा० १।१।७३।७-८]

**त्यदादिभ्यः** ॥ २८ ॥ [स० ४।३।४१]

त्यदादिभ्यः शेषे छो भवति। त्यदीयः तदीयः यदीयः।

[त्यदादीनि च। पा० १।१।७४]

**भवतो दश्च** ॥ २९ ॥ [स० ४।३।४२]

भवतस्तदादित्वादेव छः सिद्धः। अन्तादेशस्तु दकारो विधीयते। भवदीयः। शत्रन्तस्य तु भवत इदं भावतम्।

[भवतष्ठक्छसौ। पा० ४।२।११५, सिति च। पा० १।४।१६]

**ठञ्** ॥ ३० ॥ [ठञ् च। स० ४।३।४३]

भवत· शेषे ठञ् भवति। भावत्कम्।

[भवतष्ठक्छसौ। पा० ४।२।११५]

**ओर्देशात्** ॥ ३१ ॥ [स० ४।३।४४]

उवर्णान्ताद्देशवाचिन· शेषे ठञ् भवति। शावरजम्बुकः नपादकर्पुकः[1]। देशादिति किम्। पटोश्छात्रा· पाटवाः।

[ओर्देशे ठञ्। पा० ४।२।११९]

**प्राच्याच्छे** ॥ ३२ ॥ [स० ४।३।४५]

उवर्णान्तात् प्राच्यदेशाच्छविषय एव ठञ् भवति। नापितवास्तुकः। छ इति किम्? माल्लवास्तव·।

[वृद्धात् प्राचाम्। पा० ४।२।१२०]

**काश्यादिभ्यो ञिकश्च** ॥ ३३ ॥

काश्यादिभ्यः शेषे ञिको भवति ठञ् च। काशिका काशिकी। काचिका काचिकी। वैदिका वैदिकी। देशादित्येव। काशीयाश्छात्राः। प्राच्यादित्येव। दैवदत्त·। छ इत्यनुवर्तमानमपि पठितेष्वकिञ्चित्-

[1] Kas'. and others have नैपादकर्युकः नैपाद० MS.

करम् ॥ काशि । काचि[1] । बेदि[2] । सांयाति । संवाह । अच्युत । मोदमान । शकुलाद । हस्तिकर्पू । कुलनामन् । हिरण्य । करण[3] । गोवासन । गोपवन । भारङ्गि । सारङ्गि । अरिन्दम । सधमित्र । साधुमित्र । सर्वमित्र । देवदत्त । दासमित्र । दासग्राम । शौवावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । आपदादिपूर्वात् कालान्तात् । आपत्कालिका, आपत्कालिकी । और्ध्वकालिका, और्ध्वकालिकी । तात्कालिका, तात्कालिकी[4] ।

[ काश्यादिभ्यष्ठञ् ञिठौ । पा० ४।२।११६, काशि-चेदि-सांयाति-भारङ्गि-दासग्राम-सौधावतान-मोदन-मोदमान-गोवासन-देवदत्ताञ्ञ्ञिठश्च । संवाहाऽच्युत-शकुलादाऽरिन्दम-करण-कुनामन्-हिरण्याऽरिन्न-हस्तिकर्पूभ्यश्च । सुधा-सिन्धु-दासेभ्यो मित्रात् । युवोपदेवेभ्यो राजात् । ऊर्ध्वादिभ्यः कालात् । स० ४।३।४६-५०]

**वाहीकग्रामात्** ॥३४॥

वाहीकग्रामवाचिनश्छविषयो ञिको भवति, ठञ् च । शाकलिका । शाकलिकी । मान्थविका । मान्थविकी । छ इत्येव । मडनगरे भवः माडनगरः । देवदत्तात्तु पूर्वसूत्रे प्राच्यानुवृत्तिसामर्थ्यादिनेनापि न भवति ।

[ वाहीकग्रामेभ्यः । स० ४।३।५१, ०मेभ्यश्च । पा० ४।२।११७ ]

**वोशीनरेषु** ॥३५॥ [ स० ४।३।५२ ]

उशीनरेषु यो ग्रामस्ततश्छविषये ञिको वा भवति, ठञ् च । आह्वजालिका आह्वजालिकी आह्वजालीया ।

[ विभाषोशीनरेषु । पा० ४।२।११८ ]

**प्रस्थवहपुरान्तयोपान्तधन्वार्थाद् वुञ्** ॥३६॥

[1] काचि is evidently for काञ्चि which must have been written in MSS. as काचि

[2] All other Ganas contain चेदि which appears to be the correct reading.

[3] वारण—MS.

[4] औपकालिका, औपकालिकी—MS.

प्रस्थाद्यन्ताद् यकारोपान्ताद् धन्वार्थवाचिनश्च छविषये वुञ् भवति। मालाप्रस्थकः पैलुवहकः नान्दीपुरकः। रोपान्ताद् [ ३।२।३७ ] इति सिद्धेऽप्राच्यार्थं पुरान्तग्रहणम्। योपान्तात्। साङ्काश्यकः काम्पिल्यकः। धन्वार्थात्। पारेधन्वकः। ऐरावतकः। छ इत्येव*। शैवपुरः।

[ धन्वयोपधाद् वुञ्। प्रस्थपुरवहान्ताच्च। पा० ४।२।१२१-१२२; प्रस्थवहपुरान्तयोपधधन्वार्थेभ्यो वुञ्। स० ४।३।५३ ]

**रोपान्तेतः प्राच्यात्** ॥३७॥

रेफोपान्तादिकारान्ताच्च प्राच्याद्देशाच्छविषये वुञ् भवति। पाटलिपुत्रकः ऐकचक्रकः। काकन्दकः माकन्दकः। प्राच्यादिति किम्? दान्ता(त्ता?)मित्रीयः। छ इत्येव। दाशपुरः।

[ रोपधेतः प्राचाम्। पा० ४।२।१२३, ईद्रोपधेभ्यः प्राचाम्। स० ४।३।५४]

**जनपदेभ्यः** ॥३८॥

जनपदवाचिभ्यश्छविषये वुञ् भवति। आभिसारकः। आदर्शकः। व्यक्तिभेदेषु बहुवचनादपवादविषयेऽपि भवति। अभिसारगर्तकः।

[ जनपदतदवध्योश्च। पा० ४।२।१२४, जनपदेभ्यस्तदवधिभ्यश्च। स० ४।२।५५ ]

**बहुत्वविषयेभ्यः** ॥३९॥

बहुत्वविषयेभ्यो जनपदेभ्यः शेषे वुञ् भवति। अङ्गेषु भव आङ्गकः। वाङ्गकः। व्यक्तिभेदेषु बहुवचनादपवादविषयेऽपि भवति। त्रैगर्तकः। विषयग्रहणं किम्? वर्तनिषु भवः वार्तनः। अत्र हि देशभेदाद् बहुत्वम्।

[ अवृद्धादपि बहुवचनविषयात्। पा० ४।२।१२५, अवृद्धेभ्योऽपि बहुवचनविषयेभ्यः। स० ४।३।५६ ]

**कच्छाग्निवक्त्रवर्तान्तात्** ॥ ४० ॥

---

* छ (= छे) इत्येव occurs under the next rule and also in the Hṛdayahāriṇī. छविषय० would make the meaning clear.

कच्छाद्यन्ताद्देशवाचिनः शेषे वुञ् भवति। भारुकच्छकः। कालाग्नकः। सैन्धुवक्त्रकः। चाक्रवर्तकः।

[कच्छाग्निवक्त्रगर्तोत्तरपदात्। पा० ४।२।१२६। कच्छाऽग्नि-वक्त्र-वर्तान्तेभ्यः। स० ४।३।५७]

धूमादिभ्यः ॥४१॥ [धूमादिभ्यश्च। पा० ४।२।१२७]

धूमादिभ्यो देशवाचिभ्यः शेषे वुञ् भवति। धौमकः। पाडाण्डकः॥ धूम। षडाण्ड। शशादन। अर्जुनाव[1]। दाण्डायनस्थली। माहकस्थली[2]। राजगृह। राजस्थली। सत्रासाह। यवासाह। भक्षाली। मित्रकुल। अञ्जीकुल। मद्रकुल। द्व्याहाव[3]। त्र्याहाव[4]। संस्तीय[5]। संस्फीय। बर्बर। गर्त। विदेह। आनर्त। पाथेयः। विदेहानर्तपाथेयानां पूर्वेण सिद्धत्वाददेशार्थं वचनम्। माठर। घोष। शष्प। वल्ली। आराज्ञी। धार्तराज्ञी। अवयात्तीर्थे। कूलात्[6] सौवीरेषु। समुद्रान्नावि मनुष्ये च। कुक्षि। द्वीप। अन्तरीप। अरुण। उज्जयनी। दक्षिणापथ। साकेत।

[धूम-षण्ड-शशादनाऽर्जुनाव-राजगृह-गर्त-सत्रासाह-साकेत-संस्तीयाऽवयान्तरीप-द्वीपेभ्यः। तीर्थ-घोष-शष्प-मित्र-वर्चाऽरुण-कुक्षि-बर्बरोज्जयिनी-पल्ली-भक्षाली-दक्षिणापथेभ्यः। द्व्याहाव-त्र्याहावाऽञ्जिकूल-मद्रकूलाऽराज्ञी-धार्तराज्ञी-पद्वार-माठर-विदेहाऽनर्त-पाटेय-पाथेयेभ्यः। माहक-मद्रक-माष-घोष-राजाऽष्ट्र-मान-दाण्डायनेभ्यः स्थल्याः। कूलात् सौवीरेषु। समुद्रान्नौमनुष्ययोः। स० ४।३।५८-६३ कूलात् सौवीरेषु। समुद्रान्नावि मनुष्ये च। पा० ४।२।१२७ ग० सू०]

नगरात् कुत्साप्रावीण्ययोः ॥४२॥ [स० ४।३।६४]

नगराच्छेषे कुत्सने प्रावीण्ये च गम्यमाने वुञ् भवति। चौरा हि नागरका भवन्ति। प्रवीणा हि नागरका भवन्ति। कुत्साप्रावीण्ययो-रिति किम्? नागरा ब्राह्मणा।

[नगरात् कुत्सनप्रावीण्ययोः। पा० ४।२।१२८]

**अरण्यात् पथिन्यायाध्यायहस्तिनरविहारेषु** ॥४३॥ [स० ४।३।६५]

अरण्यात् पथ्यादिषु वुञ् भवति। आरण्यकः पन्था न्यायोऽध्यायो हस्ती मनुष्यो विहारश्च। एतेष्विति किम्? आरण्याः पशवः।

[अरण्यान्मनुष्ये। पा० ४।२।१२९, पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्। भाष्यम्]

**वा गोमये** ॥४४॥ [स० ४।३।६६]

अरण्याद् गोमये वा वुञ् भवति। आरण्यको गोमयः, आरण्यः।

[वा गोमयेष्विति वक्तव्यम्। पा० ४।२।१२९ भाष्यम्]

**कुरुयुगन्धरात्** ॥४५॥ [० राभ्याम्। स० ४।३।६७]

कुरुयुगन्धराभ्यां वुञ् भवति वा। कुरुषु भवः कौरवकः कौरवः। {४८} कच्छादिपाठान्मनुष्यतत्स्थयोर्नित्यम्। कौरवको मनुष्यः। कौरवकमस्य हसितम्। यौगन्धरकः यौगन्धरः।

[विभाषा कुरुयुगन्धराभ्याम्। पा० ४।२।१३०]

**वृजिमद्रात् कन्** ॥४६॥ [०मद्राभ्यां कन्। स० ४।३।६८]

एताभ्यां शेषे कन् भवति। वृजिषु भवः वृजिकः। मद्रकः।

[मद्रवृज्योः कन्। पा० ४।२।१३१]

**कोपान्तादण्** ॥४७॥

ककारोपान्ताद् देशाच्छेषेऽण् भवति। ऋषिकेषु भव आर्षिकः। इक्ष्वाकुषु भव ऐक्ष्वाकः।

[कोपधादण्। पा० ४।२।१३२, स० ४।३।६९]

**कच्छादिभ्य** ॥४८॥ [०च। पा० ४।२।१३३]

कच्छादिभ्यो देशेभ्य. शेषेऽण् भवति। काच्छ.। सैन्धव.॥ कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। शाल्व। कुरु। अनुषण्ड। द्वीप। अनूप। अजवाद। विजापक। कुलून। रङ्कु[1]।

[1] आन्नारः। चन्द्रमतेन। आन्तरीपः। आजवाप:। इयं चन्द्रमतेन गणरत्नमहोदधिः।

[ कच्छ-कुरु-सिन्धु-सिन्ध्वन्त-गन्धारि-कुलूक-कम्बोज-कश्मीर-मधुमद्-वर्णु-रङ्कु-द्वीपाऽनूपाऽनुपण्ड-विजापकाऽजवाह-साल्वेभ्यश्च । स० ४।३।७० ]

**नृतत्स्थयोर्वुञ्** ॥४९

कच्छादिभ्यो मनुष्ये मनुष्यस्थे च वुञ् भवति । काच्छको मनुष्यः । काच्छकमस्य हसितम् । सैन्धवको मनुष्यः सैन्धवकमस्य हसितम् ।

[ मनुष्यतत्स्थयोर्वुञ् । पा० ४।२।१३४, स० ४।३।७१ ]

**शाल्वाद् गोयवाग्वोः** ॥५०॥ [ ०ग्वोश्च । स० ४।३।७२ ]

शाल्वाद् गवि यवाग्वां च वुञ् भवति । शाल्वको गौः, शाल्विका यवागूः ।

[ अपदातौ साल्वात् । गोयवाग्वोश्च । पा० ४।२।१३५-१३६ ]

**न पदातौ** ॥५१॥ [ स० ४।३।७३ ]

शाल्वात् पदातौ वुञ् न[1] भवति । शाल्वः पदातिर्व्रजति ।

**गर्तान्ताच्छः** ॥५२॥ [ स० ४।३।७४ ]

गर्तान्ताच्छेषे छो भवति । वृकगर्तीयः श्वाविद्गर्तीयः । देशाधिकाराद् बहुच्पूर्वान्न भवति । बाहुगर्तः । न च सम्भवन्त्यां गतौ यथाकथञ्चिद् देशे वर्तमानस्य ग्रहणं युक्तम् ।

[ गर्तोत्तरपदाच्छः । पा० ४।२।१३७ उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् । काशिका]

**कटादेः प्राच्यात्** ॥ ५३ ॥ [ स० ४।३।७५ ]

कटादेः प्राग्देशाच्छेषे छो भवति । कटनगरीयः कटघोषीयः । प्राच्यादिति किम् ? काटनगरः ।

[ प्राचां कटादेः । पा० ४।२।१३९ ]

**कखोपान्तकन्थापलदनगरग्रामह्रदान्ताच्छे** ॥५४॥

ककारखकारोपान्तात् कन्थाद्यन्ताच्च छविषये छ एव भवति । बाधकबाधनार्थं आरम्भः । आरोहणकीयः आरवतियकीयः[2] । एणीकीयः[3]

---

[1] न omitted in L.  [2] आदवरयकीयः—MS.  [3] ऐणिकीयः—MS.

सौसुकीयः[1]। कोपान्तादणि प्राप्ते। खोपान्तात्। आयोमुखीयः कौटिशिखीयः। रोपान्तेतः प्राच्यात् [ ३।२।३७ ] इति वुञ्नि प्राप्ते। दाक्षिकन्थीयः। दाक्षिपलदीयः। दाक्षिनगरीयः। माहकिग्रामीयः। माहकिह्लदीयः। वाहीकग्रामात् [ ३।२।३४ ] इति ठञ्ञिकयोः प्राप्तयोरपवादः। छ इति किम् ? आर्पिकः माडनगरः।

[वृद्धादकेकान्तखोपधात्। कन्थापलदनगरग्रामह्रदोत्तरपदात्। पा० ४।२। १४१-१४२, कखोपधकन्थापलदनगरग्रामह्रदान्ताच्छे। स० ४।३।७६]

**पर्वतात्॥ ५५॥** [ स० ४।३।७७ ]

पर्वताच्छेषे छो भवति। पर्वतीयः।

[ पर्वताच्च। पा० ४।२।१४३ ]

**अनरे वा॥ ५६॥** [ स० ४।३।७८ ]

अमनुष्ये पर्वताच्छो वा भवति। पर्वतीयानि फलानि। पार्वतानि। अनर इति किम् ? पर्वतीयो मनुष्यः।

[ विभाषाऽमनुष्ये। पा० ४।२।१४४ ]

**कृकणपर्णाद्भारद्वाजात्॥ ५७॥** [ स० ४।३।७९ ]

कृकणपर्णाभ्यां भारद्वाजदेशाभ्यां शेषे छो भवति। कृकणीयम् पर्णीयम्। भारद्वाजाद् इति किम् ? कार्कणः पार्णः।

[ कृकणपर्णाद् भारद्वाजे। पा० ४।२।१४५ ]

**गहादिभ्यः॥ ५८॥** [ ०भ्यश्च। पा० ४।२।१३८ ]

गहादिभ्यो यथासम्भवं देशवाचिभ्योऽन्यवाचिभ्यश्च शेषे छो भवति। गहीय अन्तस्थीयः॥ गह। अन्तस्थ। सम। विषम। उत्तम। अङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। समानग्राम। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनीक। दन्ताग्र। अवस्यन्दन। कामप्रस्थ। खाडायनि। काठेरणि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। भौजि। आध्यश्वि। आग्निशर्मि।

---

1 सौश्लकीयः—MS.

श्रौति[1]। वाराटकि। वाल्मीकि। क्षैमवृत्ति। उत्तर। अनन्तर। मुखपार्श्वेकात्तसो लोपश्च। मुखतीयः। पार्श्वतीयः। एकतीयः। स्वपरजनदेवराज्ञां कुक्* च। स्वकीयः। परकीयः। जनकीयः। देवकीयः। राजकीयः[2]।

[गहाऽन्तस्थ-सम-विषमोत्तमोत्तराऽन्तराऽनन्तराऽन्याऽङ्ग-वङ्ग-मगधेभ्यः। कामप्रस्थ-दन्ताग्राऽवस्यन्दनाऽऽग्निशर्मि-दैवशर्मि-वाराटकि-वाल्मीक्याध्यशिव-शैशिर्याऽसुर्याऽनृशंस्याऽर्हिंसिभ्यः। क्षैमवृत्ति-खाडायनि-काठेरणि-लाठेरणि-भौजि-वैजिव्याडि-शाडि-शौङ्गि-सौत्रि-सौमित्राग्मित्रिभ्यः। इषोरग्रानीकाभ्याम्। एकाद् वृक्षपलाशिकाभ्याम्। समानाच्च ग्रामात्। अधमोत्तमाभ्यां च शाखात्। पूर्वपराभ्यां पक्षात्। एकमुखपार्श्वेभ्यस्तसः। स्व-पर-जन-देव-राज्ञां कुक् च। स० ४।३।८०-८९, जनपरयोः कुक्। देवस्य च। पा० ग० सू०। एकतसेऽश्चेति चान्द्राः। सं० तद्धित ४३८]

**पृथिवीमध्यस्य मध्यमश्च** ॥ ५९ ॥ [स० ४।३।९०]

पृथिवीमध्यस्य शेषे छो भवति मध्यमशब्दश्चादेशः। मध्यमीयः।

[गहादिषु पृथिवीमध्यस्य मध्यमभावः। पा० ४।२।१३८।१]

**निवासस्य चरणेऽण् च** ॥ ६० ॥ [स० ४।३।९१]

निवासस्य पृथिवीमध्यस्य चरणेऽभिधेयेऽण् भवति मध्यमश्चादेशः। पृथिवीमध्यो निवास एषां त्रयाणां चरणानां माध्यमाः। निवासस्येति किम्? पृथिवीमध्यादागतः मध्यमीयः कठः। चरण इति किम्? मध्यमीयः शूद्रः।

[चरणसम्बन्धेन निवासलक्षणोऽण्। पा० ४।२।१३८।२]

**वेणुकादिभ्यश्छण्** ॥ ६१ ॥ [काशिका ४।२।१३८ ग० सू०]

वेणुकादिभ्यः शेषे छण् भवति। वैणुकीयः। वैत्रकीयः। औत्तरपदकीयः। माध्यमकीय।

[वेणुक-वेत्रक-प्रस्थक-मध्यमकोत्तरपदकादिभ्यश्छण्। स० ४।३।९२]

---

[1] श्रौत्रि—MS. [2] १।३।९६ वृत्त्यनुसारेणाकृतिगणोऽयम्।

* कुट्—MS, but in the Durghaṭa vṛtti we find under iv. 2. 138: तथाच चान्द्रं सूत्रम्—"स्वपरजनदेवराज्ञां कुक् च" इति।

**युष्मदस्मदोः खञ् युष्माकास्माकौ च ॥ ६२ ॥**

युष्मदस्मदोः शेषे खञ् भवति युष्माकास्माकौ चादेशौ भवतः। यौष्माकीणः आस्माकीनः ।

[ युष्मदस्मदोरन्यतरस्यां खञ् च । तस्मिन्नणि च युष्माकास्माकौ । पा० ४।३।१-२, युष्मदस्मदोर्वा खञ् युष्माकास्माकौ । स० ४।३।९३ ]

**अण् ॥ ६३ ॥** [ अण् च । स० ४।३।९४ ]

युष्मदस्मदोः शेषे अण् भवति युष्माकास्माकौ चादेशौ भवतः। यौष्माकः आस्माकः ।

**तवकममकावेकत्वे ॥ ६४ ॥** [ स० ४।३।९५ ]

युष्मदस्मदोरेकत्वे वर्तमानयोस्तयोरेव खञणोस्तवकममकावादेशौ भवतः। तावकीनः मामकीनः, तावकः मामकः। छस्तु तदादिपाठाद् भवत्येव। युष्मदीयः अस्मदीयः, त्वदीयः मदीयः ।

[ तवकममकावेकवचने । पा० ४।३।३ ]

**द्वीपादनुसमुद्राञ् ञ्यः ॥ ६५ ॥** [ ०द्वं ० । स० ४।३।९६ ]

समुद्रसमीपे यो द्वीपस्ततः शेषे ञ्यो भवति। द्वैप्यः। अनुसमुद्रादिति किम् ? द्वैपः द्वैपकः । [४८] कच्छादिपाठाद्वुञ् ।

[ द्वीपादनुसमुद्रं यञ् । पा० ४।३।१० ]

**अर्धाद्द यत् ॥ ६६ ॥** [ पा० ४।३।४, स० ४।३।९७ ]

अर्धाच्छेषे यद् भवति। अर्ध्यम् ।

**परावराधमोत्तमादेः ॥ ६७ ॥** [ ० च । स० ४।३।९८ ]

पराद्यादेरर्धाच्छेषे यद्भवति। परार्ध्यम् अवरार्ध्यम् अधमार्ध्यम् उत्तमार्ध्यम् ।

[ परावराधमोत्तमपूर्वाच्च । पा० ४।३।५ ]

**दिगादेष्ठञ् च ॥ ६८ ॥** [ स० ४।३।९९ ]

दिक्छब्दादेरर्धाच्छेषे ठञ् भवति यच्च। पूर्वार्ध्यम् पौर्वार्धिकम् । दक्षिणार्ध्यम् दाक्षिणार्धिकम् । परावरादेस्तु यदेव भवति पूर्वविप्रतिषेधादनुवृत्तेर्वा ।

[ दिक्पूर्वपदाट् ठञ् च । पा० ४।३।६ ]

**ग्रामजनपदांशादण् च ॥ ६९ ॥**

ग्रामैकदेशादर्धाज्जनपदैकदेशाच्च दिक्छब्दादेः शेषे ठञ् भवति अण् च। ग्रामस्य जनपदस्य वा पौर्वार्धः पौर्वार्धिकः, दाक्षिणार्धः दाक्षिणार्धिकः। दिगादेरित्येव । बालेयार्धिकः ।

[ग्रामजनपदैकदेशादञ्ठञौ । पा० ४।३।७, ०दञ् च । स० ४।३।१००]

**सपूर्वात् ॥ ७० ॥** [ स० ४।३।१०१ ]

विद्यमानपूर्वादर्धशब्दाच्छेषे ठञ् भवति । बालेयार्धिकः गौतमार्धिकः ।

[ अर्धाद् यद्विधाने सपूर्वात् ठञ् । पा० ४।३।४।१ ]

**कालेभ्यः ॥ ७१ ॥** [ स० ४।३।१०२ ]

कालवाचिभ्यः शेषे ठञ् भवति । मासिकम् सांवत्सरिकम् । वहुवचननिर्देशाद् यथाकथञ्चिदपि काले वर्तमानाद्भवति। कादम्बपुष्पिकम् व्रैहिपलालिकम् ।

[ कालाट् ठञ् । पा० ४।३।११ ]

**शरदः श्राद्धे ॥ ७२ ॥** [ स० ४।३।१०४ ]

शरदः श्राद्ध एव ठञ् भवति। शारदिकं श्राद्धम्, शारदमन्यत् । रूढेः पितृकार्यस्य ग्रहणं न श्रद्धावतः।

[ श्राद्धे शरदः । पा० ४।३।१२ ]

**रोगातपयोर्वा ॥ ७३ ॥** [ स० ४।३।१०५ ]

रोगे आतपे चार्थे शरदो वा ठञ् भवति । शारदिक शारदो रोग आतपो वा।

[ विभाषा रोगातपयोः । पा० ४।३।१३ ]

**निशाप्रदोषात् ॥ ७४ ॥** [ ० षाभ्याम् । स० ४।३।१०६ ]

एताभ्यां शेषे वा ठञ् भवति। नैशिकम् नैशम् । प्रादोषिकम् प्रादोषम् ।

[ निशाप्रदोषाभ्यां च । पा० ४।३।१४ ]

**श्वसस्तुट् च** ॥ ७५ ॥ [ पा० ४।३।१५, स० ४।३।१०७ ]

श्वसः शेषे ठञ् भवति वा तुडागमश्च । शौवस्तिकम्, श्वस्त्यम्, श्वस्तनम् ।

**प्राह्णेप्रगेसायंचिरमसंख्याट् ट्युः** ॥७६॥

प्राह्ण[1]आदिभ्योऽसंख्याच्च शेषे ट्युर्भवति तुट् च। प्राह्णेतनम् प्रगेतनम् । निपातनादेकारः । सायन्तनम् चिरन्तनम् । निपातनान्मकारः । असंख्येभ्यः । दोषातनम् दिवातनम् । कालेभ्य इत्येव । स्वर्भवम् सौवम् ।

[ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । पा० ४।३।२३, ० भ्यष्ट्युः । स० ४।३।१०८]

**पूर्वाह्णापराह्णाद्वा** ॥७७॥ [० ह्णाभ्यां वा । स० ४।३।१०९]

एताभ्यां शेषे ट्युर्वा भवति तुट् च । पूर्वाह्णेतनम् पौर्वाह्णिकम् । अपराह्णेतनम् आपराह्णिकम् । सप्तम्या बहुलम् [५।२।११] इत्यलुक् । यदा तु पूर्वाह्णः सोढोऽस्येति तदा पूर्वाह्णतनः ।

[ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् । पा० ४।३।२८ ]

**परुत्परारिचिरात् त्नः** ॥७८॥ [० चिरेभ्यस्त्नः । स० ४।३।१११]

परुदादिभ्यः शेषे वा त्नो भवति । परुत्नः परुत्तनः । परारित्न परारितनः । चिरत्नः चिरन्तनः ।

[ चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । पा० ४।३।२३ भाष्यम् ]

**सन्ध्याद्यृतुनक्षत्रादण्** ॥७९॥

सन्ध्यादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च शेषे अण् भवति । सान्ध्यम् सान्धिवेलम् ग्रैष्मम् शैशिरम् । पौषम् तैषम् ॥ सन्ध्या । सन्धिवेला । अमावस्यार्थात् । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी[2] । प्रतिपद् । संवत्सरात् फलपर्वणोः ।

---

[1] प्राह्णादिभ्यः—MS. [2] पूर्णमासी—MS.

[ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । पा० ४।३।१६, ऋतुनक्षत्रेभ्योऽण् । सन्ध्या-सन्धिवेला-त्रयोदशी-चतुर्दशी-पञ्चदशी-पौर्णमास्यमावास्या-प्रतिपद्भ्यश्च । संवत्सरात् फलपर्वणोः । स० ४।३।११२-११४ ]

**हेमन्ताद्‌ वा तलोपश्च ॥८०॥** [स० ४।३।११५]

हेमन्ताच्छेप अण् वा भवति, तत्र तलोपश्च वा । हैमनम् हैमन्तम् हैमन्तिकम् ।

[ हेमन्ताच्च । सर्वत्राण् च तलोपश्च । पा० ४।३।२१-२२ ]

**वर्षाभ्यः प्रावृड्भ्यां ठगेण्यौ ॥८१॥** [स० ४।३।११६]

वर्षाभ्यः शेषे ठग् भवति प्रावृष एण्यः । वार्षिकम् प्रावृषेण्यम् ।

[ वर्षाभ्यष्ठक् । प्रावृष एण्यः । पा० ४।३।१८,१७ ]

**मध्यादिभ्यां मः ॥८२॥**

मध्यादिभ्यां शेषे मो भवति । मध्यमः आदिमः । मध्यशब्द एव साम्प्रतिकेऽर्थे वर्तते । मध्या स्त्री नातिदीर्घा नातिह्रस्वा युक्तप्रमाणेत्यर्थः । कथमधमः ? परावराधमोत्तमादेः [ ३।२।६७ ] इति ज्ञापकात् । अवम इत्यौणादिकः[1] ।

[ मध्यान्मः । पा० ४।३।८, आदेश्चेति वक्तव्यम । काशिका । मध्याद: साम्प्रतिके । आदेश्च मः । स० ४।३।११७-११८]

**अग्रान्तपश्चादिमच् ॥८३॥** [० पश्चाद्भ्य इमच् । स० ४।३।१२०]

अग्रादिभ्यः शेषे इमज् भवति । अग्रिमः अन्तिमः पश्चिमः ।

[ अग्रादिपश्चाड्डिमच् स्मृतः । पा० ४।३।२३ भाष्यम् ]

तृतीयस्य द्वितीयः पाद समाप्तः ।

**तत्र जाते प्रावृषष्ठप् ॥१॥**

प्रावृट्शब्दात् सप्तम्यन्ताज्जाते ठप् भवति । प्रावृषि जातः

[1] Not provided for by the Cāndra uṇ-di-sūtras.

प्रावृषिकः। कथं स्रुघ्ने जातः स्रौघ्नः, राष्ट्रियः, पारावारीण इत्यादि। शेषे [ ३।२।१ ] इत्येव सिद्धम्। यद्येवमनियमात् 'तत्रास्ते तत्र शेते' इत्यपि सर्वत्राणादयो घादयश्च प्राप्नुवन्ति। न, तेभ्यस्तदर्थाप्रतीतेः। बाधकबाधनार्थं तु जाताद्यनुक्रमणम्। कथं शारदका दर्भाः, शारदका मुद्गा इति। ऋत्वणन्तात् संज्ञायां कन्।

[ तत्र जातः। प्रावृषष्ठप्। पा० ४।३।२५-२६, स० ४।३।१२१-१२२ ]

**पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करात् कन्नाम्नि ॥२॥**

पूर्वाह्णादिभ्यः सप्तम्यन्तेभ्यो जाते संज्ञायां कन् भवति। पूर्वाह्णकः अपराह्णकः आर्द्रकः। केऽणः० [ ६।२।७० ] इति ह्रस्वत्वम्। मूलकः प्रदोषकः अवस्करकः। नाम्नीति किम्? पूर्वाह्णेतनः।

[ *पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करात् वुन्। पा० ४।३।२८, ०स्करेभ्यः* कन्। स० ४।३।१२४ ]

**पन्थकः ॥३॥**

पथि जाते संज्ञायां कन्निपात्यते पन्थादेशश्च। पन्थकः।

[ पथः पन्थ च। पा० ४।३।२९, स० ४।३।१२५ ]

**सिन्ध्वपकराद्वा ॥४॥**

सिन्ध्वपकराभ्यां कन् वा भवति। सिन्धुकः सैन्धवः। कच्छादिपाठादण्। अपकरकः आपकरः। नाम्नीत्येव सैन्धवको मनुष्यः।

[ सिन्ध्वपकराभ्यां कन्। पा० ४।३।३२, ०भ्यां वा। स० ४।३।१२६ ]

**अमावस्यार्थादश्च ॥५॥** [स० ४।३।१२७]

अमावस्यार्थवाचिनो जाते कन् भवति वा, अश्च वा। अमावस्यायां जातः, अमावस्यकः, अमावस्यः, आमावस्यः। अमावास्यकः, अमावास्यः, आमावास्यः। सन्ध्यादित्वादण्। नाम्नीत्येव। आमावास्यः।

[ अमावास्याया वा। अ च। पा० ४।३।३०-३१ ]

**स्थानान्तगोशालखरशालाल्लुक् ॥६॥** [ स० ४।३।१२८ ]

स्थानान्तादिभ्यो जाते विहितस्य लुग् भवति। गोस्थाने जातः

गोस्थानः। अश्वस्थानः। गोशाले जातः गोशालः। लिङ्गविशिष्टस्यापि ग्रहणात् गोशालायां जातः गोशालः। एवं खरशालः।

[ स्थानान्तगोशालखरशालाच्च। पा० ४।३।३५ ]

**वत्सशालानक्षत्रेभ्यो बहुलम् ॥७॥**

वत्सशालान्नक्षत्रेभ्यश्च जाते विहितस्य बहुलं लुग् भवति। वत्सशाले जातः वत्सशालायां वा जातः वात्सशालः। वत्सशालः। अनुराधः। स्वातिः। तिष्यः। पुष्यः। पुनर्वसुः। हस्तः। विशाखः। बहुलः (बहुला इति कृत्तिका उच्यन्ते)। एतेभ्यो लुगेव। क्वचिद्विकल्पः। मृगशिराः मार्गशीर्षः। अभिजित् आभिजितः। अश्वयुक् आश्वयुजः। शतभिषक् शातभिषजः। चित्रः चैत्रः। रेवतः रैवतः। रोहिणः रौहिणः। स्त्रियां तु चित्रादिभ्यां लुगेव। चित्रा। रोहिणी। रेवती। ङ्यापोरपि लुकि कृते पुनर्डाप्। गौरादित्वान् ङीप्।

[ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्। वत्सशालाभिजिदश्वयुक्छतभिषजो वा। नक्षत्रेभ्यो बहुलम्। पा० ४।३।३४, ३६-३७ ]

**डिद्ण् ॥८॥**

नक्षत्रेभ्यो बहुलं डिदण् भवति। शातभिषजः। शातभिषः।

[ दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा विधीयते। पा० ४।२।७ भाष्यम्। शतभिषजोऽण् च डिद्वा। अनुराधा-स्वाति-तिष्य-पुनर्वसु-हस्त-विशाखा-बहुलाभ्यः। वत्सशालाऽभिजिद्-अश्वयुङ्-मृगशिरश्चित्रा-रेवती-रोहिणीभ्यो वा। नित्यं स्त्रियां चित्रादिभ्यः। शतभिषजोऽण् च डिद्वा। स० ४।३।१२९-१३२ ]

**श्रविष्ठाषाढाच्छण् ॥९॥**

एताभ्या जाते छण् भवति बहुलम्। श्राविष्ठीयः श्राविष्ठः श्रविष्ठः। आषाढीयः आषाढः अषाढः।

[ श्रविष्ठाषाढाभ्यां छण्। पा० ४।३।३४।३, वा० । स० ४।३।१३३ ]

फल्गुन्याष्टः ॥१०॥ [ ० ष्ट च। स० ४।३।१३४ ]

फल्गुन्या जाते टो भवति बहुलम्। फल्गुनः फल्गुनी फाल्गुनः।

केषाञ्चिदत्र यावन्नाम्नीत्येव। फाल्गुनः। कथं लुब्ने क्रीतो वा लब्धो वा कृतो वा कुशलो वा सम्भूतो वा भवो वा स्रौघ्नः राष्ट्रिय इति। शेषे [ ३।२।१ ] इत्येव सिद्धम्। तथा हेमन्ते साधु हैमनमनुलेपनम् हैमन्तं हैमन्तिकं वा। वसन्ते पुष्यन्ति वासन्त्यः सुमनसः। शरदि पच्यन्ते शारदाः शालयः। हेमन्त उप्ताः हैमना यवाः।

[फल्गुन्यषाढाभ्यां टानौ। पा० ४।३।३४।२ कालात् साधुपुष्यत्पच्यमानेषु। उप्ते च। पा० ४।३।४३-४४, स० ४।३।१३७-१३८]

अश्वयुज्यामुप्ते वुञ् ॥११॥

अश्वयुजीशब्दात् सप्तम्यन्तादुप्ते वुञ् भवति। आश्वयुजका माषाः।

[ आश्वयुज्या वुञ्। पा० ४।३।४५, स० ४।३।१३९ ]

ग्रीष्मवसन्ताद्वा ॥१२॥ [ ० न्ताभ्यां वा। स० ४।३।१४० ]

एताभ्यामुप्ते वा वुञ् भवति। ग्रैष्मकं सस्यम्, ग्रैष्मम्। वासन्तकं वासन्तम्।

[ ग्रीष्मवसन्तादन्यतरस्याम्। पा० ४।३।४६ ]

कालाद्देयमृणम् ॥१३॥

कालेभ्यः सप्तम्यन्तेभ्यो देये यथाविहितं ठञादयो भवन्ति यत्तद्देयमृणं चेत्। मासे देयमृणं मासिकम्। ग्रैष्मम्। ऋणमिति किम्? मासे देया भिक्षा।

[देयमृणे। पा० ४।३।४७, देयमृणम्। स० ४।३।१४१ ]

कलाप्यश्वत्थयववुसाद्वुन् ॥१४॥ [ पा० ४।३।४८ ]

एतेभ्यः सप्तम्यन्तेभ्यः कालोपलक्षणेभ्यो देयमृणमित्येतस्मिन्नर्थे वुन् भवति। कलापिषु मयूरेषु देयमृणम्, अश्वत्थेषु फलवत्सु, यववुसेषु वा भवत्सु। कलापकम् अश्वत्थकम् यववुसकम्।

[ कलाप्यश्वत्थयववुसेभ्यो वुन्। स० ४।३।१४२ ]

ग्रीष्मावरसमाद्वुञ् ॥१५॥ [ पा० ४।३।४९ ]

ग्रीष्मादवरसमायाश्च देयमृणमित्येतस्मिन्नर्थे वुञ् भवति। ग्रैष्मकम् आवरसमकम्।

[ ग्रीष्मावरसमाभ्यां वुञ्। स० ४।३।१४४]

**संवत्सराग्रहायण्याष्ठञ् च ॥१६॥**

संवत्सरादाग्रहायण्याश्च देयमृणमित्येतस्मिन्नर्थे ठञ् भवति, वुञ् च। सांवत्सरिकम् सांवत्सरकम्। आग्रहायणिकम् आग्रहायणकम्। यदा तु संवत्सरे देयमृणं फलं भवति तदापि [३।२।७९] सन्ध्यादिपाठादण् मा भूदिति ठञ्-ग्रहणम्। निशायां व्याहरति मृगः नैशः। नैशिक इति शेषे [३।२।१] इत्येव सिद्धम्। अमृगोऽपि भवार्थे भवत्येव। यो हि निशायां व्याहरति स निशायां भवो भवति। नैशब्दं चेह साध्यम्। तथा निशा सोढास्य निशायामध्ययनं सोढमस्येति वा नैशो नैशिक इति।

[संवत्सराग्रहायणीभ्यां ठञ् च। व्याहरति मृगः। तदस्य सोढम्। पा० ४।३।५०-५२, स० ४।३।१४४-१४६]

**दिगादिभ्यो भवे यत् ॥१७॥**

दिगादिभ्यः सप्तम्यन्तेभ्यो भवे यद्भवति। दिश्यम् वर्ग्यम्॥ दिश्। वर्ग। पूग। गण। पक्ष। धाय्या। मित्र। मेधा। अन्तर्। पथिन्। रहस्। अलीक। उखा। साक्षिन्। आदि। अन्त। मुख। जघन। अ देहांशार्थः पाठः। मुख्यः जघन्यः। मेघ। यूथ। उदकात् संज्ञायाम्। उदक्या रजस्वला। न्याय। वंश। अनुवंश। देश। काल। आकाश।

[तत्र भवः। दिगादिभ्यो यत्। पा० ४।३।५३-५४, तत्र भवः। दिग् वर्ग-पूग-गणोखा-मुख-जघन-वंशाऽनुवंश-देश-कालाऽऽकाश-पक्ष-साक्षिभ्यो यत्। आद्यन्तान्तर-रहः-पथ्यलीक-यूथ-न्याय-मित्र-मेघ-मेधा-धाय्यादुभ्यश्च। उदकात् संज्ञायाम्। स० ४।३।१४८-१५०]

**देहांशात् ॥१८॥** [ स० ४।३।१५१ ]

शरीरावयवाद् यद् भवति। दन्त्यम् ओष्ठ्यम्।

[ शरीरावयवाच्च । पा० ४।३।५५ ]

**दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥१९॥** [ पा० ४।३।५६ ]

दृत्यादिभ्यो भवे ढञ् भवति । दार्तेयम् कौक्षेयम् कालशेयम् वास्तेयम् आस्तेयम् आहेयम् ।

[ दृति-कुक्षि-कलशि-बस्त्यस्त्यहिभ्यो ढञ् । स० ४।३।१५२ ]

**ग्रीवातोऽण् च ॥२०॥** [ स० ४।३।१५३ ]

ग्रीवाया भवेऽण् भवति, ढञ् च । ग्रैवम् ग्रैवेयम् ।

[ग्रीवाभ्योऽण् च । पा० ४।३।५७ ]

**गम्भीरपञ्चजनात् ञ्यः ॥२१॥** [ ०जनाभ्यां० । स० ४।३।१५४ ]

गम्भीर-पञ्चजनाभ्यां भवे ञ्यो भवति । गाम्भीर्यः पाञ्चजन्यः । बहिर्देवाभ्यां तु पूर्वेण सिद्धम् ।

[ गम्भीराञ्ञ्यः । पा० ४।३।५८, बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते । श्लोकवार्तिकम् ४।३।६० ]

**चातुर्मास्यं यज्ञे ॥२२॥**

चतुर्षु मासेषु भवे यज्ञे चातुर्मास्यमिति ञ्यो निपात्यते । चातुर्मास्यानि । चतुर्मासात् संज्ञायामण् न वाच्यः, शेषे [ ३।२।१ ] इत्येव सिद्धत्वात् । चातुर्मासी । आषाढी पौर्णमासी । कार्त्तिकी फाल्गुनी चोच्यते । लुगपि न भवति संज्ञाप्रतीतेः ।

[ चतुर्मासाण्ण्यो यज्ञे तत्र भवे । संज्ञायामण् । पा० ५।१।९४।६-७, चतुर्मासाद् यज्ञे । संज्ञायामण् लुक् च । स० ४।३।१५५-१५६ ]

**परिमुखादिभ्यः ॥२३॥**

परिमुखादिभ्यो ञ्यो भवति । परिमुख भवः परिमुख्यः । परिहनव्यः ॥ परिमुखम् । परिहनु । पर्योष्ठम् । पर्युलूखलम् । परिसीरम् । अनुसीरम् । उपसीरम् । उपस्थूणम् । उपकलापम् । अनुपथम् । अनुगङ्गम् । अनुतिलम् । अनुशीतम् । अनुसातम् । अनुपदम् । अनुयूपम् । अनुवंशम् । अनुमाषम् । अनुयवम् । विभक्तिपाठोऽसंख्यसमास-

प्राधान्यज्ञापनार्थः, तेनेह न भवति—परिगतं मुखम् परिमुखम्, तत्र भवः पारिमुखः ।

[ ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् । पा० ४।३।५८।१, परेर्मुखौष्ठ-हनूलूखलेभ्योऽव्ययीभावे । उपात् स्थूलाकलापाभ्याम् । अनोः पथि-पद-यूप-वंश-सीता-तिल-यव-भङ्गा-मापेभ्यः । पर्युपानुभ्यः सीरात् । स० ४।३।१५७-१६० ]

**अन्तःपूर्वात्तादर्थात् ठञ् ॥२४॥**

अन्तःपूर्वपदात् तदर्थप्रधानाद् भवे ठञ् भवति । आन्तर्गेहिकम् आन्तर्वेशिकम् । विभक्त्यर्थे यदसंख्यम् [ २।२।२ ] इति समासः । तदर्थादिति किम् ? अन्तःकरणे भवम् आन्तःकरणम् ।

[ अन्तःपूर्वपदाट् ठञ् । पा० ४।३।६०, स० ४।३।१६१ ]

**पर्यनुभ्यां ग्रामात् ॥२५॥** [ स० ४।३।१६३ ]

पर्यनुपूर्वाद् ग्रामाद्भवे ठञ् भवति । पारिग्रामिकः आनुग्रामिकः । तदर्थादित्येव । परिगतो ग्रामः, तत्र भवः परिग्रामः ।

[ ग्रामात् पर्यनुपूर्वात् । पा० ४।३।६१ ]

**समानात् ॥२६॥** [स० ४।३।१६३]

समानाद् भवे ठञ् भवति । सामानिकः ।

[ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते । श्लोकवार्त्तिकम् । पा० ४।३।६० ]

**तदादेः ॥२७॥** [ स० ४।३।१६४ ]

समानादेर्भवे ठञ् भवति । सामानग्रामिकः । सामानदेशिकः ।

[ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते । श्लोकवार्त्तिकम् । ४।३।६० ]

**लोकान्तात् ॥२८॥** [ स० ४।३।१६४ ]

लोकोत्तरपदाद्भवे ठञ् भवति । ऐहलौकिकः पारलौकिकः । अनुशतिकादीनाम् [ ६।१।३० ] इत्युभयपदावृद्धिश्च ।

[ लोकोत्तरपदस्य च । श्लोकवार्त्तिकम् ४।३।६० ]

**अध्यात्मादिभ्यः ॥२९॥**

अध्यात्मादिभ्यो भवे ठञ् भवति। आध्यात्मिकम् आधिदैविकम् आधिभौतिकम् और्ध्वन्दैहिकम्। आकृतिगणोऽयम्।

[ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते। श्लोकवार्त्तिकम्। अध्यात्माधिदेवाधिभूतेहलोकपरलोकोर्ध्वदेहोर्ध्वन्दमादिभ्यश्च। स० ४।३।१६६ ]

**जिह्वामूलाङ्गुलेश्छः** ॥३०॥ [ पा० ४।३।६२, स० ४।३।१६७ ]

एताभ्यां भवे छो भवति। जिह्वामूलीयम्। अङ्गुलीयम्।

**वर्गान्तात्** ॥३१॥ [ स० ४।३।१६८, ०च। पा० ४।३।६३ ]

वर्गान्ताद् भवे छो भवति। कवर्गीयः। चवर्गीयः।

**अशब्दे यत्खौ च** ॥३२॥ [ स० ४।३।१६९ ]

शब्दादन्यत्र भवे वर्गान्ताच्छो भवति, यत्खौ च। अर्जुनवर्गीयः। अर्जुनवर्ग्यः अर्जुनवर्गीणः। अशब्द इति किम्? कवर्गीयः।

[ अशब्दे यत्खावन्यतरस्याम्। पा० ४।३।६४ ]

**मध्यान्मण्मीयौ च** ॥३३॥ [ स० ४।३।१७० ]

मध्याद्भवे मण्मीयौ भवतः, छश्च। माध्यमः मध्यमीयः मध्यीयः। मध्यन्दिना उद्गायन्तीति तदुपचारात्।

[ ईयः कार्योऽथ मध्यस्य मण्मीयौ चापि प्रत्ययौ। श्लो० वा० ४।३।६० मध्य मध्यं दिनण् चास्मात्। श्लो० वा० ४।३।६०, दिनण् मध्यं चास्य। स० ४।३।१७१ ]

**ललाटाद्भूषणे कन्** ॥३४॥ [ स० ४।३।१७२ ]

ललाटाद्भूषणे कन्भवति। ललाटिका।

[ कर्णललाटात् कनलङ्कारे। पा० ४।३।६५ ]

**कर्णात्** ॥३५॥ [ स० ४।३।१७३ ]

कर्णाद्भूषणे कन् भवति। कर्णिका।

**उपादेष्ठक्** ॥३६॥

उपपूर्वात् कर्णाद्भवे ठग् भवति। औपकर्णिकम्।

[ उपजानूपकर्णोपनीवेष्ठक्। पा० ४।३।४०, प्रायेणोपादेष्ठ। स० ४।३।१७४ ]

**जानुनीविभ्याम्** ॥३७॥ [स० ४।३।१७५]

उपपूर्वाभ्यामेताभ्यां भवे ठग् भवति । औपजानुकम् औपनीविकम् प्रायभवेऽपि भवे [१७] इत्येव सिद्धम् ।

[उपजानूपकर्णोपनीवेष्ठक् । पा० ४।३।४०]

**तस्य व्याख्याने च व्याख्येयनाम्नः** ॥३८॥

षष्ठ्यन्ताद् व्याख्यातव्यनाम्नो व्याख्याने सप्तम्यन्ताच्च भवे यथाविहितमणादयो भवन्ति । सुपां व्याख्यानं सुप्सु वा भवम् सौपम् । तैङम् । व्याख्येयनाम्न इति किम् ? पाटलिपुत्रस्य व्याख्यानी सुकोसला । कथम् अश्वत्थाम्नि भवः अश्वत्थामा, कृष्णाजिने भवम् कृष्णाजिनम् सिंहाजिनम् । अग्निष्टोमे भवो मन्त्रः अग्निष्टोमः, अग्निष्टोमस्य व्याख्यानं कल्पः अग्निष्टोम इति ? तद्वदुपचारात् । अणादयोऽपि तर्हि स्युः ? इष्यन्त एव तस्येदमिति विवक्षायाम् । त्रैशब्द्यं चेह साध्यम् । भवव्याख्यानयोर्युगपदधिकारो बाधकबाधनार्थः ।

[तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः । पा० ४।३।६६, तस्य व्याख्यान इति कल्पे । भवव्याख्यानयोर्व्याख्यातव्यनाम्नः । स० ४।३।१७८-१७९]

**बह्वचोऽन्तोदात्ताट्ठञ्** ॥३९॥ [पा० ४।३।६७, स० ४।३।१८०]

बह्वचो व्याख्येयनाम्नोऽन्तोदात्ताद् भवव्याख्यानयोष्ठञ् भवति । षात्वणत्विकम् । नातानतिकम् । समासस्येत्यन्तोदात्तः । बह्वच इति किम् ? सौपम् तैङम् । अन्तोदात्तादिति किम् ? संहितायाः सांहितम् । प्रादिस्वरेणाद्युदात्तः । उदात्तादयः स्वरा विसर्जनीयादिवत् प्रसिद्धाः ।

**यज्ञेभ्यः** ॥४०॥ [स० ४।३।१८१]

यज्ञवाचिभ्यो भवव्याख्यानयोष्ठञ् भवति । आग्निष्टोमिकम् वाजपेयिकम् पाञ्चौदनिकम् दाशौदनिकम् । बहुवचनं सर्वयज्ञपरिग्रहार्थम् ।

[क्रतुयज्ञेभ्यश्च । पा० ४।३।६८]

**अध्यायेष्वेवर्षेः** ॥४१॥ [पा० ४।३।६९, स० ४।३।१८२]

ऋषिवाचिभ्यो भवव्याख्यानयोष्ठञ् भवति, अध्यायेष्वेवाभिधेयेषु वसिष्ठस्य ग्रन्थस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः। वैश्वामित्रिकः। अध्यायेष्ववेति किम्? वासिष्ठी ऋक्।

**पौरोडाशपुरोडाशात् ष्ठन्** ॥४२॥ [पा० ४।३।७०, स० ४।३।१८३]

आभ्यां भवव्याख्यानयोः ष्ठन् भवति। पौरोडाशिकः, पौरोडाशिकी। पुरोडाशिकः, पुरोडाशिकी।

**छन्दसो यत्** ॥४३॥

छन्दसो भवव्याख्यानयोर्यद् भवति। छन्दस्यम्।

**अण्** ॥४४॥

छन्दसो भवव्याख्यानयोरण् भवति। छान्दसम्।

[छन्दसो यदणौ। पा० ४।३।७१, स० ४।३।१८४]

**ऋगयनादिभ्यः** ॥४५॥

ऋगयनादिभ्यो भवव्याख्यानयोरण् भवति। आर्गयणः पादव्याख्यानः॥ ऋगयन। पदव्याख्यान। छन्दोव्याख्यान। छन्दोनामन्। छन्दोभाषा। छन्दोविचिति। छन्दोविजिति। न्याय। निरुक्त। पुनरुक्त। व्याकरण। निगम। वास्तुविद्या। अङ्गविद्या। क्षत्रविद्या। क्षत्रियविद्या। उत्पात। उत्पाद। संवत्सर। यज्ञ। चर्चा। श्लक्ष्ण। मुहूर्त। निमित्त। उपनिषद्। शिक्षा।

[अण् ऋगयनादिभ्यः। पा० ४।३।७३, ऋगयन-पदव्याख्यानोत्पातोत्पाद-पुनरुक्त-निरुक्त-न्याय-निगम-व्याकरण-शिक्षोपनिषद्विभ्योऽण्। यज्ञ-चर्चा-क्रमेतर-श्लक्ष्ण-निमित्त-मुहूर्त-संवत्सरेभ्यश्च। क्षत्राङ्ग-त्रि-वास्तुभ्यश्च विद्यायाः। छन्दसो मान-भाषा-विचिति-विजितिभ्यः। स० ४।३।१८६-१८९]

**द्व्यज्‌ऋद्‌ब्राह्मणप्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्** ॥४६॥

द्व्यच ऋदन्तादृक्छब्दाद् ब्राह्मणादिभ्यश्च भवव्याख्यानयोष्ठग् भवति। ऐष्टिकम्। चातुर्होतृकम्। आर्चिकम्। ब्राह्मणिकम्।

प्राथमिकम् । आध्वरिकम् । पौरश्चरणिकम् । नामाख्यातिकम् । नामिकम् । आख्यातिकम् ।

[ द्व्यजृद्ब्राह्मणर्क्प्रथमाऽध्वरपुरश्चरणनामाख्याताट् ठक् । पा० ४।३।७२, द्व्यजृद्ग्-ब्राह्मण-प्रथमाऽध्वर-पुरश्चरण-नामाख्यान-नामाऽख्यातेभ्यष्ठक् । स० ४।३।१८५]

**आयस्थानादागते ॥४७॥**

आयस्थानवाचिभ्यः पञ्चम्यन्तेभ्य आगते ठग् भवति । शुल्कशालाया आगतः शौल्कशालिकः । आतरिकः । आपणिकः । कथं स्रुघ्नादागतः स्रौघ्नः राष्ट्रिय इत्यादि ? शेषे [ ३।२।१ ] इत्येव सिद्धम् ।

[ तत आगतः । ठगायस्थानेभ्यः । पा० ४।३।७४-७५, तत आगतः आयस्थानेभ्यष्ठक् । स० ४।३।१९०-१९१ ]

**शुण्डिकादिभ्योऽण् ॥४८॥** [ पा० ४।३।७६ ]

शुण्डिकादिभ्य आगते अण् भवति । शौण्डिकः । कार्कणः ॥ अण्-ग्रहणमुदपानार्थम् ॥ शुण्डिक । कृकण । उदपान । स्थण्डिल । उपतीर्थ। भूमि । तृण । पर्ण ।

[शुण्डिका-कृकण-स्थण्डिलोदपानोलप-तीर्थ-भूमि-तृण-पर्णेभ्योऽण् । स० ४।३। १९२ ]

**विद्यायोनिसम्बन्धाद्वुञ् ॥४९॥**

विद्यासम्बन्धाद् योनिसम्बन्धाच्चागते वुञ् भवति । औपाध्यायकम् शैष्यकम् मातामहकम् पैतामहकम् ।

[ विद्यायोनिसम्बन्धेभ्यो वुञ् । पा० ४।३।७७, स० ४।३।१९३]

**ऋतः कञ् ॥५०॥**

ऋदन्तादागते कञ् भवति । हौतृकम् मातृकम् । विद्यायोनि-सम्बन्धादित्येव । सावित्रम् ।

[ ऋतष्ठञ् । पा० ४।३।७८, स० ४।३।१९४]

**पित्र्यं वा ॥५१॥** [ स० ४।३।१९५ ]

पितुरागत इत्येतस्मिन्नर्थे पित्र्यमिति वा निपात्यते । पित्र्यम् पैतृकम् ।

[ पितुर्यच्च। पा० ४।३।७९ ]

**नृहेतुभ्यो रूप्यः** ॥५२॥ [ स० ४।३।१९६ ]

मनुष्यवाचिभ्यो हेतुवाचिभ्यश्चागते रूप्यो वा भवति। देवदत्तरूप्यम् दैवदत्तम्। समाद्धेतोरागतः समरूप्यम्, समीयम्। [ ३।२।५८ गहादित्वाच्छः।

[ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। पा० ४।३।८१ ]

**मयट्** ॥५३॥ [ मयट् च। पा० ४।३।८२, स० ४।३।१९७ ]

नृहेतुभ्य आगते मयड् भवति। देवदत्तमयम्। सममयम्।

**गोत्रादङ्कवत्** ॥५४॥ [ पा० ४।३।८०, स० ४।३।१९८ ]

गोत्रे यो विहितस्तदन्तादागतेऽङ्क इवाणादयो भवन्ति। औपगवेभ्य आगतम् औपगवकम्। बैदम्। गार्गम्। दाक्षम्। शाकलम्। शाकलकम्।

**वैदूर्यम्** ॥५५॥

अयं शब्दो निपात्यते रत्नविशेषे विदूराद्रुत्पन्ने। कथम् हिमवतो गङ्गा प्रभवति हैमवती, स्रुघ्नं गच्छति पन्था दूतो वा स्रौघ्नः, राष्ट्रियः, स्रुघ्नमभिनिष्कामति द्वारम् स्रौघ्नम्। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्र इति? शषे [ ३।२।१ ] इत्येव सिद्धम्। इहापि तर्हि प्राप्नोति —स्रुघ्नं गच्छति सार्थः, स्रुघ्नमभिनिष्कामति पन्थाः, सुभद्रामधिकृत्य कृतः प्रासाद इति? तस्य स्वमिति विवक्षायामिष्यत एव।

[ प्रभवति। पा० ४।३।८३, स० ४।३।१९९, विदूराञ्ञ्यः। तद् गच्छति पथिदूतयोः। अभिनिष्क्रामति द्वारम्। पा० ४।३।८४-८६, वालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद ब्रूयाज्जित्वरीवदुपाचरेत्॥ श्लोक-वार्त्तिकम्। वालवायाञ्ञ् ञ्यो विदूरं चास्य। तद्गच्छति०। स० ४।३।२००-२०२]

**शिशुक्रन्दादीनधिकृत्य कृते ग्रन्थे छः** ॥५६॥

शिशुक्रन्दादिभ्यो द्वितीयान्तेभ्योऽधिकृत्य कृते ग्रन्थ छो भवति। शिशुक्रन्दीयः यमसभीयः इन्द्रजननीयः सीतान्वेषणीयः।

प्राथमिकम्। आध्वरिकम्। पौरश्चरणिकम्। नामाख्यातिकम्। नामिकम्। आख्यातिकम्।

[ द्व्यजृद्ब्राह्मणर्क्प्रथमाऽध्वरपुरश्चरणनामाख्याताद् ठक्। पा० ४।३।७२, द्व्यजृदृग्-ब्राह्मण-प्रथमाऽध्वर-पुरश्चरण-नामाख्यात-नामाऽऽख्यातेभ्यष्ठक्। स० ४।३।१८५]

**आयस्थानादागते ॥४७॥**

आयस्थानवाचिभ्यः पञ्चम्यन्तेभ्य आगते ठग् भवति। शुल्कशालाया आगत. शौल्कशालिकः। आतरिकः। आपणिकः। कथं स्रुघ्नादागतः स्रौघ्नः राष्ट्रिय इत्यादि ? शेषे [ ३।२।१ ] इत्येव सिद्धम्।

[ तत आगतः। ठगायस्थानेभ्यः। पा० ४।३।७४-७५, तत आगतः आयस्थानेभ्यष्ठक्। स० ४।३।१९०-१९१ ]

**शुण्डिकादिभ्योऽण् ॥४८॥** [ पा० ४।३।७६ ]

शुण्डिकादिभ्य आगते अण् भवति। शौण्डिकः। कार्कणः॥ अण्-ग्रहणमुदपानार्थम्॥ शुण्डिक। कृकण। उदपान। स्थण्डिल। उपतीर्थ। भूमि। तृण। पर्ण।

[शुण्डिका-कृकण-स्थण्डिलोदपानोलप-तीर्थ-भूमि-तृण-पर्णेभ्योऽण्। स० ४।३। १९२ ]

**विद्यायोनिसम्बन्धाद्व वुञ् ॥४९॥**

विद्यासम्बन्धाद् योनिसम्बन्धाच्चागते वुञ् भवति। औपाध्यायकम् शैष्यकम् मातामहकम् पैतामहकम्।

[ विद्यायोनिसम्बन्धेभ्यो वुञ्। पा० ४।३।७७, स० ४।३।१९३ ]

**ऋतः कञ् ॥५०॥**

ऋदन्तादागते कञ् भवति। हौतृकम् मातृकम्। विद्यायोनि-सम्बन्धादित्येव। सावित्रम्।

[ ऋतष्ठञ्। पा० ४।३।७८, स० ४।३।१९४ ]

**पित्र्यं वा ॥५१॥** [ स० ४।३।१९५ ]

पितुरागत इत्येतस्मिन्नर्थे पित्र्यमिति वा निपात्यते। पित्र्यम् पैतृकम्।

[ पितुर्यच्च। पा० ४।३।७९ ]

**नृहेतुभ्यो रूप्यः** ॥५२॥ [ स० ४।३।१९६ ]

मनुष्यवाचिभ्यो हेतुवाचिभ्यश्चागते रूप्यो वा भवति। देवदत्तरूप्यम् दैवदत्तम्। समाद्धेतोरागतः समरूप्यम्, समीयम्। [ ३।२।५८ गहादित्वाच्छः।

[ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। पा० ४।३।८१ ]

**मयट्** ॥५३॥ [ मयट् च। पा० ४।३।८२, स० ४।३।१९७ ]

नृहेतुभ्य आगते मयड् भवति। देवदत्तमयम्। सममयम्।

गोत्रादङ्कवत् ॥५४॥ [ पा० ४।३।८०, स० ४।३।१९८ ]

गोत्रे यो विहितस्तदन्तादागतेऽङ्क इवाणादयो भवन्ति। औपगवेभ्य आगतम् औपगवकम्। बैदम्। गार्गम्। दाक्षम्। शाकलम्। शाकलकम्।

**वैदूर्यम्** ॥५५॥

अयं शब्दो निपात्यते रत्नविशेषे विदूरादुत्पन्ने। कथम् हिमवतो गङ्गा प्रभवति हैमवती, स्रुघ्नं गच्छति पन्था दूतो वा स्रौघ्नः, राष्ट्रियः, स्रुघ्नमभिनिष्क्रामति द्वारम् स्रौघ्नम्। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्र इति? शषे [ ३।२।१ ] इत्येव सिद्धम्। इहापि तर्हि प्राप्नोति—स्रुघ्नं गच्छति सार्थः, स्रुघ्नमभिनिष्क्रामति पन्थाः, सुभद्रामधिकृत्य कृतः प्रासाद इति? तस्य स्वमिति विवक्षायामिष्यत एव।

[ प्रभवति। पा० ४।३।८३, स० ४।३।१९९, विदूराञ्ञ्यः। तद् गच्छति पथिदूतयोः। अभिनिष्क्रामति द्वारम्। पा० ४।३।८४-८६, वालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद ब्रूयाज्जित्वरीवदुपाचरेत्॥ श्लोकवार्त्तिकम्। वालवायाञ्ञ्यो विदूरं चास्य। तद्गच्छति०। स० ४।३।२००-२०२]

**शिशुक्रन्दादीनधिकृत्य कृते ग्रन्थे छः** ॥५६॥

शिशुक्रन्दादिभ्यो द्वितीयान्तेभ्योऽधिकृत्य कृते ग्रन्थ छो भवति। शिशुक्रन्दीयः यमसभीयः इन्द्रजननीयः सीतान्वेषणीयः।

[ अधिकृत्य कृते ग्रन्थे । पा० ४।३।८७, स० ४।३।२०३ शिशुक्रन्द-यमसभ-द्वन्द्वेन्द्रजननादिभ्यश्छः । पा० ४।३।८८, शिशुक्रन्द-यमसभेन्द्रजनन-प्रद्युम्नागमन-सीतान्वेषणादिभ्यश्छः । स० ४।३।२०४ ]

## चार्थानदेवासुरादीन् ॥५७॥

चार्थसमासेभ्यो देवासुरादिवर्जितेभ्यो द्वितीयान्तेभ्योऽधिकृत्य कृते ग्रन्थ छो भवति । श्येनकपोतीयः । संवर्तमरुत्वतीयः । अदेवासुरादीनिति किम् ? दैवासुरम् रक्षोऽसुरम् गौणमुख्यम् । कथम् वासवदत्ता बन्धुमती ? अभेदोपचारविषयत्वाद्विवक्षायाः । भैमरथीति नाभेदविवक्षा । कथम्—स्रुघ्नो निवासोऽस्य, स्रुघ्नोऽस्याभिजनः, स्रौघ्नः राष्ट्रिय इति ? शेषे [ ३।२।१ ] इत्येव सिद्धम् ।

[ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः । पा० ४।३।८८।१ द्वन्द्वाददेवासुररक्षोऽसुर-गौणमुख्यादेः । स० ४।३।२०५, अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् । पा० ४।३।८७।१, लुबाख्यायिकासु बहुलम् । स० ४।३।२०६ ]

## सोऽस्याभिजनो गिरिभ्यः शस्त्रजीविषु ॥५८॥

प्रथमान्तेभ्यो गिरिविशेषेभ्योऽभिजनभूतेभ्योऽस्येति षष्ठ्यर्थे आयुध-जीविष्वभिधेयेषु छो भवति । हृद्गोलः पर्वतोऽभिजन एषाम् हृद्गोलीया आयुधजीविनः । भोजकटीयाः रोहितगिरीयाः । गिरिभ्य इति किम् ? सांकाश्यकाः शस्त्रजीविनः । शस्त्रजीविष्विति किम् ? ऋक्षोदः पर्वतोऽभिजन एषाम् ब्राह्मणानाम् आर्क्षोदाः । यत्र पूर्वैरुषितं सोऽभिजनः । यत्र सम्प्रत्युष्यते स निवासः ।

[ सोऽस्य निवासः । अभिजनश्च । आयुधजीविभ्यश्छः पर्वते । पा० ४।३।८९-९१, स० ४।३।२०७-२०८ गिरिभ्यः शस्त्रजीविषु छः । स० ४।३।२०९ निवासाभिजनयोः को विशेषः ? निवासो नाम यत्र संप्रत्युष्यते । अभिजनो नाम यत्र पूर्वैरुषितम् । भाष्यम् । ४।३।८९-९० ]

## शालातुरीयः ॥५९॥

शालातुरोऽभिजनोऽस्येत्येतस्मिन्नर्थे शालातुरीय इति निपात्यते ।

[ तूदी-शलातुर-वर्मती-कूचवाराड् ढक्छण्ढञ्यकः । पा० ४।३।९४ सलातुराच्छण् । स० ४।३।२१० ]

**शण्डिकादिभ्यो ञ्यः ॥६०॥** [ पा० ४।३।९२ ]

शण्डिकादिभ्यः सोऽस्याभिजन इत्येतस्मिन्नर्थे ञ्यो भवति। शाण्डिक्यः ।

[ शण्डिक-शङ्ख-सट-शक-सर्वकेश-सर्वसेन-रह-बोध-कुचवारेभ्यो ञ्यः। स० ४।३।२११ ]

**सिन्ध्वादिभ्योऽण् ॥६१॥**

सिन्ध्वादिभ्यः सोऽस्याभिजन इत्येतस्मिन्नर्थे ऽण् भवति। सैन्धवः वार्णवः ।। सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । शाल्व । किष्किन्धा[1] । गन्दिक[2] । उरस । दरद् । तक्षशिला । वत्सोद्धरण । कौमेदुर[3] । काण्डवार । ग्रामणी । शकल[4] । छगलक । कंस । किन्नर । सङ्कुचित । सिंहकोष्ठ[5] । कर्ण । वर्वर । अवसान । ये तु कच्छादिषु [३।२।४८] पठ्यन्ते तेषामपि सिद्धे वुञपवादार्थं वचनम्। जनपदिनां च वाहीकग्रामाणां ठञ्ञिकयोरपवादार्थम् ।

[ सिन्धुतक्षशिलादिभ्योऽणञौ । पा० ४।३।९३, सिन्धु-गन्धार[6]-कश्मीर-मधुमत्-किष्किन्धोरस-साल्व-वर्णु-गन्दिक-दरत्-कम्बोजेभ्योऽण् । तक्षशिला-छगल-ग्रामणी-वत्सोद्धरण-काण्डधार-कौमेदुर-किन्नर-वर्वराऽवसान-कंस-सङ्कुचितेभ्योऽञ् । सिंहकोष्टुभ्यां कर्णकात् । स० ४।३।२१२-२१४]

**तूदीवर्मतीभ्यां ढञ् ॥६२॥** [स० ४।३।२१५]

तूदीवर्मतीभ्यां सोऽस्याभिजन इत्येतस्मिन्नर्थे ढञ् भवति । तौदेयः वार्मतेयः ।

[ तूदी-शलातुर-वर्मती-कूचवाराड् ढक्-छण्-ढञ्-यकः। पा० ४।३।९४]

**तत्र भक्तिर्महाराजाट् ठक् ॥६३॥**

तत्रेति सप्तम्यन्तान्महाराजाट् ठग् भवति भक्तिरस्येत्यस्मिन्नर्थे ।

---

[1] किष्किन्ध—MS. [2] गन्धिक—MS. [3] कौमोदुर—MS.
[4] शकल—MS. [5] सिंह । कोष्ठ । MS. [6] गान्धारि—L.

महाराज भक्तिरस्य माहाराजिकः। कथं स्रुघ्ने भक्तिरस्य स्रौघ्नः। राष्ट्रिय इति ? शेषे [ ३।२।१ ] इत्येव सिद्धम्।

[ भक्तिः। पा० ४।३।९५, स० ४।३।२१६। महाराजाट्‌ ठञ्। पा० ४।३।९७, ०ठक्। स० ४।३।२१७ ]

**अचित्तादेशकालात्** ॥६४॥ [स० ४।३।२१८]

अचित्तवाचिनो देशकालवर्जितात् तत्र भक्तिरस्येत्यस्मिन्नर्थे ठग् भवति। अपूपेषु भक्तिरस्य आपूपिकः। साङ्कुलिकः। अचित्तादिति किम् ? दैवदत्तः। अदेशकालादिति किम् ? स्रौघ्नः हैमनः।

[ अचित्तादेशकालाट्‌ ठक्। पा० ४।३।९६ ]

**वासुदेवार्जुनात् कन्** ॥६५॥

आभ्यां तत्र भक्तिरस्येत्येतस्मिन्नर्थे कन् भवति। वासुदेवकः अर्जुनकः।

[ वासुदेवार्जुनाभ्यां वुन्। पा० ४।३।९८, स० ४।३।२१९ ]

**गोत्राद् बहुलं वुञ्** ॥६६॥ [स० ४।३।२२०]

गोत्रे यो विहितस्तदन्तात् तत्र भक्तिरस्येत्यस्मिन्नर्थे बहुलं वुञ् भवति। औपगवकः, दाक्षकः। पाणिनीयः।

[ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्। पा० ४।३।९९ ]

**क्षत्रियात्** ॥६७॥ [स० ४।३।२२१]

क्षत्रियवाचिनस्तत्र भक्तिरस्येत्यस्मिन्नर्थे बहुलं वुञ् भवति। नाकुलकः साहदेवकः। पौरवीयः।

**जनपदवत् सर्वं तत्सरूपाद् बहुत्वे** ॥६८॥ [स० ४।३।२२२]

बहुत्वे जनपदसमानरूपात् क्षत्रियवाचिनस्तत्र भक्तिरस्येत्यस्मिन्नर्थे जनपदवत् सर्वं भवति। अङ्गेषु वङ्गेषु वा जनपदेषु भक्तिरस्य आङ्गकः वाङ्गकः। तद्वदङ्गेषु क्षत्रियेषु भक्तिरस्य आङ्गकः। वाङ्गकः। सर्वमिति किम् ? प्रकृतिरपि जनपदवद् यथा स्यात्। माद्रे वार्ज्ये वा भक्तिरस्य। मद्रकः वृजिकः। तत्सरूपादिति किम् ? पौरवीयः।

वहुत्व इति किम् ? एकत्वद्वित्वयोरसरूपादपि यथा स्यात्। आङ्गे आङ्गयोर्वा भक्तिरस्य आङ्गकः। क्षत्रियादित्येव। पञ्चालेपु ब्राह्मणेपु भक्तिरस्य पाञ्चालः। कथम् उशनसा प्रोक्तमौशनसम् वार्हस्पत्यम् पाणिनीयमिति ? शेपे [३।२।१] इत्येव सिद्धम्।

[जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने। पा० ४।३।१००]

**तेन प्रोक्तं वेदं वेत्त्यधीते ॥६९॥** [स० ४।३।२२३, २२७]

तृतीयान्तात्[1] प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोर्यथाविहितमणादयो भवन्ति। पिप्पलादेन प्रोक्तं वेदं विदन्त्यधीयते वा पैप्पलादाः। मैत्रायणीयाः। वेदमिति किम् ? पिप्पलादेन प्रोक्तं श्लोकं विदन्त्यधीयते वा।

[तेन प्रोक्तम्। पा० ४।३।१०१, तदधीते तद्वेद। छन्दोब्राह्मणानि च तद्विषयाणि। पा० ४।२।५९, ६६]

**तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥७०॥** [पा० ४।३।१०२, स० ४।३।२२८]

एतेभ्यस्तेन . प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोश्छण् भवति। तित्तिरिणा प्रोक्तं वेदं वेत्त्यधीते वा तैत्तिरीयः। वारतन्तवीयः, खाण्डिकीयः, औखीयः। वेदमित्येव। तित्तिरिणा प्रोक्तं श्लोकं वेत्त्यधीते वा।

**काश्यपकौशिकाभ्यामृषिभ्यां कल्पं च णिनिः ॥७१॥** [स० ४।३।२२९]

एताभ्यां तेन प्रोक्त वेद कल्प च वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। काश्यपेन प्रोक्तं वेदं कल्पं च विदन्त्यधीयते वा काश्यपिनः। कौशिकिनः। ऋषिभ्यामिति किम् ? काश्यपीयः कल्पः। कल्पं चेति किम् ? काश्यपीया पुराणसहिता।

[काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। पा० ४।३।१०३]

---

[1]तृतीयात्—MS.

महाराज भक्तिरस्य माहाराजिकः। कथं स्रुघ्ने भक्तिरस्य स्रौघ्नः। राष्ट्रिय इति? शेषे [ ३।२।१ ] इत्येव सिद्धम्।

[ भक्तिः। पा० ४।३।९५, स० ४।३।२१६। महाराजाट्ठञ्। पा० ४।३।९७, ०ठक्। स० ४।३।२१७ ]

**अचित्तादेशकालात्** ॥६४॥ [स० ४।३।२१८]

अचित्तवाचिनो देशकालवर्जितात् तत्र भक्तिरस्येत्यस्मिन्नर्थे ठग् भवति। अपूपेषु भक्तिरस्य आपूपिकः। साष्कुलिकः। अचित्तादिति किम्? दैवदत्तः। अदेशकालादिति किम्? स्रौघ्नः हैमनः।

[ अचित्तादेशकालाट्ठक्। पा० ४।३।९६ ]

**वासुदेवार्जुनात् कन्** ॥६५॥

आभ्यां तत्र भक्तिरस्येत्येतस्मिन्नर्थे कन् भवति। वासुदेवकः अर्जुनकः।

[ वासुदेवार्जुनाभ्यां वुन्। पा० ४।३।९८, स० ४।३।२१९ ]

**गोत्राद् बहुलं वुञ्** ॥६६॥ [स० ४।३।२२०]

गोत्रे यो विहितस्तदन्तात् तत्र भक्तिरस्येत्यस्मिन्नर्थे बहुलं वुञ् भवति। औपगवकः, दाक्षकः। पाणिनीयः।

[ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्। पा० ४।३।९९ ]

**क्षत्रियात्** ॥६७॥ [स० ४।३।२२१]

क्षत्रियवाचिनस्तत्र भक्तिरस्येत्यस्मिन्नर्थे बहुलं वुञ् भवति। नाकुलकः साहदेवकः। पौरवीय.।

**जनपदवत् सर्वं तत्सरूपाद् बहुत्वे** ॥६८॥ [स० ४।३।२२२]

बहुत्वे जनपदसमानरूपात् क्षत्रियवाचिनस्तत्र भक्तिरस्येत्यस्मिन्नर्थे जनपदवत् सर्वं भवति। अङ्गेषु वङ्गेषु वा जनपदेषु भक्तिरस्य आङ्गकः वाङ्गकः। तद्वदङ्गेषु क्षत्रियेषु भक्तिरस्य आङ्गकः। वाङ्गकः। सर्वमिति किम्? प्रकृतिरपि जनपदवद् यथा स्यात्। माद्रे वार्ज्ये वा भक्तिरस्य। मद्रकः वृजिकः। तत्सरूपादिति किम्? पौरवीयः।

बहुत्व इति किम्? एकत्वद्वित्वयोरसरूपादपि यथा स्यात्। आङ्गे आङ्गयोर्वा भक्तिरस्य आङ्गकः। क्षत्रियादित्येव। पञ्चालेषु ब्राह्मणेषु भक्तिरस्य पाञ्चालः। कथम् उशनसा प्रोक्तमौशनसम् बार्हस्पत्यम् पाणिनीयमिति? शेषे [३।२।१] इत्येव सिद्धम्।

[जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने। पा० ४।३।१००]

**तेन प्रोक्तं वेदं वेत्त्यधीते ॥६९॥** [स० ४।३।२२३, २२७]

तृतीयान्तात्[1] प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोर्यथाविहितमणादयो भवन्ति। पिप्पलादेन प्रोक्तं वेदं विदन्त्यधीयते वा पैप्पलादाः। मैत्रायणीयाः। वेदमिति किम्? पिप्पलादेन प्रोक्तं श्लोकं विदन्त्यधीयते वा।

[तेन प्रोक्तम्। पा० ४।३।१०१, तदधीते तद्वेद। छन्दोब्राह्मणानि च तद्विषयाणि। पा० ४।२।५९, ६६]

**तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥७०॥** [पा० ४।३।१०२, स० ४।३।२२८]

एतेभ्यस्तेन प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोश्छण् भवति। तित्तिरिणा प्रोक्तं वेदं वेत्त्यधीते वा तैत्तिरीयः। वारतन्तवीयः, खाण्डिकीयः, औखीयः। वेदमित्येव। तित्तिरिणा प्रोक्तं श्लोकं वेत्त्यधीते वा।

**काश्यपकौशिकाभ्यामृषिभ्यां कल्पं च णिनिः ॥७१॥** [स० ४।३।२२९]

एताभ्यां तेन प्रोक्तं वेदं कल्पं च वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। काश्यपेन प्रोक्तं वेदं कल्पं च विदन्त्यधीयते वा काश्यपिनः। कौशिकिनः। ऋषिभ्यामिति किम्? काश्यपीयः कल्पः। कल्पं चेति किम्? काश्यपीया पुराणसंहिता।

[काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। पा० ४।३।१०३]

---

[1] तृतीयात्—MS.

छगलिनस्तेन प्रोक्तं वेदं विदन्त्यधीयत इत्यनयोरर्थयोर्ढिनुग् भवति। छागलेयिनः।

**कर्मन्दकृशाश्वाभ्यां भिक्षुनटसूत्रमिनिः** ॥७७॥ [स० ४।३ २३५]

एताभ्यां तेन प्रोक्तं भिक्षुसूत्रं नटसूत्रं च वेत्त्यधीत इत्येतयोरिनिर्भवति। कर्मन्देन प्रोक्तं भिक्षुसूत्रं नटसूत्रं च विदन्त्यधीयते वा कर्मन्दिनो भिक्षवः। कृशाश्वेन प्रोक्तं नटसूत्रं विदन्त्यधीयते वा कृशाश्विनो नटाः। वेदनाध्ययनयोः प्रत्येकं सम्बन्धप्रसिद्धेर्न याथासंख्यम्।

[पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। कर्मन्दकृशाश्वादिनिः। पा० ४।३।११०-१११]

**पाराशर्यशिलालिभ्यां णिनिः** ॥७८॥ [स० ४।३।२३६]

एताभ्यां तेन प्रोक्तं भिक्षुसूत्रं नटसूत्रं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। पाराशर्येण प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा पाराशरिणो भिक्षवः। शिलालिना प्रोक्तं नटसूत्रं विदन्त्यधीयते वा शैलालिनो नटाः।

[पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। पा० ४।३।११०]

**पुराणे ब्राह्मणम्** ॥७९॥ [स० ४।३।२३७]

पुराणविवाचिनस्तेन प्रोक्तं ब्राह्मणं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। शाट्यायनेन प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा शाट्यायनिनः। ऐतरेयिणः। पुराणग्रहणं किम्? याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि ब्राह्मणानि। [३।२।२१] दाकालादिपाठादण्। अस्मादेव वचनात् पुराणशब्दस्यापि साधुत्वम्।

[पुराणप्रोक्तेषु ब्राह्मणकल्पेषु। पा० ४।३।१०५, पुरो नः। स० ४।३।११०]

**कल्पे** ॥८०॥ [स० ४।३।२३८]

पुराणपेस्तेन प्रोक्ते कल्पे णिनिर्भवति। पिङ्गेन प्रोक्तः पैङ्गी कल्पः। आरुणपराजी। योऽपि पैङ्गिनं कल्पं विदन्त्यधीयते वा तेऽपि पैङ्गिनः। प्रोक्ताद्धि लुगुक्तः। पुराणपेरित्येव। आश्मरथः कल्पः।

**शौनकादिभ्यः** ॥७२॥ [० छन्दसि। पा० ४।३।१०६]

शौनकादिभ्यस्तेन प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। शौनकिनः वाजसनेयिनः ॥ वेदमित्येव। शौनकीया शिक्षा ॥ शौनक। वाजसनेय। शार्ङ्गरव। शापेय। शाष्पेय। खाडायन। स्कन्द। स्कम्भ। देवदर्श। रज्जुभार। रज्जुकण्ठ। कठशाठ। कषाय।

[शौनक-शार्ङ्गरव-सापेय-शाष्पेय-वाजसनेय-खाडायन-कषाय-तल-स्तम्भ-स्कन्ध-देवदर्श-रज्जुकण्ठ-कठ-शठेभ्यः। स० ४।३।२३०]

**कलापिवैशम्पायनशिष्येभ्यः** ॥७३॥

कलापिशिष्येभ्यो वैशम्पायनशिष्येभ्यश्च तेन प्रोक्तं वेदं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। तत्र कलापिशिष्याः हरिद्रु तुम्बरु उलप छगली च। वैशम्पायनशिष्याः आलम्बि पिलिङ्ग कमल इति प्राच्याः, श्यामायन कठ कलापीत्युदीच्याः, ऋचाभ आरुणि तण्ड इति माध्यमाः। साक्षाच्छिष्याश्चेह गृह्यन्ते न प्रशिष्याः, कलापिशिष्याणां पृथग्विधानात्, कठशिष्यस्य च खाडायनस्य शौनकादिषु ग्रहणात्। हरिद्रुणा प्रोक्तं वेदं विदन्त्यधीयते वा हारिद्रविणः। तौम्बुरविणः, आलम्बिनः, औलपिनः, पैलिङ्गिनः, कामलिनः। श्यामायनिनः। आर्चाभिनः, आरुणिनः, ताण्डिनः।

[कलापि-वैशम्पायनान्तेवासिभ्यश्च। पा० ४।३।१०४ हरिद्रु-तुम्बुरूलपाऽऽलम्बि-पलिङ्ग-कमल-श्यामायनर्चाभ-ताण्डारुणिभ्यः। स० ४।३।२३१]

**कठचरकाल्लुक्** ॥७४॥ [पा० ४।३।१०७, स० ४।३।२३२]

एताभ्यां तेन प्रोक्तं वदं वेत्त्यधीते इत्येतयोरर्थयोर्विहितस्य णिनेरणश्च लुभवति। कठन प्रोक्तं वेदं विदन्त्यधीयते वा कठाः। चरकाः।

**कलापिनोऽण्** ॥७५॥ [पा० ४।३।१०८, स० ४।३।२३३]

कलापिनस्तेन प्रोक्तं वेदं वेत्त्यधीत इत्यनयोरर्थयोरण् भवति। कालापाः। अनपत्ये च [५।३।१७७] इति प्रतिषधे प्राप्ते कलाप्यादीनाम् [५।३।१४०] इत्यन्त्याजादिलोपः।

**छगलिनो ढिनुक्** ॥७६॥ [पा० ४।३।१०९, स० ४।३।२३४]

छगलिनस्तेन प्रोक्तं वेदं विदन्त्यधीयत इत्यनयोरर्थयोर्ढिनुग् भवति। छागलेयिनः।

**कर्मन्दकृशाश्वाभ्यां भिक्षुनटसूत्रमिनिः** ॥७७॥ [स० ४।३ २३५]

एताभ्यां तेन प्रोक्तं भिक्षुसूत्रं नटसूत्रं च वेत्त्यधीत इत्येतयोरिनिर्भवति। कर्मन्देन प्रोक्तं भिक्षुसूत्रं नटसूत्रं च विदन्त्यधीयते वा कर्मन्दिनो भिक्षवः। कृशाश्वेन प्रोक्तं नटसूत्रं विदन्त्यधीयते वा कृशाश्विनो नटाः। वेदनाध्ययनयोः प्रत्येकं सम्बन्धप्रसिद्धेर्न याथासंख्यम्।

[पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। कर्मन्दकृशाश्वादिनिः। पा० ४।३।११०-१११]

**पाराशर्यशिलालिभ्यां णिनिः** ॥७८॥ [स० ४।३।२३६]

एताभ्यां तेन प्रोक्तं भिक्षुसूत्रं नटसूत्रं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। पाराशर्येण प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा पाराशरिणो भिक्षवः। शिलालिना प्रोक्तं नटसूत्रं विदन्त्यधीयते वा शैलालिनो नटाः।

[पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। पा० ४।३।११०]

**पुराणर्षे ब्राह्मणम्** ॥७९॥ [स० ४।३।२३७]

पुराणर्षिवाचिनस्तेन प्रोक्तं ब्राह्मणं वेत्त्यधीत इत्येतयोरर्थयोर्णिनिर्भवति। शाट्यायनेन प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा शाट्यायनिनः। ऐतरेयिणः। पुराणग्रहणं किम्? याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि ब्राह्मणानि। [३।२।२१] शकलादिपाठादण्। अस्मादेव वचनात् पुराणशब्दस्यापि साधुत्वम्।

[पुराणप्रोक्तेषु ब्राह्मणकल्पेषु। पा० ४।३।१०५, पुरो नः। स० ४।३।११०]

**कल्पे** ॥८०॥ [स० ४।३।२३८]

पुराणर्षेस्तेन प्रोक्ते कल्पे णिनिर्भवति। पिङ्गेन प्रोक्तः पैङ्गी कल्पः। आरुणपराजी। येऽपि पैङ्गिनं कल्पं विदन्त्यधीयते वा तेऽपि पैङ्गिनः। प्रोक्ताद्धि लुगुक्तः। पुराणर्षेरित्येव। आश्मरथः कल्पः।

[आथर्वणिकस्येकलोपश्च । पा० ४।३।१३३।२, लुक् च वा । स० ४।३।२४०]

**अथर्वणोऽण् वेदे ॥८१॥** [स० ३।३।२३९ ]

अथर्वणस्तेन प्रोक्ते वदेऽण् भवति। आथर्वणो वेदः। कथम् ...थर्वा वेदः, वसिष्ठोऽनुवाकः, विश्वामित्र इति ? तेन प्रोक्ते ...द्वदुपचारात्। कथं सुदाम्ना तुल्या दिक् सौदामनी हैमवती ? शेषे ...३।२।१] इत्येव सिद्धम्। कथं सुदाम्ना तुल्यदिक् सुदामतः हिमवत्तः। ...रसा तुल्या दिक् उरस्त इति ? तत उपलभ्यते ततो भवतीति वा ...वधावहाग्रुहो: [४।३।६] इति तस् भविष्यति। उरसा एका दिक् ...रस्य इति तत्समीपेऽपि भवस्तत्रेति शक्यते वक्तुम्, यथा गङ्गायां ...गाव इति। *अतो देहांशाद् [१८] इत्येव सिद्धम्। पाणिनिनोपज्ञातम्* ...पाणिनीयम्, शिवेन कृतो ग्रन्थः शैवः इति शेष [३।२।१] इत्येव सिद्धम्। ...अग्रन्थेऽपि तर्हि प्राप्नोति ? इष्यत एव, यथा इष्टकाभिः कृतः प्रासाद ...ऐष्टकः, नारदेन कृतं गीतं नारदीयम्, मनसा कृता मानसी कन्या। अथ तस्य स्वम् [८५] इत्यत्र भवति ? ततस्तक्ष्णा कृतः प्रासाद इत्यत्रापि तस्य स्वमिति विवक्षायां भवत्येव, प्रतिषेधाभावात्। संज्ञायामपि मक्षिकाभिः कृतम् माक्षिकम्, गार्मुतम्, सारघम्, पौत्तिकम्, क्षौद्रम्, भ्रामरम्, वाटरमिति शेषे [ ३।२।१ ] इत्येव सिद्धम्।

[ तेनैकदिक्। तसिश्च। उरसो यच्च। उपज्ञाते। कृते ग्रन्थे। संज्ञायाम्। पा० ४।३।११२-११७, स० ४।३।२४२-२४७. See under 83.]

**पुरुषात् कृते ढञ् ॥८२॥** [ पा० ५।१।१० भाष्यम् ]

पुरुषात् तृतीयान्तात् कृते ढञ् भवति। पौरुषेयम्।

[ सर्वपुरुषाभ्यां णढञौ। पा० ५।१।१० पुरुषाद्वधे। पा० ५।१।१०।२, अत्यल्पमिदमुच्यते—पुरुषाद्वध इति। पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। भाष्यम्। पुरुषाद् ढञ्। स० ४।३।२४९ ]

**संज्ञायां वातपादञ् ॥८३॥**

वातपात् तेन कृते संज्ञाया विषये अञ् भवति। वातपम्। संज्ञाया-मिति किम् ? वातपीयम्।

[ संज्ञायाम् । क्षुद्राभ्रमरवटरपादपादञ् । पा० ४।३।११७, ११९, संज्ञायां मक्षिका-सरघा-मर्मुत्-पुत्तिकादिभ्यः । क्षुद्राभ्रमरवटरवातपादञ् । स० ४।३।२४७-२४८ ]

**कुलालादिभ्यो वुञ् ॥८४॥** [ पा० ४।३।११८ ]

कुलालादिभ्यस्तेन कृते वुञ् भवति । कौलालकम् वारुटकम् । संज्ञायामित्येव । कौलालम् ॥ कुलाल । वरुट । चण्डाल । निषाद । कर्मार । सेना । देवराज । पर्षद् । वधू । रुरु । अनडुह् । ब्राह्मण । कुम्भकार । श्वपाक । कथम् उपगोः स्वम् औपगवम्, राष्ट्रियमिति ? शेषे [ ३।२।१ ] इत्येव सिद्धम् । स्वे ग्रामजनपदमनुष्येभ्यः [ पा० ४।३।१२०।५] इति न वक्तव्यमन्यतोऽपि दर्शनात् । ऐन्द्रम् । वार्हस्पत्यम् । आग्नेयम् । कालेयम् । वारुणम् । पैशाचम् । आसुरम् ।

[ कुलाल-कुम्भकार-कर्मार-वरुड-निषाद-चण्डाल-श्वपाकाऽनडुद्-ब्राह्मण-परिषद्-देवराज-कुरु-सेना-सैरन्ध्री-बन्धुभ्यो वुञ् । स० ४।३।२५० ]

**तस्य स्वं रथाद् यत् ॥८५॥**

षष्ठ्यन्ताद्रथात् स्वस्मिन्नभिधेये यद् भवति । रथस्य स्वम् रथ्यम् । रथस्य वोढा रथ्यः । द्विरथ्यः त्रिरथ्यः । रथस्य विशेषणत्वात् तदन्तविधिः । अनजादित्वान्न लुक् ।

[ तस्येदम् । पा० ४।३।१२०, स० ४।३।२५१, रथाद् यत् । पा० ४।३।१२१, तद्वहति रथयुगप्रासङ्गम् । ४।४।७६, रथाद् वोढरि यत् । स० ४।३।२५२ ]

**यानादेरञ् ॥८६॥**

वाहनपूर्वाद्रथात्तस्य स्वमित्येतस्मिन्नर्थेऽञ् भवति । आश्वरथम् । रासभरथम् ।

[ पत्त्रपूर्वादञ् । पा० ४।३।१२२, पत्त्रादेरञ् । स० ४।३।२५५ ]

**यानात् ॥८७॥**

वाहनात् तस्य स्वमित्येतस्मिन्नर्थेऽञ् भवति । आश्वम् रासभम् । वाह्य इति न वक्तव्यम्, शृङ्खलादावपि प्रतीतेः । आध्वर्यवम् पार्षदम् इत्यणा सिद्धम् ।

[ पत्राद् वाह्ये । पा० ४।३।१२०।६, स० ४।३।२५६ ]

**हलसीराट् ठक् ॥८८॥** [ पा० ४।३।१२४, स० ४।३।२५८ ]

हलसीराभ्यां तस्य स्वमित्येतस्मिन्नर्थे ठग् भवति। हालिकम् सैरिकम्।

**चार्थाद्वैरे वुनदेवासुरादिभ्यः ॥८९॥**

चार्थवृत्तेर्देवासुरादिवर्जितात् तस्य स्वमित्यत्रार्थे वैरेऽभिधेये वुन् भवति। बाभ्रवशालङ्कायनिका। काकोलूकिका। स्वभावात् स्त्रीलिङ्गम्। अदेवासुरादिभ्य इति किम्? दैवासुरम्। राक्षोऽसुरम्।

[ द्वन्द्वाद् वुन् वैरमैथुनिकयोः। पा० ४।३।१२५, वैरे देवासुरादिभ्यः प्रतिषेधः। वा० १ द्वन्द्वाद् वैरे वुन्देवासुरादिभ्यः। स० ४।३।२५९ ]

**विवाहे ॥९०॥** [ स० ४।३।२६० ]

चार्थात् तस्य स्वमित्यर्थे उद्वाहेऽभिधेये वुन् भवति। कुत्सकुशिकिका अत्रिभरद्वाजिका।

**नटाञ् ञ्यो नृत्ये ॥९१॥** [ ० नृत्ते। स० ४।३।२६१ ]

नटात् तस्य स्वमित्यत्रार्थे नृत्येऽभिधेये ञ्यो भवति। नटानां स्वम् नाट्यम्। नृत्य इति किम्? नटानां गृहम्।

[ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः। पा० ४।३।१२९ ]

**छन्दोगौक्थिकयाज्ञिकबह्वृचाद्व धर्माम्नायसङ्घेषु ॥९२॥** [०बह्वृचेभ्यो०। स० ४।३।२६२ ]

छन्दोगादिभ्यस्तस्य स्वमित्यत्रार्थे धर्मादिष्वभिधेयेषु ञ्यो भवति। छन्दोगानां धर्म आम्नायः सङ्घो वा छान्दोग्यः। औक्थिक्यः। याज्ञिक्यः। बाह्वृच्यः। धर्मादिष्विति किम्। छन्दोगानां गृहं छान्दोगम्।

[ चरणाद्धर्माम्नाययोः। पा० ४।३।१२०।११. See under 91.]

**आथर्वणः ॥९३॥**

आथर्वणिकानां धर्म आम्नायः सङ्घो वा आथर्वण इत्यण् इकलोपश्च निपात्यते।

[ आथर्वणिकस्येकलोपश्च। पा० ४।३।१३३।२, ४।३।१३३ का०, आथर्वणिकादणिकलोपश्च। स० ४।३।२६३ ]

**चरणाद्वुञ् ॥९४॥** [ स० ४।३।२६४ ]

चरणवाचिनस्तस्य स्वमित्यत्रार्थे धर्मादिष्वभिधेयेषु वुञ् भवति। कठानां धर्म आम्नायः सङ्घो वा काठकः। पैप्पलादकः।

[ गोत्रचरणाद् वुञ्। पा० ४।३।१२६ ]

**गोत्राददण्डमाणवान्तेवासिषु ॥९५॥** [ स० ४।३।२६५ ]

गोत्रे यो विहितस्तदन्तात् तस्य स्वमित्यत्रार्थे दण्डमाणवान्तेवासिवर्जिते वुञ् भवति। औपगवकः। अदण्डमाणवान्तेवासिष्विति किम् ? दाक्षा दण्डप्रधाना माणवा अन्तेवासिनो वा।

[ न दण्डमाणवान्तेवासिषु। पा० ४।३।१३० ]

**रैवतिकादिभ्यश्छः ॥९६॥** [ पा० ४।३।१३१ ]

रैवतिकादिभ्यो गोत्रेभ्यस्तस्य स्वमित्यत्रार्थे छो भवति। रैवतिकीय स्वापिशीयः॥ रैवतिक। स्वापिशि। क्षैमधृत्वि[1]। गौरग्रीवि। औदमेघि। औदवापि। बैजवापि।

[रैवतिक-स्वापिशि-क्षैमवृद्धि-गौरग्रीव्यौदमेघ्यौदवापि-बैजवापिभ्यश्छः। स० ४।३।२६६ ]

**कौपिञ्जलहास्तिपदादण् ॥९७॥** [ पा० ४।३।१३३।११ ]

आभ्यां गोत्राभ्यां तस्य स्वमित्यत्रार्थेऽण् भवति। कौपिञ्जलः हास्तिपादः।

[ का० ४।३।१३२। कौपिञ्जलहास्तिपदाभ्यामण्। स० ४।३।२६७ ]

**सङ्घाङ्कघोषलक्षणेष्वञ्यञिञः ॥९८॥** [ स० ४।३।२६८ ]

अञन्ताद यञन्ताद् इञन्ताच्च तस्य स्वमित्यत्रार्थे सङ्घादिष्वभिधेयेष्वण् भवति। बैदः सङ्घः अङ्कः घोषः, बैदं लक्षणम्। गार्गः सङ्घः, अङ्कः, घोषः; गार्गं लक्षणम्। दाक्षः सङ्घः, अङ्कः, घोषः;

---

[1] क्षौमधन्वि—MS.

दाक्षं लक्षणम् । सङ्घादिष्विति किम ? त्रैदानां गृहम् । गोत्रादित्येव । वातापीयः ।

[ सङ्घाङ्कलक्षणेष्वञ्-यञ्-इञामण् । पा० ४।३।१२७ ]

**शाकलाद्वा** ॥९९॥ [ पा० ४।३।१२८, स० ४।३।२६९ ]

शाकलात् तस्य स्वमित्यत्रार्थे सङ्घादिष्वभिधेयेष्वण् वा भवति । शाकलेन प्रोक्तं वेदं विदन्त्यधीयते वा शाकलाः । तेषां सङ्घः शाकलः शाकलकः अङ्को घोषो वा । शाकलं लक्षणम् शाकलकम् ।

**वहेस्तुरिट् च** ॥१००॥ [ स० ४।३।२७० ]

वहेर्यस्तृशब्दस्तदन्तात् तस्य स्वमित्यत्रार्थेऽण् भवति तुश्चेडागमः । संवोढुः स्वम् सांवहित्रम् ।

[ वहेस्तुरणिट् च । पा० ४।३।१२०।८ ]

**आग्नीध्रं शरणे** ॥१०१॥

अग्नीधः शरणेऽभिधेये तस्य स्वमित्यत्रार्थे रञ् निपात्यते जश्त्वाभावश्च । आग्नीध्रं शरणम् ।

[ अग्नीधः शरणे रञ् भं च । पा० ४।३।१२०।९, शरणेऽग्नीधो रञ् पश्च । स० ४।३।२७१ ]

**समिध आधाने षेण्यण्** ॥१०२॥ [ स० ४।३।२७२ ]

आधीयतेऽनेनत्याधानं तत्र समिधः षेण्यण् भवति । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

[ समिधामाधाने षेण्यण् । पा० ४।३।१२०।१० ]

**विकारे** ॥१०३॥

षष्ठ्यन्ताद् विकारेऽभिधेये यथाविहितमणादयो भवन्ति । अश्मनो विकार आश्मः। [आश्मनः।] भास्मनः । शेषे [३।२।१] इति सिद्धे पुनर्वचन शैषिकनिवृत्त्यर्थम् । हालः सैरः ।

[ तस्य विकारः। पा० ४।३।१३४, स० ४।४।१ ]

**वृक्षोपधिभ्योऽंशे च** ॥१०४॥

वृक्षेभ्य ओपधिभ्यश्चांशे विकारे चाणादयो भवन्ति। कारीरं काण्डम्, कारीरं भस्म। मौर्वं काण्डम्, मौर्वं भस्म।

[अवयवे च(०वश्च-स०) प्राण्योपधिवृक्षेभ्यः। पा० ४।३।१३५, स० ४।४।२]

**प्राणिभ्योऽञ्** ॥१०५॥

प्राणिभ्यो विकारेऽंशे चाञ् भवति। कापोतं मांसम्, कापोतं सक्थि। चापं मांसम्, चापं सक्थि।

[प्राणिरजतादिभ्योऽञ्। पा० ४।३।१५४ उवर्णान्तानुदात्तादिप्राणिभ्योऽञ्। रजत-सीस-कंस-लोहोदुम्बर-बीभ्रदारु-पीतदारु-विभीतक-रोहितक-त्रिकण्टक-कण्टकारिभ्यश्च। स० ४।४।६-७]

**तालादिभ्योऽण्** ॥१०६॥ [पा० ४।३।१५२]

तालादिभ्यो विकारावयवयोरर्थयोरण् भवति। तालं धनुः, तालमयमन्यत्। वार्हिणः। तालाद् धनुषि। वर्हिन्। इन्द्रादृश। इन्द्रालिस। इन्द्रायुध। चाप। श्यामाक। पीयूक्षा। गवेधुका।

[तालादण् धनुषि। इन्द्रादालिसादिसा(दृशा?)युधेभ्यः। वर्हिण-चप-चमर-पीयूक्षा-गवेधुका-श्यामाकेभ्यः। स० ४।४।९-१०]

**हेमार्थात् परिमाणे** ॥१०७॥ [स० ४।४।११]

सुवर्णार्थात् परिमाणे विकारे चाण् भवति। हाटको निष्कः। जातरूपं कार्षापणम्, तापनीयम्। परिमाण इति किम्? यष्टिरियं हाटकमयी।

[जातरूपेभ्यः परिमाणे। पा० ४।३।१५३]

**त्रपुजतुनोः षुक्** ॥१०८॥ [पा० ४।३।१३८,० च। स० ४।४।१२]

त्रपुजतुनोर्विकारे षुगागमो भवति, अण् तु सिद्ध एव। अत एव मयट् न बाधते। त्रापुषम् जातुषम्। त्रपुमयं जतुमयम्।

**मयडभक्षाच्छादने** ॥१०९॥

प्रकृतिमात्राद्विकारेऽवयवे च भक्ष्याच्छादनवर्जिते मयड् भवति। अश्ममयम् करीरमयम्। दूर्वामयम्। अणादीनां मयटश्चोभयविधानविकल्पः। अभक्षाच्छादन इति किम्? मौद्गः सूपः। कार्पासमाच्छादनम्।

[ मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः । पा० ४।३।१४३, स० ४।४।१३]

**एकाचः ॥११०॥**

एकाचो विकारे मयड् भवति, पुनर्विधानान्नित्यम्। वाङ्मयम् मृन्मयम् । अविकारे कथं गोमयमिति ? वा गोमय [ ३।२।४४ ] इति निपातनात् ।

[ एकाचो नित्यं मयटमिच्छन्ति । काशिका ४।३।१४४, नित्यमेकाचः । स० ४।४।१४, गोश्च पुरीषे । पा० ४।३।१४५, गोः पुरीषे । स० ४।४।१५]

**छे ॥१११॥** [ स० ४।४।१६ ]

छविषये, विकारावयवयोर्मयड् भवति नित्यम् । आम्रमयम् शालमयम् ।

[ नित्यं वृद्धशरादिभ्यः । पा० ४।३।१४४ ]

**व्रीहेः पुरोडाशे ॥११२॥** [पा० ४।३।१४८, स० ४।४।१८]

व्रीहेः पुरोडाशविकारे मयड् भवति। व्रीहिमयः पुरोडाशः । व्रैहोऽन्यः ।

**तिलयवपिष्टादसंज्ञायाम् ॥११३॥**

तिलादिभ्यो विकारेऽवयवे चासंज्ञायां मयड् भवति नित्यम् । तिलमयम् । यवमयम् । पिष्टमयम् । असंज्ञायामिति किम् ? तैलम् । यावकम् । पिष्टिका ।

[पिष्टाच्च । असंज्ञायां तिलयवाभ्याम् । पा० ४।३।१४६, १४९, तिलयवाभ्यामसंज्ञायाम् । पिष्टात् । स० ४।४।१९-२०]

**शरादिभ्यः ॥११४॥**

शरादिभ्यो विकारावयवयोर्मयड् भवति । शरमयम् । दर्भमयम् ॥ शर । दर्भ । कुटी । तृण । सोम । वल्वज ।

[ नित्यं वृद्धशरादिभ्यः। पा० ४।३।१४४, शर-दर्भ-तृण-कुटी-सोम-वल्वजेभ्यः । स० ४।४।१७]

**क्रीतवत् परिमाणात् ॥११५॥** [पा० ४।३।१५६, स० ४।४।२२]

परिमाणाद् विकारे क्रीत इव विधिर्भवति। निष्कस्य विकारः नैष्किकः। शत्यः शतिकः। साहस्रः। द्विनिष्कः द्विनैष्किकः।

**शम्याष्ट्लञ्** ॥११६॥ [पा० ४।३।१४२, स० ४।४।२३]

शम्या विकारावयवयोः ष्ट्लञ् भवति। शामीलः शामीली।

**उष्ट्राद् वुञ्** ॥११७॥ [पा० ४।३।१५७, स० ४।४।२४]

उष्ट्राद्विकारावयवयोर्वुञ् भवति। औष्ट्रकः।

**उमोर्णाद् वा** ॥११८॥

उमोर्णाभ्यां विकारावयवयोर्वुञ् वा भवति। औमकम् औमम्। और्णकम् और्णम्।

[उमोर्णयोर्वा। पा० ४।३।१५८, उमोर्णाभ्यां वा। स० ४।४।२५]

**एणीकोषाड् ढञ्** ॥११९॥ [स० ४।४।२६]

एणीकोषाभ्यां विकारावयवयोर्ढञ् भवति। ऐणेयम् कौशेयम्।

[एण्या ढञ्। पा० ४।३।१५९, विकारे कोषाड् ढञ्। पा० ४।३।४२।१]

**पुरुषाद्वधे च** ॥१२०॥ [स० ४।४।२७]

पुरुषाद्वधे विकारे च ढञ् भवति। पौरुषेयो विकारः, पौरुषेयो वधः।

[पुरुषाद्वधे। पा० ५।१।१०।२, पुरुषाद् वध-विकार-समूह-तेनकृतेष्विति वक्तव्यम्। भाष्यम्]

**हैयङ्गवीनं संज्ञायाम्** ॥१२१॥ [पा० ५।२।२३]

हैयङ्गवीनमिति निपात्यते ह्योगोदोहस्य विकार इत्येतस्मिन्नर्थे संज्ञा चेत्। हैयङ्गवीनम्। नवनीतं घृतम्, यत् सद्यः पक्वम्।

[ह्योगोदोहस्य हियङ्ग्वादेश. संज्ञायां तस्य विकारे। पा० ५।२।२३।१, ह्योगोदोहात् खञ् हियङ्गुदचास्य संज्ञायाम्। स० ४।४।२८]

**पयसो यत्** ॥१२२॥ [स० ४।४।३०]

पयसो विकारे यद् भवति। पयस्यम्। कथं गव्यम्? गोरचि यत् [२।४।१५] इत्येव सिद्धम्।

[गोपयसोर्यत्। पा० ४।३।१६०]

**आप्यं वा** ॥१२३॥

अप्शब्दाद् विकारे यद् वा निपात्यते दीर्घत्वं च। आप्यम्* अम्मयम्।

[अपो यञ् वा। स० ४।४।२९]

**द्रोः** ॥१२४॥ [द्रोश्च। पा० ४।३।१६१, स० ४।४।३१]

द्रुशब्दाद् विकारावयवयोर्यद् भवति। द्रव्यम्।

**माने वयः** ॥१२५॥ [पा० ४।३।१६२, स० ४।४।३२]

द्रोः शब्दान्माने विकारे च वयो भवति। द्रुवयं मानम्। कथम्—आमलक्याः फलम् आमलकम्, कुवलम् बदरमिति? प्रकृत्यन्तरत्वात् सिद्धम्। अण्मयटावपि तर्हि प्राप्नुतः? न, तदन्तात् फलस्याप्रतीतेः। अन्यथा हि फलादपि वृक्षे स्याताम्। फलप्रतीतौ तु भवत्येव†। वैणवम् प्लाक्षम् नैयग्रोधम् ऐङ्गुदम् काक्षतवम्[1]। बार्हतम् जाम्बवम्। जम्बु फलमिति प्रकृत्यन्तरम्, जम्बूः फलमित्यभेदोपचारात्। तथा हरीतकी कोशातकी द्राक्षा व्रीहयः तिलाः मुद्गाः यवाः माषाः शालयः गोधूमाः, यथा मुद्गैः शालीन् भुङ्क्त इति। तथा पुष्पमूलेष्वपि। मल्लिका नवमालिका बृहती विदारी। क्वचिद् भेदः। पाटलानि कुसुमानि, एरण्डानि मूलानि। क्वचिदुभयम्। शैरीषं कुसुमम्, शिरीषम्।

[फले लुक्। प्लक्षादिभ्योऽण्। जम्ब्वा वा। लुप् च। (लुप्-प्रकरणे फलपाकशुषामुपसंख्यानम्। पुष्पमूलेषु बहुलम्। वा। १-२) हरीतक्यादिभ्यश्च। पा० ४।३।१६३-१६७। फले लुक्। प्लक्ष-न्यग्रोधाऽश्वत्थेङ्गुदी-वेणु-बृहती-शिग्रु-कर्कन्धुभ्योऽण्। जम्ब्वा वा। लुप् च। हरीतकी-पथ्याऽम्लिका-चिञ्चा-द्राक्षा-मृद्वीका-पिप्पली-कणा-कोशातकी श्वेतपाकशादिभ्यः। फलपाकशोषिभ्यश्च गोधूमादिभ्यः। पुष्पमूलेषु मालती-शेफालिका-मल्लिका-नवमालिकाऽंशुमती बृहती-विदारी-हरिद्राभ्यः। न वरणपाटलैरण्डाल्वादिभ्यः। करवीराऽशोक-चम्पक-कदम्बादिभ्यो लुक्। शिरीषेङ्गोवेरादिभ्यो वा। स० ४।४।३३-४२]

---

* Not sanctioned by Pāṇini. † One expected भवत एव.

[1] काचयतवम्—MS.

**कांस्यपारशवौ** ॥१२६॥

एतौ शब्दौ विकारे निपात्येते। कंसार्थं कंसीयम्। तस्य विकारः कांस्यम्। परश्वर्थं परशव्यम् तस्य विकारः पारशवः।

[कंसीयपरशव्ययोर्यञञौ लुक् च। पा० ४।३।१६८, स० ४।४।४३]

**न द्विः** ॥१२७॥

विकारावयवयोर्द्विरणादयो न भवन्ति। कापोतस्य विकारः कापोतः। कथं तर्हि कापोतो रसः कापित्थो रस इति? विकारेऽपि प्रकृतिशब्दो दृश्यते। तत्र विकारवृत्तेः प्रकृतेरुत्पत्तिर्भविष्यति। विकारविकारोऽपि वा विकार एव। अवयवावयवोऽपि वावयव एव। कथं द्रौवयम्। तस्य स्वमिति [८५] भविष्यति। कथं गौमयम्? नैष विकारात्।

[न द्विरद्रुवय-गोमय-फलेभ्यः। स० ४।४।४४]

इति चान्द्रे व्याकरणे तृतीयस्य तृतीयः पादः समाप्तः।

**प्राग् यतष्ठक्** ॥१॥

प्राग् यत्संशब्दनाद् [७६] येऽर्थास्तत्र ठग् वेदितव्यम्।

[प्राग्वहतेष्ठक्। पा० ४।४।१, स० ४।४।४५]

**तेन जितं जयति दीव्यति खनति** ॥२॥

तृतीयान्ताज्जितादिष्वर्थेषु ठग् भवति। अक्षैर्जितम् आक्षिकम्। शालाकिकम्। अक्षैर्जयति दीव्यति वा आक्षिकः। शालाकिकः। खनित्रेण खनति खानित्रिकः। कौद्दालिकः। देवदत्तेन जितम्, अङ्गुल्या खनतीति न भवति तदर्थाप्रतीतेः।

[तेन दीव्यति खनति जयति जितम्। पा० ४।४।२, तेन जितं करणात्। जयति दीव्यति खनति। स० ३।४।४६-४७]

**संस्कृते ॥३॥**

तृतीयान्तात् संस्कृतेऽर्थे ठग् भवति। दध्ना संस्कृतं दाधिकम् मारीचिकम्।

[संस्कृतम्। पा० ४।४।३, स० ४।४।४८]

**कुलत्थकोपान्तादण् ॥४॥**

कुलत्थात् ककारोपान्ताच्च तेन संस्कृते अण् भवति। कौलत्थम्। तैन्तिलीकम्, दार्दरूकम्।

[कुलत्थकोपधादण्। पा० ४।४।४, स० ४।४।४९]

**तरति ॥५॥** [पा० ४।४।५, स० ४।४।५०]

तृतीयान्तात्तरतीत्येतस्मिन्नर्थे ठग् भवति। औडुपिकः। गौपुच्छिकः।

**द्व्यज्नौभ्यां ठन् ॥६॥** [स० ४।४।५२]

द्व्यचो नौशब्दाच्च तेन तरतीत्यतस्मिन्नर्थे ठन् भवति। घटिकः। प्लविकः। नाविकः नाविका।

[नौद्व्यचष्ठन्। पा० ४।४।७]

**चरति ॥७॥** [पा० ४।४।८, स० ४।४।५३]

तृतीयान्ताच्चरतीत्येतस्मिन्नर्थे ठग् भवति। घाण्टिकः। शाकटिकः। शार्ङ्गवेरिकः। भक्षणार्थमपि केचिद्वर्णयन्ति।

[चरतिर्भक्षणे गतौ च वर्तते। काशिका ४।४।८]

**पर्पादिभ्यः ष्ठन् ॥८॥** [पा० ४।४।१०]

पर्पादिभ्यस्तेन चरतीत्यस्मिन्नर्थे ष्ठन् भवति। पर्पिकः पर्पिकी। अश्विकः अश्विकी॥ पर्प। अश्वत्थ। रथ। जाल। व्यास। व्याल। पाद। आकर्ष।

[पर्पाश्वाश्वत्थ-रथ-जाल-व्याल-व्यास-पादेभ्यः ष्ठन्। स० ४।४।५५]

**श्वगणाद्वा ॥९॥**

श्वगणात्तेन चरतीत्येतस्मिन्नर्थे ष्ठन् वा भवति। श्वगणिकः श्वगणिकी, श्वागणिकः श्वागणिकी।

[श्वगणाद् ठञ् च। पा० ४।४।११, स० ४।४।५६]

**वेतनादिभ्यो जीवति** ॥१०॥ [पा० ४।४।१२]

वेतनादिभ्यस्तेन जीवतीत्येतस्मिन्नर्थे ठग् भवति। वैतनिकः वाहिकः ॥ वेतन। वाह। अर्धवाह। वेश। उपवेश। प्रेषण। सुख। शय्या। शक्ति। हय। उपहस्त। पाद। उपस्थान। धनुस्। दण्ड। धानुष्कः, दाण्डिकः, धानुर्दण्डिकः।

[वेतन-वाहाऽर्धवाह पाद-प्रेषण-सुख-शय्या-स्फिग्-वेश-शक्तिभ्यो जीवति। उपाद् देशवेशहस्तस्थानेभ्यः। व्यस्ताच्च धनुर्दण्डात्। स० ४।४।५७-५९]

**वस्नक्रयविक्रयाट्ठन्** ॥११॥ [पा० ४।४।१३]

वस्नादिभ्यस्तेन जीवतीत्येतस्मिन्नर्थे ठन् भवति। वस्निकः क्रयिक. विक्रयिकः क्रयविक्रयिकः।

[क्रयविक्रयाट् ठन्। वस्नात्। स० ४।४।६०-६१]

**छश्चायुधात्** ॥१२॥

आयुधात् तेन जीवतीत्येतस्मिन्नर्थे छो भवति ठंश्च। आयुधीयः आयुधिकः आयुधिका।

[आयुधाच्छ च। पा० ४।४।१४, स० ४।४।६२]

**व्रातात् खञ्** ॥१३॥ [स० ४।४।६३]

नानाजातीया अनियतवृत्तयः उत्सेधजीविनः सङ्घा व्राताः, तेषां कर्मापि व्रातम्। ततस्तेन जीवतीत्येतस्मिन्नर्थे खञ् भवति। व्रातीनः।

[व्रातेन जीवति। पा० ५।२।२१]

**हरत्युत्सङ्गादिभ्यः** ॥१४॥ [पा० ४।४।१५]

उत्सङ्गादिभ्यस्तेन हरतीत्येतस्मिन्नर्थे ठग् भवति। औत्सङ्गिकः औद्वाहिकः ॥ उत्सङ्ग। उद्वाह। उत्तु(डु?)प। उत्पुट। पिटक। पिटाक।

[उत्सङ्गोडुपोट्पोत्पुट-पिटक-पिटाकेभ्यो हरति। स० ४।४।६४]

**भस्त्रादिभ्यः ष्ठन्** ॥१५॥ [पा० ४।४।१६]

भस्त्रादिभ्यस्तेन हरतीत्यतस्मिन्नर्थे ष्ठन् भवति। भस्त्रिकः

भस्त्रिकी। भरटिकः भरटिका ॥ भस्त्रा। भरट। भरण[1]। शीर्षभार। अंसभार[2]।

[भस्त्रा-भरट-भरण-शीर्षभारांऽसभारेभ्यः ष्ठन्। स० ४।४।६५]

**विवधवीवधाद्वा** ॥१६॥[स० ४।४।६६]

विवधवीवधाभ्यां तेन हरतीत्येतस्मिन्नर्थे ष्ठन् भवति वा। विवधिकः विवधिकी। वीवधिकः वीवधिकी। वैवधिकः वैवधिकी।

[विभाषा विवधवीवधात्। पा० ४।४।१७]

**अण् कुटिलिकायाः** ॥१७॥ [पा० ४।४।१८, स० ४।४।६७]

कुटिलिकायास्तेन हरतीत्येतस्मिन्नर्थेऽण् भवति। कौटिलिकः।

**निर्वृत्तेऽक्षद्यूतादिभ्यः** ॥१८॥ [पा० ४।४।१९]

अक्षद्यूतादिभ्यस्तृतीयान्तेभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठग् भवति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम्। जाङ्घाप्रहृतिकम्॥ अक्षद्यूत। जङ्घाप्रहृत। पादस्वेदन। कण्टकमर्दन। गतागत। यातोपयात। गतानुगत।

[अक्षद्यूत-गतानुगत-गतागत-यातोपयात-पादस्वेदन-कण्टकमर्दनेभ्यो निर्वृत्ते। जङ्घायाः प्रहृतप्रहाराभ्याम्। स० ४।४।६८-६९]

**भावादिमप्** ॥१९॥ [स० ४।४।७०]

भाववचनात्तेन निर्वृत्त इत्येतस्मिन्नर्थे इमब् भवति। पाकिमम् सेकिमम् कुट्टिमम्।

[भाव इति प्रकृत्येमब् वक्तव्य कुट्टिमा भूमिः सेकिमोऽसिरित्येवमर्थम्। पा० ४।४।२० भाष्यम्]

**त्रेः** ॥२०॥ [स० ४।४।७१]

त्र्यन्तात् तेन निर्वृत्त इमब् भवति नित्यं पुनर्विधानात्। कृत्रिमम्। पवित्रमम्।

[क्त्रेर्मम् नित्यम्। पा० ४।४।२०]

[1] हरण—MS.

[2] अंसहार—MS.

**अपमित्य कक्** ॥२१॥ [अपमित्यात् कक् । स० ४।४।७२]

अपमित्यशब्दान्निर्वृत्ते ठग् भवति । आपमित्यकम् । कथं याचितकम् ? कुत्सायां कन् भवति ।

[अपमित्ययाचिताभ्यां कक्कनौ । पा० ४।४।२१, याचितात् कन् । स० ४।४।७३]

**संसृष्टे** ॥२२॥ [पा० ४।४।२२, संसृष्टम् । स० ४।४।७४]

तृतीयान्तात् संसृष्टे ठग् भवति । दध्ना संसृष्टं दाधिकम् । पैप्पलिकम् ।

**चूर्णादिनिः** ॥२३॥ [पा० ४।४।२३, स० ४।४।७५]

चूर्णात् तेन संसृष्ट इनिर्भवति । चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः ।

**लवणाल्लुक्** ॥२४॥ [पा० ४।४।२४, स० ४।४।७६]

लवणात् संसृष्टे विहितस्य लुग् भवति । लवणः सूपः, लवणा यवागूः ।

**मुद्गादण्** ॥२५॥ [पा० ४।४।२५, स० ४।४।७७]

मुद्गात् संसृष्टेऽण् भवति । मौद्ग ओदनः । कथं दध्ना उपसिक्त ओदनः दाधिकः सार्पिष्क इति । संसृष्टे [२२] इत्येव सिद्धम् ।

[व्यञ्जनैरुपसिक्ते । पा० ४।४।२६, उपसिक्तं व्यञ्जनेभ्यः । स० ४।४।७८]

**ओजःसहोऽम्भसा वर्तते** ॥२६॥ [पा० ४।४।२७, स० ४।४।७९]

एभ्यस्तृतीयान्तेभ्यो वर्तत इत्येतस्मिन्नर्थे ठग् भवति । ओजसा वर्तते औजसिकः । साहसिकः । आम्भसिकः ।

**तं प्रत्यनोरीपलोमकूलात्** ॥२७॥

द्वितीयान्तेभ्यः प्रत्यनुपूर्वेभ्य ईपलोमकूलेभ्यो वर्तत इत्येतस्मिन्नर्थे ठग् भवति । प्रतीपं वर्तते प्रातीपिकः । क्रियाविशेषणत्वाद् द्वितीया । आन्वीपिकः । प्रातिलोमिकः आनुलोमिकः । प्रातिकूलिकः आनुकूलिकः ।

[तत् प्रत्यनुपूर्वमीपलोमकूलम् । पा० ४।४।२८, तं प्रत्यनुभ्यामीपलोमकूलेभ्यः । स० ४।४।८०]

भस्त्रिकी । भरटिकः भरटिका ॥ भस्त्रा । भरट । भरण[1] । शीर्षभार । अंसभार[2] ।

[भस्त्रा-भरट-भरण-शीर्षभारांसभारेभ्यः ष्ठन् । स० ४।४।६५]

**विवधवीवधाद्वा** ॥१६॥[स० ४।४।६६]

विवधवीवधाभ्यां तेन हरतीत्येतस्मिन्नर्थे ष्ठन् भवति वा । विवधिकः विवधिकी । वीवधिकः वीवधिकी । वैवधिकः वैवधिकी ।

[विभाषा विवधवीवधात् । पा० ४।४।१७]

**अण् कुटिलिकायाः** ॥१७॥ [पा० ४।४।१८, स० ४।४।६७]

कुटिलिकायास्तेन हरतीत्येतस्मिन्नर्थेऽण् भवति । कौटिलिकः ।

**निर्वृत्तेऽक्षद्यूतादिभ्यः** ॥१८॥ [पा० ४।४।१९]

अक्षद्यूतादिभ्यस्तृतीयान्तेभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठग् भवति । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम् । जाङ्घाप्रहृतिकम् ॥ अक्षद्यूत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । गतानुगत ।

[अक्षद्यूत-गतानुगत-गतागत-यातोपयात-पादस्वेदन-कण्टकमर्दनेभ्यो निर्वृत्ते । जङ्घायाः प्रहृतप्रहाराभ्याम् । स० ४।४।६८-६९]

**भावादिमप्** ॥१९॥ [स० ४।४।७०]

भाववचनात्तेन निर्वृत्त इत्येतस्मिन्नर्थे इमब् भवति । पाकिमम् सेकिमम् कुट्टिमम् ।

[भाव इति प्रकृत्येमब् वक्तव्य. कुट्टिमा भूमिः सेकिमोऽसिरित्येवमर्थम् । पा० ४।४।२० भाष्यम्]

**त्रेः** ॥२०॥ [स० ४।४।७१]

त्रन्तात् तेन निर्वृत्त इमब् भवति नित्यं पुनर्विधानात् । कृत्रिमम् । पवित्रिमम् ।

[त्रेर्मब् नित्यम् । पा० ४।४।२०]

---

[1] हरण—MS.

[2] अंसहार—MS.

**अपमित्य कक्** ॥२१॥ [अपमित्यात् कक् । स० ४।४।७२]

अपमित्यशब्दान्निर्वृत्ते ठग् भवति । आपमित्यकम् । कथं याचितकम् ? कुत्सायां कन् भवति ।

[अपमित्ययाचिताभ्यां कक्कनौ । पा० ४।४।२१, याचितात् कन् । स० ४।४।७३]

**संसृष्टे** ॥२२॥ [पा० ४।४।२२, संसृष्टम् । स० ४।४।७४]

तृतीयान्तात् संसृष्टे ठग् भवति । दध्ना संसृष्टं दाधिकम् । पैप्पलिकम् ।

**चूर्णादिनिः** ॥२३॥ [पा० ४।४।२३, स० ४।४।७५]

चूर्णात् तेन संसृष्ट इनिर्भवति । चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः ।

**लवणाल्लुक्** ॥२४॥ [पा० ४।४।२४, स० ४।४।७६]

लवणात् संसृष्टे विहितस्य लुग् भवति । लवणः सूपः, लवणा यवागूः ।

**मुद्गादण्** ॥२५॥ [पा० ४।४।२५, स० ४।४।७७]

मुद्गात् संसृष्टेऽण् भवति । मौद्ग ओदनः । कथं दध्ना उपसिक्त ओदनः दाधिकः सार्पिष्क इति । संसृष्टे [२२] इत्येव सिद्धम् ।

[व्यञ्जनैरुपसिक्ते । पा० ४।४।२६, उपसिक्तं व्यञ्जनेभ्यः । स० ४।४।७८]

**ओजःसहोऽम्भसा वर्तते** ॥२६॥ [पा० ४।४।२७, स० ४।४।७९]

एभ्यस्तृतीयान्तेभ्यो वर्तत इत्येतस्मिन्नर्थे ठग् भवति । ओजसा वर्तते औजसिकः । साहसिकः । आम्भसिकः ।

**तं प्रत्यनोरीपलोमकूलात्** ॥२७॥

द्वितीयान्तेभ्यः प्रत्यनुपूर्वेभ्य ईपलोमकूलेभ्यो वर्तत इत्येतस्मिन्नर्थे ठग् भवति । प्रतीपं वर्तते प्रातीपिकः । क्रियाविशेषणत्वाद् द्वितीया । आन्वीपिकः । प्रातिलोमिकः आनुलोमिकः । प्रातिकूलिकः आनुकूलिकः ।

[तत् प्रत्यनुपूर्वमीपलोमकूलम् । पा० ४।४।२८, तं प्रत्यनुभ्यामीपलोम-

परेर्मुखपार्श्वात् ॥२८॥ [०पार्श्वाभ्याम् । स० ४।४।८१]

परेः पराभ्यां मुखपार्श्वाभ्यां द्वितीयान्ताभ्यां वर्तत इत्येतस्मिन्नर्थे ठग् भवति । परिमुखं वर्तते पारिमुखिकः । पारिपार्श्विकः ।

[परिमुखं च । पा० ४।४।२९, चकारोऽनुक्तसमुच्चयार्थः । पारिपार्श्विकः । काशि०]

उञ्छति ॥२९॥ [पा० ४।४।३२, स० ४।४।८२]

द्वितीयान्तादुञ्छतीत्येतस्मिन्नर्थे ठग् भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः ।

रक्षति ॥३०॥ [पा० ४।४।३३, स० ४।४।८३]

द्वितीयान्ताद्रक्षतीत्येतस्मिन्नर्थे ठग् भवति । समाजं रक्षति सामाजिकः । सान्निवेशिकः ।

शब्ददर्दुरं करोति ॥३१॥ [पा० ४।४।३४, स० ४।४।८४]

शब्ददर्दुराभ्यां करोतीत्येतस्मिन्नर्थे ठग् भवति । शाब्दिकः । दार्दुरिकः ।

पक्षिमत्स्यमृगान् हन्ति ॥३२॥ [पा० ४।४।३५]

पक्ष्यादिभ्यो द्वितीयान्तेभ्यो हन्तीत्येतस्मिन्नर्थे ठग् भवति । पाक्षिकः मात्स्यिकः[1] मार्गिकः । अयंप्रधानस्याग्निर्देशस्य तत्पर्यायविशेषेभ्योऽपि । शाकुनिकः श्यैनिकः ; मैनिकः शाफरिकः ; हारिणिकः शौकरिकः ।

[झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् । पा० १।१।६८।८ । झिन्निर्देशः कर्तव्यः । ततो वक्ष्यामि तस्य च ग्रहणं भवति तद्विशेषाणां चेति । किं प्रयोजनम् ? मत्स्याद्यर्थम् । पक्षिमत्स्यमृगान् हन्ति । मात्स्यिकः । तद्विशेषाणाम् । शाफरिकः शाकुनिकः । पर्यायवचनानां न भवति । अजिह्मान् हन्तीति । अस्यैकस्य पर्यायवचनस्येष्यते । मीनान् हन्ति मैनिकः । भाष्यम् । पक्षिमत्स्यमृगाण्याद्धन्ति । स० ४।४।८५]

परिपन्थं तिष्ठति च ॥३३॥ [स० ४।४।८६]

---

[1] मात्स्यिक — MS.

परिपन्थाद् द्वितीयान्तात्तिष्ठति हन्तीत्यनयोरर्थयोष्ठग् भवति। पारिपन्थिकः। अस्मादेव वचनात् परिपन्थशब्दोऽपि साधुः।

[ परिपन्थं च तिष्ठति। पा० ४।४।३६ ]

**माथान्तपदव्यनुपदाक्रन्दं धावति ॥३४॥** [ ०क्रन्दान्। स० ४।४।८७ ]

माथान्तात् पदव्यादिभ्यश्च धावतीत्येतस्मिन्नर्थे ठग् भवति। दाण्डमाथिकः शौल्कमाथिकः पादविकः आनुपादिकः आक्रन्दिकः।

[माथोत्तरपदपदव्यनुपदं धावति। आक्रन्दाट् ठञ् च। पा० ४।४।३७-३८]

**पदान्तप्रतिकण्ठाथ ललामं गृह्णाति ॥३५॥** [ स० ४।४।८८ ]

पदोत्तरपदात् प्रतिकण्ठादिभ्यश्च गृह्णातीत्येतस्मिन्नर्थे ठग् भवति। पूर्वपदं गृह्णाति पौर्वपदिकः। प्रातिकण्ठिकः आर्थिकः लालामिकः।

[ पदोत्तरपदं गृह्णाति। प्रतिकण्ठार्थललामं च। पा० ४।४।३९-४० ]

**गर्ह्ये ॥३६॥** [ गर्ह्यम्। स० ४।४।८९ ]

द्वितीयान्ताद् गृह्णातीत्येतस्मिन्नर्थे गर्ह्येऽभिधेये ठग् भवति। द्विगुणं गृह्णाति द्वैगुणिकः। त्रैगुणिकः।

[ प्रयच्छति गर्ह्यम्। पा० ४।४।३०, यदसावल्पं दत्त्वा बहु गृह्णाति तद् गर्ह्यम्। भाष्यम्। ]

**वृद्धेर्वृधुप् ॥३७॥** [ स० ४।४।९० ]

वृद्धेष्ठक्सन्नियोगेन वृधुप् आदेशो भवति। वृद्धिं गृह्णाति वार्धुपिकः।

[ वृद्धेर्वृधुषिभावः। पा० ४।४।३०।२ ]

**दशैकादशकुसीदात् ष्ठन् ॥३८॥** [ ०कुसीदाभ्यां ०। स० ४।४।९१ ]

दशैकादशशब्दात् कुसीदाच्च गृह्णातीत्येतस्मिन्नर्थे ष्ठन् भवति। दशानामेकादशं गृह्णाति दशैकादशिकः दशैकादशिकी। कुसीदिकः कुसीदिकी।

[ कुसीददशैकादशात् ष्ठन्ष्ठचौ। पा० ४।४।३१ ]

**धर्माधर्मं चरति ॥३९॥** [ स० ४।४।९२ ]

आभ्यां चरतीत्येतस्मिन्नर्थे ठग् भवति। धार्मिकः आधर्मिकः।

[धर्मं चरति। पा० ४।४।४१, अधर्माच्च। ४।४।४१।१]

**प्रतिपथमेति ठंश्च** ॥४०॥ [पा० ४।४।४२, स० ४।४।९३]

प्रतिपथाद् द्वितीयान्तादेतीत्येतस्मिन्नर्थे ठग् भवति, ठंश्च। प्रतिपथिकः प्रातिपथिकः।

**समाजार्थात् समवैति** ॥४१॥

समाजार्थाद् द्वितीयान्तात् समवैतीत्येतस्मिन्नर्थे ठग् भवति। सामाजिकः सामवायिकः सामूहिकः।

[समवायान् समवैति। पा० ४।४।४३, स० ४।४।९४]

**परिषदो ण्यः** ॥४२॥ [पा० ४।४।४४, स० ४।४।९५]

परिषच्छब्दात् समवैतीत्येतस्मिन्नर्थे ण्यो भवति। पारिषद्यः।

**सेनाया वा** ॥४३॥ [पा० ४।४।४५, स० ४।४।९६]

सेनायाः समवैतीत्येतस्मिन्नर्थे ण्यो वा भवति। सैन्यः सैनिकः। कथं सैन्यमिति ? चातुर्वर्ण्यादित्वात्।

**लालाटिककौक्कुटिकौ** ॥४४॥ [स० ४।४।९७]

एतौ शब्दौ निपात्येते। ललाटं पश्यति लालाटिकः सेवकः। ललाटदर्शनेन दूरावस्थान लक्ष्यते तेनानुपश्लेषः कार्येषु चानुपस्थानम्। य. सेवकः स्वामिनः कार्येषु न प्रयुज्यते[1] स लालाटिकः। ललाटमेव वा कोपप्रसादचिह्नसंलक्षणाय पश्यतीति लालाटिकः। कुक्कुटीम् पश्यति कौक्कुटिकः। कुक्कुटीशब्देन कुक्कुटीपातो लक्ष्यते, तेन देशस्याल्पता। योऽपि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स कौक्कुटिकः। योऽपि यातथाविधमात्मानं तथाविधं सन्दर्शयति [स] कौक्कुटिकः। कुक्कुटीति दाम्भिकानां चेष्टोच्यते। तामाचरति कौक्कुटिकः। सोऽयमतिमहानर्थभारो निपातनाल्लभ्यते।

[1] Should we read सज्जते for प्रयुज्यते ?

[संज्ञायां ललाटकुक्कुट्यौ पश्यति। पा० ४।४।४६]

**परदारादीन् गच्छति** ॥४५॥ [स० ४।४।९८]

परदारादिभ्यो द्वितीयान्तेभ्यो गच्छतीत्येस्मिन्नर्थे ठग् भवति। परदारान् गच्छति पारदारिकः। गौरुतल्पिकः।

[गच्छतौ परदारादिभ्यः। पा० ४।४।१।४]

**सुस्नातादीन् पृच्छति** ॥४६॥ [स० ४।४।९९]

सुस्नातादिभ्यो द्वितीयान्तेभ्यः पृच्छतीत्येतस्मिन्नर्थे ठग् भवति। सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः सौखशायिकः सौखशय्यिकः।

[पृच्छतौ सुस्नातादिभ्यः। पा० ४।४।१।३]

**प्रभूतादीनाह** ॥४७॥ [स० ४।४।१००]

प्रभूतादिभ्यो द्वितीयान्तेभ्य आहेत्यस्मिन्नर्थे ठग् भवति। प्रभूतम् आह प्राभूतिकः। पार्याप्तिकः।

[आहौ प्रभूतादिभ्यः। पा० ४।४।१।२]

**माशब्द इत्यादिभ्यः** ॥४८॥ [स० ४।४।१०१]

माशब्द इत्येवमादिभ्य आहेत्यस्मिन्नर्थे ठग् भवति। माशब्द इत्याह माशब्दिकः। नित्यः शब्द इत्याह नैत्यशब्दिकः। कार्यः शब्द इत्याह कार्यशब्दिकः। वाक्यादिदं ठको विधानम्।

[ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम्। पा० ४।४।१।१]

**तस्य धर्म्यम्** ॥४९॥ [पा० ४।४।४७, स० ४।४।१०२]

षष्ठ्यन्ताद्धर्म्यमित्यस्मिन्नर्थे ठग् भवति। शुल्कशालाया धर्म्यम् शौल्कशालिकम्। आपणिकम्।

**ऋमहिष्यादिभ्योऽण्** ॥५०॥

ऋवर्णान्तान्महिष्यादिभ्यश्च तस्य धर्म्यमित्यस्मिन्नर्थेऽण् भवति। होतुर्धर्म्यम् हौत्रम् औद्गात्रम् नारम्। माहिषम् प्राजापतम्॥ महिषी। प्रजापति। विलेपिका। प्रलेपिका। अनुलेपिका। पुरोहित। मणिपाली। अनुवाक। यजमान। नर।

[अण् महिष्यादिभ्यः । ऋतोऽञ् । पा० ४।४।४८-४९, नृनराभ्यामञ्-वचनम् । ४।४।४९।१ ऋतोऽञ् । महिषी-प्रजावती-यजमान-नराऽनुचारक-पुरोहित-होतृ-मणिपालीभ्योऽण् । ध्यनुप्रेभ्यो लेपिकायाः । स० ४।४।१०५-१०६ ]

**वैशस्त्रवैभाजित्रे ॥५१॥**

विशसितुर्विभाजयितुश्च धर्म्येऽर्थेऽणि इटो णिचश्च लोपो निपात्यते । वैशस्त्रम् वैभाजित्रम् ।

[ विशसितुरिड्लोपश्च । विभाजयितुर्णिलोपश्च । पा० ४।४।४९।२, विशसितृविभाजयित्रोरिण्णिलोपौ च । स० ४।४।१०४ ]

**अवक्रयः ॥५२॥** [ पा० ४।४।५०, स० ४।४।१०७ ]

अवक्रीयतेऽनेनेत्यवक्रयः । क्लृप्तकः पिण्ड उच्यते । तत्र षष्ठ्यन्ताट् ठग् भवति । शुल्कशालाया अवक्रयः शौल्कशालिकः । गौल्मिकः ।

**तदस्य पण्यम् ॥५३॥** [पा० ४।४।५१, स० ४।४।१०८]

प्रथमान्तात् पण्यवाचिनोऽस्येत्यस्मिन्नर्थे ठग् भवति । अपूपाः पण्यमस्य आपूपिकः ।

[ तदस्य पण्यम् । पा० ४।४।५१, स० ४।४।१०८ ]

**लवणाट्ठञ् ॥५४॥** [ पा० ४।४।५२, स० ४।४।१०९ ]

लवणात्तदस्य पण्यमित्यस्मिन्नर्थे ठञ् भवति । लवणं पण्यमस्य लावणिकः । स्वरे विशेषः ।

**किसरादिभ्यः ष्ठन् ॥५५॥** [ पा० ४।४।५३ ]

किसरादिभ्यस्तदस्य पण्यमित्यस्मिन्नर्थे ष्ठन् भवति । किसराः पण्यमस्य किसरिकः किसरिकी । नलदिकः नलदिकी ॥ किसर । नलद । स्थगल । तगर । गुग्गुलु । उशीर । हरिद्रा । हरिद्रु । पर्णी ।

[किसर-तगरोशीर-हरिद्रा-गुग्गुलु-स्थगल-नलद-पर्णीभ्यः ष्ठन् । स० ४।४।११०]

**शलालुनो वा ॥५६॥** [ स० ४।४।१११ ]

शलालुनस्तदस्य पण्यमित्यस्मिन् विषये ष्ठन् वा भवति । शलालुकः शालालुकः ।

[ शलालुनोऽन्यतरस्याम् । पा० ४।४।५४ ]

**शिल्पम्** ॥५७॥

प्रथमान्तादस्येत्यस्मिन् विषय ठग् भवति यत्तत् प्रथमान्तं शिल्पं चेत्तद् भवति। मृदङ्गः शिल्पमस्य मार्दङ्गिकः पाणविकः। मृदङ्गवादने मृदङ्गशब्दस्तद्विषयत्वात्।

[तदस्य शिल्पम्। पा० ४।४।५५, शिल्पमृदङ्गादिभ्यो वादनादिवृत्तिभ्यः। पा० ४।४।११२]

**मड्डुकझर्झरादण् वा** ॥५८॥ [०राभ्यामण् च। स० ४।४।११३]

आभ्यां तदस्य शिल्पमित्यस्मिन् विषयेऽण् वा भवति। माड्डकः माड्डुकिकः। झार्झरः झार्झरिकः।

[मड्डुकझर्झरादणन्यतरस्याम्। पा० ४।४।५६]

**प्रहरणम्** ॥५९॥ [पा० ४।४।५७, स० ४।४।११४]

प्रथमान्तादस्येत्यस्मिन्नर्थे ठग् भवति यत्तत् प्रथमान्तं प्रहरणं चेद्भवति। तोमरं प्रहरणमस्य तौमरिकः। धानुष्कः। पारश्वधिकः।

**शक्तियष्टेष्टीकक्** ॥६०॥

शक्तियष्टिभ्यां तदस्य प्रहरणमित्यस्मिन् विषये टीकग् भवति। शाक्तीकः याष्टीकः। शाक्तीकी याष्टीकी।

[शक्तियष्ट्योरीकक्। पा० ४।४।५९, नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्। ४।१।१५ भा०, शक्तियष्टिभ्यां टीकक्। स० ४।४।११६]

**अस्तिनास्तिदिष्टमिति मतिः** ॥६१॥ [स० ४।४।११६]

अस्त्यादिभ्य इति मतिरस्येत्यस्मिन् विषये ठग् भवति। अस्तीति मतिरस्य आस्तिकः। नास्तिकः। दैष्टिकः। दिष्टं दैवम्।

[अस्तिनास्तिदिष्टं मतिः। पा० ४।४।६०]

**शीलम्** ॥६२॥ [पा० ४।४।६०]

प्रथमान्तादस्येत्यस्मिन्नर्थे ठग् भवति यत्तत् प्रथमान्तं शीलं चेद्भवति। अपूपाः शीलमस्य तद्विषयत्वेन तदुपचारात्, अपूपभक्षणं वा तच्छब्देनोच्यते। आपूपिकः शाष्कुलिकः।

[शीलमपूपादिभ्यो भक्षणादिवृत्तिभ्यः। स० ४।४।११८]

छत्त्रादिभ्यो णः ॥६३॥ [ पा० ४।४।६२ ]

छत्त्रादिभ्यस्तदस्य शीलमित्यस्मिन् विषये णो भवति। छत्त्रं शीलमस्य छात्त्रः। छत्त्रमिव गुरोः सुखहेतुरित्यर्थः ॥ छत्त्र। शिक्षा। बुभुक्षा। भिक्षा। पुरोद। स्था। स्थाशब्दोऽन्तःप्रादिपूर्वो गृह्यते। अन्तःस्था संस्था अवस्था उपस्था। चुरा। उदस्थान। कृषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। विशिखा।

[छत्त्र-सत्याऽनृत-विशिखाभ्यो गुरूपसदनादिवृत्तिभ्यो णः। अङ्‌: स्थः। शिक्षा-भिक्षा-भक्षा-चुरा-तपः-कर्म-कृष्युपस्थान-प्ररोह-विश्वधादिभ्यः। स० ४।४।११९-१२१]

कर्माध्ययने वृत्तम् ॥६४॥ [ पा० ४।४।६३, स० ४।४।१२२ ]

प्रथमान्तादस्येत्यस्मिन्नर्थे ठग् भवति, यत्तत् प्रथमान्तं कर्म चेदध्ययनविषये वृत्तं भवति। एकमन्यत् कर्म स्खलितरूपम् अध्ययने वृत्तम् अस्य एकान्यिकः द्वैयन्यिकः। अध्ययन इति किम्? एकमन्यत् कर्म स्खलितं गमने वृत्तमस्य।

बह्वच्पूर्वपदाट् ठच् ॥६५॥ [ पा० ४।४।६४, स० ४।४।१२३ ]

बह्वच्पूर्वपदात् तदस्य कर्माध्ययने वृत्तमित्यस्मिन् विषये ठञ् भवति। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः।

हिता भक्षाः ॥६६॥ [ हितं ०। पा० ४।४।६५ ]

प्रथमान्तेभ्यो भक्षेभ्योऽस्येत्यस्मिन् विषये ठग् भवति हिताश्चेत्ते भवन्ति। अपूपा हिता अस्य आपूपिकः शाष्कुलिकः।

[हितं भक्षं तदस्मै। स० ४।४।१२४ ]

दीयते नियुक्तम् ॥६७॥ [ स० ४।४।१२५ ]

प्रथमान्तादस्मैत्यस्मिन्नर्थे ठग् भवति, यत्तत् प्रथमान्तं नियोगतो दीयते चेत्। अग्रभोजनमस्य दीयते नियुक्तम्। आग्रभोजनिकः आपूपिकः।

[ तदस्मै दीयते नियुक्तम्। पा० ४।४।६६ ]

ओदनाट् टट् ॥६८॥

ओदनात् तदस्य दीयते नियुक्तमित्यस्मिन् विषय ठञ् भवति। औदनिकः औदनिकी। कथम् श्राणिकः श्राणिकी मांसौदनिकः मांसौदनिकी मांसिकः मांसिकीति? पूर्वेण सिद्धम्। स्वरं तु वक्ष्यामः।

[श्राणामांसौदनाट् टिठन्। पा० ४।४।६७, श्राणामांसमांसौदनौदनेभ्यष्टिकन्। स० ४।४।१२६]

**भक्तादण् वा** ॥६९॥ [भक्तादण् च। स० ४।४।१२७]

भक्तात् तदस्य दीयते नियुक्तमित्येतस्मिन् विषयेऽण् भवति वा। भाक्तः भाक्तिकः।

[भक्तादणन्यतरस्याम्। पा० ४।४।६८]

**तत्र नियुक्तम्** ॥७०॥ [० क्तः। पा० ४।४।६९, स० ४।४।१२८]

सप्तम्यन्तान्नियुक्तमित्यस्मिन् विषये ठग् भवति। शौल्कशालिकः दौवारिकः।

**अगारान्ताट्ठन्** ॥७१॥ [पा० ४।४।७०, स० ४।४।१२९]

तत्र नियुक्तमित्यस्मिन् विषयेऽगारान्ताट् ठन् भवति। देवागरिकः।

**अदेशकालादधीते** ॥७२॥ [स० ४।४।१३०]

प्रतिषिद्धदेशकालवाचिनः सप्तम्यन्तादधीत इत्येतस्मिन्नर्थे ठग् भवति। श्मशानेऽधीते श्माशानिकः। चातुर्दशिकः। अदेशकालादिति किम्? स्रुघ्नेऽधीते पूर्वाह्णेऽधीते।

[अध्यायिन्यदेशकालात्। पा० ४।४।७१]

**कठिनान्तप्रस्तारसंस्थानाद्व्यवहरति** ॥७३॥

कठिनान्तात् प्रस्तारसंस्थानाभ्यां च तत्र व्यवहरतीत्यस्मिन्नर्थे ठग् भवति। वांशकठिनिकः प्रास्तारिकः सांस्थानिकः।

[कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति। पा० ४।४।७२, ० संस्थानेभ्यः०। स० ४।४।७२]

**निकटादिषु वसति** ॥७४॥

निकटादेस्तत्र वसतीत्यस्मिन्नर्थे ठग् भवति। नैकटिको भिक्षुः। श्माशानिकः [आभ्यवकाशिकः] वार्क्षमूलिकः आवसथिकः।

[ निकटे वसति। पा० ४।४।७३, निकट-श्मशान-वृक्षमूलेषु वसति। स० ४।४।१३२, आवसथात् ष्ठल्। पा० ४।४।७४, स० ४।४।१३३]

**सतीर्थ्यः** ॥७५॥

समानतीर्थे वसतीति सतीर्थ्य इति निपात्यते।

[ समानतीर्थे वासी। पा० ४।४।१०७, समानतीर्थाद्यः। स० ४।४।१३४]

**प्राग् घिताद्यत्** ॥७६॥ [पा० ४।४।७५, स० ४।४।१३५ ]

प्राग्घिताद्येऽर्थास्तेष्वर्थेषु यद् वेदितव्यः।

**तद् वहति युगप्रासङ्गात्** ॥७७॥ [० ङ्गाभ्याम्। स० ४।४।१३६]

युगप्रासङ्गाभ्यां तदिति द्वितीयान्ताभ्यां वहतीत्यस्मिन्नर्थे यद् भवति। युगं वहति युग्यः प्रासङ्ग्यः।

[ तद् वहति रथयुगप्रासङ्गम् ४।४।७६]

**धुरो ढक् च** ॥७८॥ [स० ४।४।१३७ ]

धुरं वहतीत्यस्मिन् विषये ढग् भवति यच्च। धौरेयः धुर्यः।

[ धुरो यड्ढकौ। पा० ४।४।७७ ]

**सर्वोत्तरदक्षिणादेः खः** ॥७९॥ [स० ४।४।१३८]

सर्वादिपूर्वाया धुरस्तद्वहतीत्यस्मिन् विषये खो भवति। सर्वधुरं वहति सर्वधुरीणः उत्तरधुरीणः दक्षिणधुरीणः।

[ खः सर्वधुरात्। पा० ४।४।७८। ख इति योगविभागः कर्तव्य इष्टसंग्रहार्थः। उत्तरधुरीणः, दक्षिणधुरीणः। काशिका ]

**एकादेर्लुक् च** ॥८०॥ [स० ४।४।१३९ ]

एकादेर्धुरस्तद्वहतीत्यस्मिन् विषये लुग् भवति यतः, खश्च। एकधुरः एकधुरीणः। कथं शाकटं वहति शाकटो गौरिति। शेषे [३।२।१] इत्येव सिद्धम्। कथम् हालिकः सैरिक इति? तस्य स्वम् [३।३।८५, ८८] इति सिद्धम्।

[ एकधुराल्लुक् च । शकटादण् । हलसीराट् ठक् । पा० ४।४।८०-८१, स० ४।४।१४०-१३१ पा० ४।४।७९ ]

**नाम्नि जन्याः ॥८१॥**

सञ्ज्ञायां जनीशब्दाद्वधूवाचिनस्तद्वहतीत्यस्मिन् विषये यन्निपात्यते बहुवचनञ्च । जनी वहन्ति जन्याः नवोढाया ज्ञातिभृत्या. ।

[ संज्ञायां जन्याः । पा० ४।४।८२, स० ४।४।१४२ ]

**विध्यत्यकरणेन ॥८२॥** [ स० ४।४।१४३ ]

द्वितीयान्ताद्विध्यतीत्यस्मिन्नर्थे यद् भवति न चेत् करणेन व्यधनं भवति। पादौ विध्यन्ति शर्कराः पद्याः । उरस्याः कण्टकाः । अकरणेनेति किम् ? चौरं विध्यति धनुषा । रिपून् विध्यति शक्त्या ।

[ विध्यत्यधनुषा । पा० ४।४।८३ ]

**धनगणं लब्धा ॥८३॥** [ पा० ४।४।८४, स० ४।४।१४४ ]

धनगणाभ्यां लब्धरि यद्भवति । धनं लब्धा धन्यः, गण्यः ।

**अन्नाण्णः ॥८४॥** [ पा० ४।४।८५, स० ४।४।१४५ ]

अन्नाद् द्वितीयान्ताल्लब्धरि णो भवति । आन्नः ।

**वशं गतः ॥८५॥** [ पा० ४।४।८६, स० ४।४।१४६ ]

वशं गतेऽर्थे यद्भवति । वश्यः ।

**पदमस्मिन् दृश्यम् ॥८६॥** [पा० ४।४।८७, स० ४।४।१४७]

पदात् प्रथमान्ताद् दृश्यमस्मिन्नित्यस्मिन्नर्थे यद्भवति । पद्यः कर्दमः ।

**मूलमस्याबर्हि ॥८७॥** [ ४।४।१४८ ]

मूलशब्दात् प्रथमान्तादस्येत्यस्मिन्नर्थे यद् भवति, न तच्चेन् मूलं [ न चेत्तन्मूलं ?] दृढ भवति । मूल्या माषा । मूल्या मुद्गाः । श्लथमूला न सुष्ठु निष्पन्ना इत्यर्थः ।

[ मूलमस्याबर्हि । पा० ४।४।८८ ]

**धेनुष्यागार्हपत्यौ नाम्नि ॥८८॥**

एतौ शब्दौ सञ्ज्ञायां निपात्येते । क्षीरोपयोगाय दत्ताया धेनोर्यद्भवति षुक् च निपात्यते । गृहपतिना संयुक्तेऽग्निविशेषे ञ्यो निपात्यते ।

[ संज्ञायां धेनुष्या । गृहपतिना संयुक्ते ञ्यः । पा० ४।४।८९-९०, स० ४।४।१४९-५० ]

**मूलेनानाम्ये** ॥८९॥ [ स० ४।४।१५१ ]

मूलात्तृतीयान्तादनमनीयेऽर्थे यद् भवति । मूलेनानाम्यं मूल्यम् । अनाम्य इत्यत एव वचनाण्ण्यत् । नाम्नीत्येव । मूलेनानाम्यं काष्ठम् ।

[ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु । पा० ४।४।९१ ]

**वयसा च तुल्ये** ॥९०॥ [ स० ४।४।१५२ ]

वयसो मूलाच्च तृतीयान्तात् समेऽर्थे यद्भवति । वयसा तुल्यः वयस्यः । मूलेन तुल्यः मूल्यः पटः । नाम्नीत्येव । वयसा तुल्यो रिपुः ।

**नौतुलाविषं स्तार्यसम्मितवध्येषु** ॥९१॥ [ स० ४।४।१५३ ]

नावादिभ्यस्तृतीयान्तेभ्यस्तार्यादिष्वर्थेषु यद्भवति । नावा तार्यं नाव्यमुदकम् । तुलया सम्मितं तुल्यम् । असम्मितमपि नाम्नीत्यधिकारात् [८८], दृष्टितुलया वा परिच्छेदात् । विषेण वध्यः विष्यः ।

**सीतया समिते** ॥९२॥ [ स० ४।४।१५४ ]

सीताशब्दात् तृतीयान्तात् समितेऽर्थे यद्भवति । सीतया समितं सीत्यम् । द्विसीत्यम् त्रिसीत्यम् ।

[रथसीताहलेभ्यो यद्विधौ । पा० १।१।७२।१६, सपूर्वापाश्च । सं० ४।४।१५५]

**धर्मेण प्राप्ये** ॥९३॥ [ स० ४।४।१५६ ]

धर्मात् तृतीयान्तात् प्राप्येऽर्थे यद्भवति । धर्म्यः ।

**पथ्यर्थन्यायाचानपेते** ॥९४॥ [ स० ४।४।१५७]

पथ्यादिभ्यो धर्माच्च पञ्चम्यन्तादनपेते यद्भवति । पथोऽनपेतं पथ्यम् । अर्थ्यम् न्याय्यम् धर्म्यम् । नाम्नि [८८] इत्यधिकारात् नियायथादनपेते भेषजमेव पथ्यम्, न ग्रामपथात् ।

[ धर्मपथ्यर्थन्यायादनपेते । पा० ४।४।९२ ]

**छन्दसा निर्मिते** ॥९५॥ [ पा० ४।४।९३, स० ४।४।१५८ ]

छन्दसस्तृतीयान्तान्निर्मितेऽर्थे यद्भवति। छन्दस्यः।

**उरसाण् च ॥९६॥**

उरसस्तृतीयान्तान्निर्मितेऽर्थे अण् भवति, यच्च। औरसः पुत्रः उरस्यः।

[उरसोऽण् च। पा० ४।४।९४, स० ४।४।१५९]

**हृदयस्य प्रिये ॥९७॥** [०प्रियः। पा० ४।४।९५, स० ४।४।१६०]

हृदयात् षष्ठ्यन्तात् प्रियेऽर्थे यद्भवति। हृद्यः। वशीकरणमन्त्रेऽपि प्रियत्वकरणे वैदिकेऽन्यत्र च प्रियत्वमस्त्येवेत्यनेनैव सिद्धम्।

**मतजनयोः करणजल्पयोः ॥९८॥**

मतजनाभ्यां करणजल्पयोरर्थयोर्यद् भवति। मतस्य करणं भावः साधनं वा मत्यम्। जनस्य जल्पो जन्यः।

[मतजनहलात् करणजल्पकर्षेषु। पा० ४।४।९७, मतात् करणे। जनाज्जल्पे। स० ४।४।१६२-१६३]

**हलस्य कर्षे ॥९९॥** [हलात् ०। स० ४।४।१६४]

हलात् षष्ठ्यन्तात् कर्षे भावे साधने वा यद् भवति। हल्यः। द्विहल्यः। विशेषणत्वात् तदन्तस्य विधिः।

**तत्र साधुः ॥१००॥** [पा० ४।४।९८, स० ४।४।१६६]

सप्तम्यन्तात् साधुरित्यस्मिन्नर्थे यद् भवति। कर्मणि साधुः कर्मण्यः शरण्यः सभ्यः। साधुः कुशलो योग्यो हितो वा।

**प्रतिजनादिभ्यः खञ् ॥१०१॥** [पा० ४।४।९९]

प्रतिजनादिभ्यस्तत्र साधुरित्यस्मिन् विषये खञ् भवति। प्रतिजने साधुः प्रातिजनीनः। ऐदंयुगीनः॥ प्रतिजन। इदंयुग। संयुग। परयुग। परकुल। अमुष्यकुल। सर्वजन। विश्वजन। पञ्चजन। महाजन।

[प्रति-पञ्च-महा-सर्व-विश्वेभ्यो जनात् खञ्। समिदंसाधुपरेभ्यो युगात्। परस्यामुष्यपरेभ्य कुलात्। स० ४।४।१६८-१७०]

**भक्ताण्णः ॥१०२॥** [पा० ४।४।१००, स० ४।४।१७१]